नीति । तदग्निहोत्रस्याग्निहोत्रत्वम् । गौर्वा अग्निहोत्रम् । य एवं वेद गौरग्निहोत्रमिति । प्राणापानाभ्यामेवाग्निꣳ समर्धयति । अन्यर्धुकः प्राणापानाभ्यां भवति ॥ १७ ॥ य एवं वेद । [2]तौ वायुरब्रवीत् । अनु मा भजतमिति । यदेव गार्हपत्येऽधिश्रित्याहवनीयमभ्युद्द्रवान् । तेन त्वां प्रीणानित्यब्रूताम् । तस्माद्यद्गार्हपत्येऽधिश्रित्याहवनीय-

रब्रवीत्—युष्माकं मध्ये एकः कस्य फलसिद्धये अहौषीत्? एवमेक एकः कस्य कस्याहौषीत्? प्रत्येकं ब्रूतेति यावत् । 'एकान्याभ्यां' इत्याख्यातस्य निघाताभावः । एकशब्द आद्युदात्तः । 'एकादेश उदात्तेनोदात्तः' इत्येकार उदात्तः । अथाग्निरब्रवीत्—प्राणानामहमहौषं, तन्वा अहौमिति वायुः, चक्षुष इत्यादित्यः । अथ प्रजापतिरब्रवीत्—य एव प्राणानामहौषीत् तस्यैव हुतादियं भजनीति युक्तं, प्राणमूलत्वात्सर्वस्य जीवनस्य । तस्मादग्नेर्हुतादजनीत्युक्तं भवतीत्यर्थः । तस्मादग्निहोत्रं गौरग्नेरेव, अग्नेर्होमोत्पन्नत्वात् । एवं गोरग्निहोत्रत्वं यो वेद स आत्मनः प्राणापानाभ्यामग्निं समर्धयति । ततोऽयं प्राणापानाभ्यां व्यृद्धो न भवति । वृद्धिशीलोऽव्यर्धुकः । छान्दस उकञ् ॥

[2] अथाग्न्यादित्यौ वायुमब्रूतां—यद्गार्हपत्ये होमद्रव्यमधिश्रित्य आहवनीयमभ्युद्द्रवान् अभिवाञ्छन्ति तेन त्वां प्रीणयति । लेट्याडागमः । तस्मादित्यादि गतम् ॥

मभ्युद्द्रवति । वायुमेव तेन प्रीणाति । [3]प्रजापति-
र्देवतास्सृजमानः । अग्निमेव देवतानां प्रथममसृ-
जत । सोऽन्यदालम्भ्यमवित्त्वा ॥४८॥ प्रजापति-
माभि पर्यावर्तत । स मृत्योरबिभेत् । सोऽमुमादि-
त्यमात्मनो निरमिमीत । तꣳहुत्वा पराङ्पर्यावर्त-
त । ततो वै स मृत्युमपाजयत् । अप मृत्युं ज-
यति । य एवं वेद । तस्माद्यस्यैवं विदुषः । उतै-
काहमुत द्व्यहं न जुह्वति । हुतमेवास्य भवति ।

---

[3]प्रजापतिरित्यादि ॥ प्रथमसृष्टोऽग्निः प्रजापतिव्यतिरिक्तं आलम्भ्यं भक्ष्यं अवित्त्वा अलब्ध्वा प्रजापतिमेवात्तुं प्रजापतिमाभिमुख्येन पर्यावर्तत । लभेः 'पोरदुपधात्' इति यत् । 'आङो यि' इति नुम् । अथ प्रजापतिः मृत्योः अग्निदाहजन्मनो भीतः आदित्यमात्मन उत्पाद्य तमग्नये आगच्छते हुत्वा भक्ष्यत्वेन दत्वा तस्मादग्नेः पराङ् अपमृत्युनिवृत्तये पर्यावर्तत तस्मादपागच्छत, ततो मृत्युमपाजयत् प्रजापतिः । एवं वेदिता मृत्युमपजयति । स मृत्युरकालमृत्युः, तत्पार्श्वे अकालमृत्युर्नास्तीत्यर्थः । तस्मादित्यादि । एवमादित्योऽग्निहोत्रद्रव्यं प्रजापतेरासीदिति यो वेद, उत अप्येकाहं न जुहोति अस्य तदपि हुतमेव

असौ ह्यादित्योऽग्निहोत्रम् ॥ ४१ ॥

तनुर्वै वायुरग्निर्भवत्याविंत्त्वा भवत्येकं च ॥ ६ ॥

[1] रौद्रं गर्वि । वायव्यमुपसृष्टम् । आश्विनं दुह्यमानम् । सौम्यं दुग्धम् । वारुणमधिश्रितम् । वैश्वदेवा भिन्दवः । पौष्णमुदन्तम् । सारस्वतं विष्यन्दमानम् । मैत्रꣳ शरः । धातुरुद्वासितम् । बृहस्पतेरुन्नीतम् । सवितुः प्रक्रान्तम् । द्यावापृथिव्यꣳ

---

भवति, अविच्छेदेन हुतं भवति । असौ खल्वादित्योऽग्निहोत्रद्रव्यं, स च सायं नित्यमग्निमनुप्रविशति ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः ।

---

[1] रौद्रं गवीत्यादि ॥ सर्वदेवत्यत्वेन पयस्स्तूयते । तत् दोहात्प्राक् गवि स्थितं रौद्रम् । उपसृष्टं ऊधस्स्थं वायुदेवत्यम् । दुग्धं प्रागधिश्रयणात् । अधिश्रितं अधिश्रितावस्थम् । भिन्दवो बुद्बुदा वैश्वदेवाः । उदन्तं स्थाल्यन्तकाशलकनेनान्यत्र परिवर्तनं पौष्णम् । विष्यन्दमानं स्थाल्यां बिलमतिलङ्घितं विविधं स्यन्दनं सारस्वतम् । शरः स्थासकं मैत्रम् । उद्वासितं अवतारितम् । उन्नीतं स्रुचि गृहीतं बार्हस्पत्यम् । प्रक्रान्तं होमार्थं नेतुमारब्धं सावित्रम् ।

ह्रियमाणम् । ऐन्द्राग्नमुपसन्नम् । अग्नेः पूर्वाऽऽहुतिः । प्रजापतेरुत्तरा । ऐन्द्रꣳ हुतम् ॥ ५० ॥

उद्वासितꣳ सप्त च ॥ ७ ॥

[1] दक्षिणत उप सृजाति । पितृलोकमेव तेन जयति । प्राचीमावर्तयति । देवलोकमेव तेन जयति । उदीचीमावृत्य दोग्धि । मनुष्यलोकमेव तेन जयति । [2] पूर्वौ दुह्याज्ज्येष्ठस्य ज्यैष्ठिनेयस्य । यो वा गतश्रीस्स्यात् । अपरौ दुह्यात्कानि-

---

ह्रियमाणं आहवनीयं प्रति नीयमानं द्यावापृथिव्यम् । उपसन्नं आहवनीयसकाशे सादितं ऐन्द्राग्नम् । पूर्वाऽऽहुतिः सायमग्नेः, प्रातराहुतिरादित्यस्य, उपलक्षणत्वात् । उत्तराऽऽहुतिः प्रजापतेः, तूष्णीकत्वात् 'तूष्णीं वै प्राजापत्यम्' इति । ऐन्द्रं हुतम् ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः.

---

[1] दक्षिणत इत्यादि ॥ विहारस्य दक्षिणतः स्थापयित्वा गां वत्समुपसृजाति । ततः प्राचीं प्राङ्मुखीं आवर्तयाति आगमयति । अथोदीचीमुदङ्मुखीं आहृत्य स्थापयित्वा दोग्धि ॥

[2] पूर्वावित्यादि ॥ अग्रिमौ स्तनौ दुह्यात् ज्येष्ठस्य प्रथमजातस्य ज्यैष्ठिनेयस्य ज्येष्ठाया अपत्यस्य च । 'कल्याण्यादीनामिनङ्'

ष्ठिनेयस्य । यो वा बुभूषेत् ॥ ५१ ॥ [3]न सं मृशाति । पापवस्यसस्य व्यावृत्त्यै । [4]वायव्यं वा एतदुपसृष्टम् । आश्विनं दुह्यमानम् । मैत्रं दुग्धम् । अर्यम्ण उद्वास्यमानम् । त्वाष्ट्रमुन्नीयमानम् । बृहस्पतेरुन्नीतम् । सवितुः प्रक्रान्तम् । द्यावापृथिव्यं ह्रियमाणम् ॥ ५२ ॥ ऐन्द्राग्नमुपसादितम् । सर्वाभ्यो

---

ढक्च । ज्येष्ठाया भगिन्या अपत्यस्य वेत्येके । प्रथमोढाया अपत्यस्येत्यन्ये । यो वा गतश्रीस्स्यात् तस्यापि पूर्वौ स्तनौ दुह्यात् । शुश्रुवान् ग्रामणी राजन्यश्च त्रयो गतश्रियः अपरौ पश्चिमौ स्तनौ दुह्यात् कनिष्ठस्य पश्चाज्जातस्य । कनिष्ठाया अपत्यस्य । पूर्ववदिनङ् । यो वा बुभूषेत् भवितुमिच्छेत् तस्याप्यपरौ स्तनौ दुह्यात् ॥

[3]न संमृशाति हस्ताभ्यां स्तनं न संमृशति प्रस्नवनार्थं पापवस्यसस्य व्यावृत्त्यै । हस्तमर्दनेन प्रस्नावितं यद्याविःक्षरत् पापिष्ठं, संमर्शनं विना वत्सप्रस्नावितं यद्वसीयः पुण्यं तयोस्संसर्गो मा भूदिति दोहमध्ये न संमृशेत् । इतरौ संमृशेदित्येके । पूर्वपाश्चिमावित्यपरे ॥

[4]वायव्यं वा इत्यादि॥ पुनर्वचनमुपसादनान्तस्य हवीरूपस्य सर्वदेवत्यत्वेन स्तुत्यर्थम् । एवमग्निहोत्रं जुहन् सर्वदेवता होमेन तर्पयति यथेत्यादि । यथा खलु तीर्थे तर्पणावसरे तत्तदपेक्षया कण्डूयनतृणग्रहणानपानीयसंनिधापनादिना धेनुं तर्पयति दोग्धा, एवमग्निहोत्री

वा एष देवताभ्यो जुहोति । योऽग्निहोत्रं जुहोति । यथा खलु वै धेनुं तीर्थे तर्पयति । एवमग्निहोत्री यजमानं तर्पयति । तृप्यति प्रजया पशुभिः । प्र सुवर्गं लोकं जानाति । पश्यति पुत्रम् । पश्यति पौत्रम् । प्र प्रजया पशुभिर्मिथुनैर्जायते । यस्यैवं विदुषोऽग्निहोत्रं जुह्वति । य उ चैनदेवं वेद ॥ ५३

बुभूषेद्ध्रियमाणं जायते द्वे च ॥ ८ ॥

त्रयो वै प्रैयमेधा आसन् । तेषां त्रिरेकोऽग्निहोत्रमजुहोत् । द्विरेकः । सकृदेकः । तेषां यस्त्रिर-

धेनुः तदभिमतसंपादनेन यजमानं तर्पयति । स्वयं च तृप्यति । प्रजया दीर्घायुष्यस्वर्गलोकज्ञानपुत्रदर्शनपौत्रदर्शनादिलक्षणया प्रजया पशुभिर्मिथुनैः प्रजायते । एवंविदुषो यस्याग्निहोत्रं जुह्वति यश्चैवं वेदिता सोपि प्रजादिना जायते ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमप्रपाठके अष्टमोऽनुवाकः.

---

[1]त्रयो वा इत्यादि ॥ प्रियमेधस्यापत्यानि त्रय आसन् । तेषां त्रयाणां मध्ये एकः त्रिः त्र्यावृतं त्र्याहुतिकमग्निहोत्रमजुहोत् । द्व्याहुतिकमेकः । सकृत् एकाहुतिकमेकः अनावृत्तिकम् ।

जुहोत् । स ऋचाऽजुहोत् । यो द्विः । स यजुषा। यस्सकृत् । स तूष्णीम् ॥ ५४ ॥ यश्च यजुषाऽजुहोद्यश्च तूष्णीम् । तावुभावार्ध्नुताम् । तस्माद्यजुषाऽऽहुतिः पूर्वा होतव्या । तूष्णीमुत्तरा । उभे एवर्द्धी अवरुन्धे । अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहेति सायं जुहोति । रेत एव तद्दधाति । सूर्यो ज्योतिर्ज्योतिस्सूर्यस्स्वाहेति प्रातः । रेत एव हितं प्र जनयति । [2]रेतो वा एतस्य हितं न प्र जायते॥५५ यस्याग्निहोत्रमहुतꣳ सूर्योऽभ्युदेति ।यद्यन्ते स्यात्।

---

अथ तेषां यस्त्रिरजुहोत् स ऋचा शाखान्तरसमाम्नातया अजुहोत् । यो द्विः स यजुषा, अजुहोदित्येव । स यजुषा वक्ष्यमाणेनाजुहोत् । तूष्णीमजुहोत् । तेषां यश्च यजुषाऽजुहोत्, यश्च तूष्णीमजुहोत् तावुभावृद्धिमन्तावभूताम् । तस्मादित्यादि । गतम् । उभे ऋद्धी उभयोस्संबन्धिन्यौ । सायंहोमेन रेतो दधाति, प्रातर्होमेन तत्प्रजनयति ॥

[2]रेतो वा इत्यादि ॥ हितं निहितं रेतोऽस्य न प्रजायते यस्याग्निहोत्र अहुते सूर्य उदेति तस्य रेतो न प्रजायते । एतस्मादेव च गम्यते—एतौ मन्त्रौ अनुदितहोमविषयाविति । अथ यद्यन्ते अन्तिके स्यात्सूर्यः यदि संनिहितश्च, तदात्वे होमद्रव्यं स्यात्, शीघ्रं स्रुचि चतुर्गृहीतं गृहीत्वा प्राकुदाद्द्रवेत् आहवनीयसकाशं गच्छेत् ।

उन्नीय प्राङुदाद्रवेत्। स उपसाद्यातमितोरासीत । स यदा ताम्येत् । अथ भूस्स्वाहेति जुहुयात् । प्रजापतिर्वै भूतः । तमेवोपासरत्। स एवैनं तत उन्नयति । नार्तिमार्च्छति यजमानः ॥ ५६ ॥

तूष्णीं जायते यजमानः ॥९॥

[1]यदग्निमुद्धरति । वसवस्तर्ह्यग्निः । तस्मिन् यस्य तथाविधे जुह्वति । वसुष्वेवास्याग्निहोत्रꣳ हुतं

प्रागेवोदयात् उपसाद्यातमितोः ओच्छ्वासनिर्गमादासीत । 'भावलक्षणे स्थ' इति तोसुन्प्रत्ययः । स यदा ताम्येत् श्रान्तो भवति, अथ अनन्तरमेव 'भूस्स्वाहा' इति जुहुयात् । प्रजापतिर्वा इत्यादि । गतम् । भूतः प्रभूतः । तत उन्नयति दोषादुद्धरति निहितं रेतः प्रजनयति, यजमानश्चार्तिं नार्च्छति न प्राप्नोति ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमप्रपाठके
नवमोऽनुवाकः.

---

[1]यदग्निमित्यादि ॥ यत् यदा अग्निरुद्ध्रियते तर्हि तस्मिन् काले वसवोऽग्निः वसुभिरेकीभूतास्तिष्ठति । तस्मिन् तथाविधे तादृक्प्रकारेऽग्नौ यस्य जुह्वति वसुष्वेवास्य हुतं भवति वसवस्तर्पिता अनेन भवन्ति। निहितः स्थापितः धूपायन् धूमं कुर्वन् 'गुपू धूप' इत्यायप्रत्ययः । तस्मिन् काले रुद्रैरेकीभूतोऽग्निस्तिष्ठति । तस्मिन् हुतेन

भवति। निहितो धूपायञ्छेते। रुद्रास्तर्ह्यग्निः। तस्मिन् यस्य तथाविधे जुह्वति। रुद्रेष्वेवास्याग्निहोत्रꣳ हुतं भवति। प्रथममिध्ममर्चिरा लभते। आदित्यास्तर्ह्यग्निः ॥५७॥ तस्मिन् यस्य तथाविधे जुह्वति। आदित्येष्वेवास्याग्निहोत्रꣳ हुतं भवति। सर्व एव सर्वश इध्म आदीप्तो भवति। विश्वे देवास्तर्ह्यग्निः। तस्मिन् यस्य तथाविधे जुह्वति। विश्वेष्वेवास्य देवेष्वग्निहोत्रꣳ हुतं भवति। [2] नितरामर्चिरुपावैति लोहिनीकेव भवति। इन्द्रस्तर्ह्यग्निः। तस्मिन् यस्य तथाविधे जुह्वति। इन्द्रे

---

रुद्रास्तर्पिता भवन्ति। प्रथममिति। प्रथमक्षिप्तां समिधमर्चिरालभते आश्लिष्य ज्वलयति। यद्वा—इध्मं प्रक्षिप्तं प्रथममालभते अभिगृह्णाति आदित्यरूपत्वादग्नेः हुतं आदित्यतृप्तये भवति। सर्व इति। सर्वः इध्मः सर्वशः सर्वतः आदीप्तो भवति ज्वलति ॥

[2] नितरामिति ॥ नीचैस्तरामर्चिरुपावैति अतिस्वल्पा भवति। लोहिनीकेव च भवति रक्तेव भवति अतिरक्ता भवति। 'वर्णादनुदात्तात्' इति ङीप्, संज्ञायां कन्, प्रत्ययात्पूर्वस्योदात्तत्वं छान्दसम्। तदा अग्नेरिन्द्रेणैक्यात्तत्र हुतमिन्द्रतृप्तये भवति ॥

एवास्याग्निहोत्रꣳ हुतं भवति ॥५८॥ [3]अङ्गारा भवन्ति । तेभ्योऽङ्गारेभ्योऽर्चिरुदेति । प्रजापतिस्तर्ह्यग्निः । तस्मिन् यस्य तथाविधे जुह्वति । प्रजापतावेवास्याग्निहोत्रꣳ हुतं भवति । शरोऽङ्गारा अध्यूहन्ते । ब्रह्म तर्ह्यग्निः । तस्मिन् यस्य तथाविधे जुह्वति । ब्रह्मन्नेवास्याग्निहोत्रꣳ हुतं भवति । [4]वसुषु रुद्रेष्वादित्येषु विश्वेषु देवेषु । इन्द्रे प्रजापतौ ब्रह्मन् । अपरिवर्गमेवास्यैतासु देवतासु हुतं भवति । यस्यैवं विदुषोऽग्निहोत्रं जुह्वति । य उ चैनदेवं वेद ॥५९

[3]अङ्गारा इति ॥ अङ्गारभूतेषु काष्ठेषु या अर्चिरुदेति तत्र हुतं प्रजापतितृप्तये भवति । अग्नयास्यस्य जिह्वास्थानीया अङ्गारा वह्निरूपाः । शर इति । शृणातेरसुनि शरः भस्म, तत् अङ्गारा अध्यूहन्ते उपरि वहन्ति । तस्मिन् कालेऽग्नेर्ब्रह्मस्वरूपत्वात्तत्र हुतं ब्रह्मण्येव हुतं भवति ॥

[4]अथ वेदितुः स्तुतिः—वसुष्वित्यादि ॥ अपरिवर्गं काश्चिदपि देवता अपरिवृज्य अवर्जयित्वा एतासु देवतासु हुतं भवत्यग्निहोत्रं यस्यैवं विदुषो जुह्वति, यश्चैनदेवं वेद अग्निहोत्रमाहात्म्यम् ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमप्रपाठके
दशमोऽनुवाकः.

आदित्यास्तर्ह्यग्निरिन्द्रं एवास्याग्निहोत्रꣳ हुतं भवति देवेषु चत्वारि च ॥ १० ॥

यदाग्निं निहितः प्रथमꣳ सर्वं एव नितरामङ्गा-राश्शरोऽङ्गारा ब्रह्म वसुष्वष्टौ ॥

[1]ऋतं त्वा सत्येन परिषिञ्चामीति सायं परि-षिञ्चति । सत्यं त्वर्तेन परिषिञ्चामीति प्रातः । अ-ग्निर्वा ऋतम् । असावादित्यस्सत्यम् । अग्निमेव त-दादित्येन सायं परिषिञ्चति । अग्निनाऽऽदित्यं प्रा-तस्सः । यावदहोरात्रे भवतः । तावदस्य लोकस्य ।

[1] ऋतं त्वेत्यादि ॥ होष्यन् हुत्वा चाग्निं परिषिञ्चति । अग्निः ऋतं मानसं तथ्यं, आदित्यः सत्यं वाचिकं तथ्यं, अग्न्यादित्य-वल्लोकानां धारकत्वात्ताच्छब्द्यं तयोः । यस्मादेवमृतात्मानं त्वां स-त्येन सत्यात्मना आदित्येन सह परिषिञ्चामि, तथा सत्यात्मानं त्वामृतात्मनाऽग्निना सह परिषिञ्चामि इति सायं प्रातश्च परिषिञ्चति। तद् तस्मात् अग्निमादित्येन आदित्यं चाग्निना सह परिषिञ्चति। तयोश्च सिक्तयोस्सर्वो लोकस्सिक्तो भवति, तन्मयत्वाल्लोकानाम् । ततश्च यावत् यावन्तं कालं अहोरात्रौ भवतः एवं क्रियमाणे सायंप्रातर्होमे शक्तौ भवतः । 'हेमन्तशिशिरावहोरात्रे च' इति पूर्ववल्लिङ्गता । तावत् तावन्तं कालं अस्य लोकस्य नार्तिः न कृच्छ्रा-पत्तिः, न रिष्टिः न विनाशः । नान्तः न विषादः । न पर्यन्तः अप-रिच्छिन्नविभवः चिरं जीवति ॥

नार्तिर्न रिष्टिः । नान्तो न पर्यन्तोऽस्ति ।[3] यस्यैवं विदुषोऽग्निहोत्रं जुह्वति । य उ चैनदेवं वेद ॥६०॥

अस्ति द्वे च ॥११॥

अङ्गिरसः प्रजापतिरग्निश्च रुद्र उत्तरावर्ती ब्रह्मवादिनोऽग्निहोत्रप्रायणा यज्ञाः प्रजापतिरकामयत तात्मन्वद्द्वीर्द्वं गावि दक्षिणतस्त्रयो वै यदग्निमृतं त्वा सत्येनैकादश ॥ ११ ॥

अङ्गिरसः प्रैव तेन पशूनेव यन्निमार्ष्टि यो वा अग्निहोत्रस्योपसदो दक्षिणतष्षष्टिः ॥ ६० ॥

---

[3] अथ वेदितुः स्तुतिः—यस्यैवं विदुषो जुह्वति ॥ यश्चैवं वेद अपि ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये तैत्तिरीयब्राह्मणे ज्ञानयज्ञाख्ये द्वितीयेऽष्टके प्रथमप्रश्ने एकादशोऽनुवाकः.

समाप्तः प्रथमः प्रश्नः.

---

एष निष्पावके शक्रे कुशिकान्वयजन्मना ।
भट्टभास्करमिश्रेण ज्ञानयज्ञः प्रवर्तितः ॥

# द्वितीयप्रपाठकप्रारम्भः.



हरिः ओम् ॥ [1]प्रजापतिरकामयत प्रजास्सृंजेयेति । स एतं दशहोतारमपश्यत् । तं मनसाऽनुद्रुत्य दर्भस्तम्बेऽजुहोत् । ततो वै स प्रजा असृजत । ता अस्मात्सृष्टा अपाक्रामन् । ता ग्रहेणागृह्णात् । तद्ग्रहस्य ग्रहत्वम् । यः कामयेत प्र जायेयेति । स दशहोतारं मनसाऽनुद्रुत्य दर्भस्तम्बे जुहुयात् । प्रजापतिर्वै दशहोता ॥१॥ प्रजापतिरेव भूत्वा प्र जायते । मनसा जुहोति । मन इव हि प्रजापतिः । प्रजापतेराप्त्यै । पूर्णया जुहोति । पूर्ण इव हि प्रजापतिः । प्रजापतेराप्त्यै ।

---

[1] अथ होतृणां ब्राह्मणं, प्राजापत्यं काण्डम्—प्रजापतिरकामयतेत्यादि ॥ दशहोतारमिति 'चित्तिः स्रुक्' * इत्यादिकम् । अनुद्रुत्य अक्षरक्रमेण स्मृत्वा । ततो वा इत्यादि । गतम् । 'वाचस्पते विधे नामन्' * इत्यादिना ग्रहत्वं, गृह्यतेऽनेनेति ग्रहः । य इत्यादि प्रजाकामस्य दशहोतृविधिः । प्रजापतिर्वा इति । 'इन्द्रस्यात्मानं दशधा चरन्तम्' † इति लिङ्गात् । मन इवेति । सर्वात्मना

---

* तै. आ. ३-१.   † तै. आ. ३-११.

न्यूनया जुहोति । न्यूनाद्धि प्रजापतिः प्रजा असृ-
जत । प्रजानाꣳ सृष्ट्यै ॥ २ ॥ दर्भस्तम्बे जुहोति ।
एतस्माद्वै योनेः प्रजापतिः प्रजा असृजत । य-
स्मादेव योनेः प्रजापतिः प्रजा असृजत । तस्मा-
देव योनेः प्र जायते । [2]ब्राह्मणो दक्षिणत उपास्ते ।
ब्राह्मणो वै प्रजानामुपद्रष्टा । उपद्रष्टुमत्येव प्र जा-
यते । ग्रहो भवति । प्रजानाꣳ सृष्टानां धृत्यै ।
[3]यं ब्राह्मणं विद्यां विद्वाꣳसं यशो नर्च्छेत् ॥ ३ ॥
सोऽरण्यं परेत्य । दर्भस्तम्बमुद्ग्रथ्य । ब्राह्मणं दक्षि-
णतो निषाद्य । चतुर्होतॄन्व्याचक्षीत । एतद्वै दे-

रित्वात् । प्रजापतेरात्यै प्रजापतित्वस्यावाप्त्यै, प्रजापतिरेव भूत्वा यथा यथा प्रजास्सृजेत् । न्यूनयेति । चतुर्गृहीतया स्रुचा, सामर्थ्याद्विकल्पः पूर्णया चतुर्गृहीतया वा । न्यूनाद्धीति । सर्वविकल्पशून्यान्मूलकारणात् । तस्मान्न्यूनत्वं प्रजानां सृष्ट्यै भवति । दर्भस्तम्ब इत्यादि । गतम् । योनिः कारणम् ॥

[2] उपद्रष्टेति ॥ हिताहितज्ञः साक्षी उपद्रष्टा । उपद्रष्टुमतीति । बहूपद्रष्टृके देशे प्रजायते प्रजा उत्पादयति । छान्दसो वर्णव्यत्ययः ॥

[3] यं ब्राह्मणमित्यादि ॥ यं ब्राह्मणं विशिष्टां विद्यां विद्वांसं जानन्तं तदनुरूपं यशो नर्च्छेत्, सोऽरण्यमनुप्रविश्य दर्भस्तम्ब-

वानां परमं गुह्यं ब्रह्म । यच्चतुर्होतारः । तदेव प्र-
काशं गमयति । तदेनं प्रकाशं गतम् । प्रकाशं
प्रजानां गमयति । दर्भस्तम्बमुद्गृथ्य व्याचष्टे ॥४॥
अग्निवान् वै दर्भस्तम्बः । आग्निवत्येव व्याचष्टे ।
ब्राह्मणो दक्षिणत उपास्ते । ब्राह्मणो वै प्रजाना-
मुपद्रष्टा । उपद्रष्टुमत्येवैनं यश ऋच्छति । [4]ईश्वरं
तं यशोऽर्तोरित्याहुः । यस्यान्ते व्याचष्ट इति ।
वरस्तस्मै देयः । यदेवैनं तत्रोप नमति । तदेवाव
रुन्धे ॥५॥ [5]अग्निमादधानो दशहोत्राऽरणिमव

---

मूर्ध्वग्रन्थिकं बध्वा तत्रासीनस्सन् ब्राह्मणं दक्षिणतो निषाद्य सादयित्वा चतुर्होतॄन् दशहोत्रादीन् सर्वान् व्याचक्षीत विशिष्ट-माचक्षीत विशिष्टेन शब्देन पठेत् । एतद्वा इत्यादि गतम् । यदेवेति। तत् देवानां ब्रह्म देवानां प्रकाशीकृतम् । एनं प्रजानां प्रकाशं गमयति विद्यानुरूपं, गतमन्यत् ॥

[4]ईश्वरमित्यादि ॥ यस्य समीपे अयं व्याचष्टे तमेवास्य यशः अर्तोः गन्तुमीश्वरस्स्यादित्याहुः । तस्मात् तस्मै ब्राह्मणाय वरो देयः । यदेव यश एनं ब्राह्मणं तस्मिन् कर्मण्युपनमति तत् स्वय-मेवावरुन्धे ॥

[5]अग्निमादधान इत्यादि ॥ प्रजातं प्रभूतमग्निं आधत्ते तेनैव

दध्यात् । प्रजातमेवैनमाधत्ते । तेनैवोद्धृत्याग्निहोत्रं जुहुयात् । प्रजातमेवैनञ्जुहोति । हविर्निर्वप्स्यन्दशहोतारं व्याचक्षीत । प्रजातमेवैनं निर्वपति । सामिधेनीरनुवक्ष्यन्दशहोतारं व्याचक्षीत । सामिधेनीरेव सृष्ट्वाऽऽरभ्य प्र तनुते । अथो यज्ञो वै दशहोता । यज्ञमेव तनुते ॥ ६ ॥ [6]अभिचरन्दशहोतारं जुहुयात् । नव वै पुरुषे प्राणाः । नाभिर्दशमी । सप्राणमेवैनमभि चरति । एतावद्वै पुरुषस्य स्वम् । यावत्प्राणाः । यावदेवास्यास्ति । तदभि चरति । स्वकृत इरिणे जुहोति प्रदरे वा । एतद्वा

दशहोत्रा उद्धृत्य समीपं गत्वा अग्निहोत्रं जुहुयात् । हविर्निर्वप्स्यन्नित्यादि । गतम् । सृष्ट्वेति । समिधामाधानार्थास्सृष्ट्वा आरम्भप्रभृति विस्तारयति । अपिच स्वयं यज्ञ एवायं दशहोता, तस्माद्यज्ञ एव विस्तारितो भवति ॥

[6]अभिचरन्नित्यादि ॥ स्वतन्त्रमिदम् । नाभिना दशत्वान्वयात् प्राणादिदशकसहितमेनमभिचरितव्यमभिचरति व्यापादयति, किंच प्राणा एवास्य स्वं आत्मीयं धनं क्षेत्रादि, तदपि नाशयति । स्वकृत इत्यादि । स्वाभाविके इरिणे ऊषरे जुहोति, प्रदरे भूविवरे वा । एतत्खलु पृथिव्यास्संबन्धि निरृतिगृहीतं अलक्ष्म्या परिगृ-

अस्यै निरृ॑तिगृहीतम् । निरृ॑तिगृहीत ए॒वैनं॑ निरृ॑त्या ग्राहयति । यद्वाचः क्रूरम् । तेन॒ वषट्-करोति । वा॒च ए॒वैनं॑ क्रूरेण॒ प्रवृ॑श्चति । ता॒जगार्ति॒-मार्च्छति ॥ ७॥ दशहोता॒ सृष्ट्यां॑ ऋ॒च्छेद्व्याचष्टे रुन्ध ए॒व तनु॒ते॒ निरृ॑तिगृहीतं॒ पश्च॑ च ॥ १ ॥

[1]प्र॒जाप॑तिरकामयत दर्शपूर्ण॒मासौ॑ सृ॒जेयेति॑ । स ए॒तं च॒तुर्हो॑तारमपश्यत् । तं मन॑साऽनु॒द्रुत्या॑-हव॒नीये॑ऽजुहोत् । त॒तो वै स द॑र्शपूर्ण॒मासाव॑सृ-जत । ताव॑स्माथ्सृष्टावपाक्रामताम् । तौ ग्रहेणा-

हीतम् । तस्मान्निरृ॑तिपरिगृहीते देशे हुत्वा एनं निरृ॑त्या ग्राह-यति यद्वाचः क्रूरं 'खट् फट् जहि' * इत्यादिकं तेन वषट्करोति, वाचः क्रूरेणांशेन एनं प्रकर्षेण वृश्चति, तदानीमेवार्तिं गच्छति योऽभिचरितव्यः ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयप्रपाठके प्रथमोऽनुवाकः.

---

[1] प्रजापतिरित्यादि ॥ चतुर्होता 'पृथिवी होता' इत्यादिः । 'वा-चस्पते वाचः' † इति ग्रहः । आलभमानः प्राप्नुवन् । आहवनीये होमो विशेषः । समानमन्यत्पूर्वेण ॥

---

* तै. आ. ४-१७. † तै. आ. ३-१.

गृह्णात् । तद्ग्रहस्य ग्रहत्वम् । दर्शपूर्णमासावालभमानः । चतुर्होतारं मनसाऽनुद्रुत्याहवनीये जुहुयात् । दर्शपूर्णमासावेव सृष्ट्वाऽऽरभ्य प्र तनुते ॥ ग्रहो भवति । दर्शपूर्णमासयोस्सृष्टयोर्धृत्यै । [2]सोऽकामयत चातुर्मास्यानि सृजेयेति । स एतं पञ्चहोतारमपश्यत् । तं मनसाऽनुद्रुत्याहवनीयेऽजुहोत् । ततो वै स चातुर्मास्यान्यसृजत । तान्यस्मात्सृष्टान्यपाक्रामन् । तानि ग्रहेणागृह्णात् । तद्ग्रहस्य ग्रहत्वम् । चातुर्मास्यान्यालभमानः ॥ १ ॥ पञ्चहोतारं मनसाऽनुद्रुत्याहवनीये जुहुयात् । चातुर्मास्यान्येव सृष्ट्वाऽऽरभ्य प्र तनुते । ग्रहो भवति । चातुर्मास्यानाᳪं सृष्टानां धृत्यै । [3]सोऽकामयत पशुबन्धᳪं सृजेयेति । स एतᳪं षड्ढोतारमपश्यत् । तं मनसाऽनुद्रुत्याहवनीयेऽजुहोत् । ततो वै स पशुब-

[2]पञ्चहोता ॥ 'अग्निर्होता' *इत्यादिः । 'सोमस्सोमस्य'* इत्यादिः ग्रहः । चतुर्षु चतुर्षु मासेषु भवानि चातुर्मास्यानि, चातुर्मास्याख्यो यज्ञः 'तत्र भवः' इति ण्यः ॥

[3]पशुर्बध्यतेऽस्मिन्निति पशुबन्धः कर्म, अधिकरणे घञ् । था-

* तै. आ ३-३.

न्धमंसृजत । सोऽस्मात्सृष्टोऽपाक्रामत् । तं ग्रहेणागृह्णात् ॥ १० ॥ तद्ग्रहस्य ग्रहत्वम् । पशुबन्धेन यक्ष्यमाणः । षड्ढोतारं मनसाऽनुद्रुत्याहवनीये जुहुयात् । पशुबन्धमेव सृष्ट्वाऽऽरभ्य प्र तनुते । ग्रहो भवति । पशुबन्धस्य सृष्टस्य धृत्यै । [4]सोऽकामयत सौम्यमध्वरꣳ सृजेयेति । स एतꣳ सप्तहोतारमपश्यत् । तं मनसाऽनुद्रुत्याहवनीयेऽजुहोत् । ततो वै स सौम्यमध्वरमसृजत ॥ ११ ॥ सोऽस्मात्सृष्टोऽपाक्रामत् । तं ग्रहेणागृह्णात् । तद्ग्रहस्य ग्रहत्वम् । दीक्षिष्यमाणः । सप्तहोतारं मनसाऽनुद्रुत्याहवनीये जुहुयात् । सौम्यमेवाध्वरꣳ सृष्ट्वाऽऽरभ्य प्र तनुते । ग्रहो भवति । सौम्यस्याध्वरस्य सृष्टस्य धृत्यै । [5]देवेभ्यो वै यज्ञो न प्राभवत् । तमेतावच्छस्समभरन् ॥ १२ ॥ यत्संभाराः । ततो वै

थादिनोत्तरपदान्तोदात्तत्वम् । षड्ढोता 'सूर्यं ते चक्षुः' * इति । वाचस्पतेऽच्छिद्रया' * इति ग्रहः ॥

[4]सप्तहोता 'महाहविर्होता' इति । † 'वाचस्पते हृद्विधे नामन्' † इति ग्रहः ॥

[5]देवेभ्यो वा इत्यादि ॥ न प्राभवत् न पर्याप्तोऽभवत् । अथ तं यज्ञं देवा एतावच्छः एतावत्प्रमाणैरवयवैः यावत्प्रमाणास्संभाराः

* तै. आ. ३—४. † तै. आ. ३—६.

तेभ्यो यज्ञः प्राभवत् । यथ्संभारा भवन्ति । यज्ञस्य प्रभूत्यै । [6]आतिथ्यमासाद्य व्याचष्टे । यज्ञमुखं वा आतिथ्यम् । मुखत एव यज्ञꣳ संभृत्य प्र तनुते । [7]अयज्ञो वा एषः । योऽपत्नीकः । न प्रजाः प्र जायेरन् । पत्नीर्व्याचष्टे । यज्ञमेवाकः । प्रजानां प्रजननाय । [8]उपसथ्सु व्याचष्टे । एतद्वै पत्नीनामायतनम् । स्व एवैना आयतनेऽवं कल्पयति ॥ १३

तनुत आलभमानो गृह्णादसृजताभरञ्जायेरन्थ्षट्च ॥ २

---

संभारयजूंषि 'अग्निर्यजुर्भिः'* इत्यादीनि एतावच्छः समभरन् 'यत्तदेतेभ्यः परिमाणे वतुप्' । 'बहुगणवतुडति' इति संख्यातात् 'संख्यैकवचनाच्च' इति शस् ॥

[6]आतिथ्यमित्यादि ॥ अतिथय इदं आतिथ्यं 'अतिथेर्ण्यः' आतिथ्यं द्रव्यमासाद्य अन्तर्वेद्यानीय संभारयजूंषि व्याचष्टे ॥

[7]अयज्ञो वा इत्यादि ॥ पत्नीः 'सेनेन्द्रस्य' †इत्याद्याः पत्नीर्व्याचष्टे । सपत्नीकत्वाद्यज्ञमेव करोति, स च प्रजानां प्रजननाय भवति ॥

[8]उपसत्स्वित्यादि ॥ उपसत्सु देवपत्नीर्व्याचष्टे, एतत् पत्नीनां स्थानं, यदुपसदनस्य उपशयनस्थानीयस्य स्थानम् । तस्मात् स्वस्मिन्नायतने एता अवक्लृप्ता भवन्ति ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः.

---

* तै. आ. ३—८. † तै. आ. ३—९.

[1]प्रजापतिरकामयत प्र जायेयेति । स तपोऽतप्यत । स त्रिवृतꣳ स्तोममसृजत । तं पञ्चदशस्तोमो मध्यत उदतृणत् । तौ पूर्वपक्षश्चापरपक्षश्चाभवताम् । पूर्वपक्षं देवा अन्वसृज्यन्त । अपरपक्षमन्वसुराः । ततो देवा अभवन् । पराऽसुराः । यं कामयेत वसीयान्थ्स्यादिति ॥ १४ ॥ तं पूर्वपक्षे याजयेत् । वसीयानेव भवति । यं कामयेत पापीयान्थ्स्यादिति । तमपरपक्षे याजयेत् । पापीयानेव भवति । तस्मात्पूर्वपक्षोऽपरपक्षात्करुण्यंतरः । प्रजापतिर्वै दशहोता । चतुर्होता पञ्चहोता । षड्ढोता सप्तहोता । ऋतवस्संवथ्सरः ॥ १५

---

[1]प्रजापतिरित्यादि ॥ प्रजायेय प्रभूतस्स्यां इत्यकामयत । स तप्त्वा त्रिवृतं स्तोममसृजत । अथ तं त्रिवृतं पञ्चदशस्तोमो मध्यत उदतृणत् मध्ये उद्भिद्यानुप्राविशत् । प्रथमं प्रजापतेस्तपस्विनस्तावत्त्रिवृदाविरभूत्, पुनरपि तपोबलात्स एव त्रिवृत् पञ्चदशेनाविर्भूतेन मध्यत उत्तृण्णमहापरिणाम (त्रिंशत्) चतुर्विंशत्यवयवः संजातः । अथ तथा एकीभूतौ द्वेधा भूत्वा द्वादशावयवौ (पञ्चदशावयवौ) पूर्वपक्षावपरपक्षावभवताम् । तत्र पूर्वपक्षं प्रादुर्भूतमनु देवा असृज्यन्त, अपरपक्षमन्वसुरा असृज्यन्त । ततस्तथोत्पन्ने मध्ये देवा अभवन् प्रभूता आसन्, असुराः पराभूता विनष्टा

प्रजाः पशव इमे लोकाः । य एवं प्रजापतिं ब॒-
होर्भूयाꣳसं वेद ।बहोरेव भूयान्भवति । [2] प्रजापति-
र्देवासुरानसृजत । स इन्द्रमपि नासृजत ।तं देवा
अब्रुवन् । इन्द्रं नो जनयेति । सोऽब्रवीत् । यथाऽहं
युष्माꣳस्तपसाऽसृक्षि।एवमिन्द्रं जनयध्वमिति॥१६
ते तपोऽतप्यन्त । त आत्मन्निन्द्रमपश्यन् । तमब्रु-
वन् । जायस्वेति । सोऽब्रवीत् । किं भागधेयमभि
जनिष्य इति । ऋतून्थ्संवथ्सरम् । प्रजाः पशून्।
इमान्लोकानित्यब्रुवन्। तं वै माऽऽहुत्या प्र जनय-
तेत्यब्रवीत् ॥ १७॥ तं चतुर्होत्रा प्राजनयन् ।

---

आसन् । यस्मादेवं तस्मात् यं कामयेत वसीयान् इत्यादि। गतम् । वसुमत्तरो वसीयान्, पापतरः पापीयान्, करुण्यतरः करणे साधुतरः कर्मयोग्यतरः । छान्दसो वर्णविकारः । 'तत्र साधुः' इति यत् । इत्थं तपसा विश्वं सृष्टवान् । स एव प्रजापतिरयं दशहोतेति । किं बहुना चतुर्होत्रादिकं लोकपर्यन्तं विश्वं प्रजापतिरेव। एवं दशहोत्रादिरूपेण प्रजापतिं बहोरपि भूयांसं अतिशयेन विपुलतरं प्रजापतिं यो वेद स बहोर्भूयान् भवति ॥

[2] प्रजापतिर्देवासुरानित्यादि ॥ इन्द्रं नासृजत अपिशब्दा-त्तस्य भागभूतान् ऋत्वादीनपि नासृजत् । तमित्यादि । युष्मानहमिव यूयमेव तपसा इन्द्रं जनयध्वमिति । ते च तपस्तप्यमाना आत्म-

यः कामयेत वीरो म आ जायेतेति । स चतुर्होतारं जुहुयात् । प्रजापतिर्वै चतुर्होता । प्रजापतिरेव भूत्वा प्रजायते । जजनदिन्द्रमिन्द्रियाय स्वाहेति ग्रहेण जुहोति । आऽस्य वीरो जायते । वीरꣳ हि देवा एतयाऽऽहुत्या प्राजनयन् । [3]आदित्याश्चाङ्गिरसश्च सुवर्गे लोकेऽस्पर्धन्त । वयं पूर्वे सुवर्गं लोकमियाम वयं पूर्व इति ॥ १८ ॥ त आदित्या एतं पञ्चहोतारमपश्यन् । तं पुरा प्रातरनुवाकादाग्नीध्रेऽजुहवुः । ततो वै ते पूर्वे सुवर्गं लोकमायन् । यस्सुवर्गकामस्स्यात् । स पञ्चहोतारं पुरा प्रातरनुवाकादाग्नीध्रे जुहुयात् । संवथ्सरो वै पञ्चहो-

---

नीन्द्रं दृष्ट्वा जायस्वेति तमब्रुवन् । अथेन्द्रोऽब्रवीत्—किं भागधेयमभि किं भागं लब्धुं जनिष्य इति । ऋतूनित्यादि । ऋत्वादिकं सर्वं तव भागधेयमस्तु सर्वस्य त्वं स्वामीहेति । अथेन्द्रो देवानब्रवीत्—मां कयाचिदाहुत्या प्रजनयतेति । देवाश्च तं चतुर्होत्रा प्राजनयन् । य इत्यादि । गतम् ॥ वीरः पुत्रादिः । प्रजापतिर्वा इति । तस्य सर्वात्मनोक्तत्वात् ॥

[3]आदित्या इत्यादि ॥ प्रथमतस्स्वर्गगमने मात्सर्ययुक्ताः आदित्याः यागमध्ये प्रातरनुवाकशस्त्रपाठात्पुरा पञ्चहोत्रा हुत्वा प्रतिस्पर्धि-

ता। संवथ्सरस्सुवर्गो लोकः। संवथ्सर एवर्तुषु प्रतिष्ठाय। सुवर्गं लोकमेति। [4]तेऽब्रुवन्नाङ्गिरस आदित्यान्॥११॥ क्व स्थ। क्व वस्सद्भयो हव्यं वक्ष्याम इति। छन्दस्स्वित्यब्रुवन्। गायत्रियां त्रिष्टुभि जगत्यामिति। तस्माच्छन्दस्सु सद्भय आदित्येभ्यः। आङ्गिरसीः प्रजा हव्यं वहन्ति। वहन्त्यस्मै प्रजा बलिम्। ऐनमप्रतिख्यातं गच्छति। य एवं वेद।

---

भ्योऽङ्गिरोभ्यः पूर्वमेव स्वर्गं प्राप्ताः। य इत्यादि। तस्मात्संवत्सरे ऋतुषु च प्रतिष्ठाय तत्तत्कामसाध्येषु कर्मसु कर्तृत्वेन स्थित्वा स्वर्गं गच्छति॥

[4]अथ अङ्गिरसः स्वर्गं गत्वा स्थितानादित्यानब्रुवन्—क यूयं स्थ कुत्र सद्भयो विद्यमानेभ्यो युष्मभ्यं वयं हव्यं वक्ष्याम इति, किमाधारान् युष्मान् हविषाऽऽराधयामः स्वर्गार्थमिति। अथादित्या अब्रुवन्—गायत्र्यादिषु छन्दस्सु स्मो वयमिति। तस्मादित्यादि। आङ्गीरसीः आङ्गिरस्याः अङ्गिरसां संतानप्रभवाः। अथ वेदितुः स्तुतिः—अस्मै एवं वेदित्रे सर्वाः प्रजाः बलिं उपहारं वहन्ति, अप्रतिख्यातं च एनमागच्छतीति केचित्। समासासमासयोर्द्वयोरपि स्वरानुपपत्तिः समाधेया॥

[5]द्वादश मासाः पञ्चर्तवः। त्रय इमे लोकाः। असावादित्य एकविꣳशः। एतस्मिन्वा एष श्रितः। एतस्मिन्प्रतिष्ठितः। य एवमेतꣳ श्रितं प्रतिष्ठितं वेद। प्रत्येव तिष्ठति ॥ २० ॥ स्यादिति संवथ्सरो जनयध्वमितीत्यब्रवीत्पूर्व इत्यादित्यानृतवष्षट्च ॥

[1]प्रजापतिरकामयत प्रजायेयेति। स एतं दशहोतारमपश्यत्। तेन दशधाऽऽत्मानं विधाय। दशहोत्राऽतप्यत। तस्य चित्तिस्स्रुगासीत्। चित्तमाज्यम्। तस्यैतावत्येव वागासीत्। एतावान्

---

[5]द्वादश मासा इत्यादि ॥ एतस्मिन् पञ्चहोतरि एष एकविंश आदित्यः श्रितः, एतस्मिन् प्रतिष्ठितः स्थिरावस्थानश्च। य एवमेतस्मिन् श्रितं प्रतिष्ठितं च यो वेद स प्रतितिष्ठत्येव ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः.

---

[1]प्रजापतिरित्यादि ॥ गतम्। प्रभूतः स्यामिति कामयमानो दशहोतारमात्मन्यपश्यत्। तेन दशहोत्रा अतप्यत इष्टवानित्यर्थः। कथं कृत्वा? दशधा दशप्रकारं चित्त्यादिरूपेण दशधा विभिन्नमात्मानं विधाय तेनातप्यत प्राचीनेन तपोबलेन दशहोतारं दृष्ट्वा तदपेक्षितचित्त्यादिरूपेण दशधा आत्मानं विभज्य

यज्ञक्रतुः । स चतुर्होतारमसृजत । सोऽनन्दत् ॥ असृक्षि वा इममिति । तस्य सोमो हविरासीत् । स चतुर्होत्राऽतप्यत । सोऽताम्यत् । स भूरिति व्याहरत् । स भूमिमसृजत । अग्निहोत्रं दर्शपूर्णमासौ यजूꣳषि । स द्वितीयमतप्यत । सोऽताम्यत् । स भुव इति व्याहरत् ॥२२॥ सोऽन्तरिक्षमसृजत । चातुर्मास्यानि सामानि । स तृतीय-

तेन दशहोत्रा साधनेन तपः कृतवानिति । तस्य तेन तप्यमानस्य चित्तिरेव स्रुगासीत्, चित्तमेवाज्यमासीत्, बाह्याभावात् चित्तं मनः चित्तिः विज्ञानमात्मा । उपलक्षणत्वात् वागादयो वेद्यादयोऽभवन्, सर्वे ह्यान्तराः । तस्य तप्यमानस्य एतावति यावान् दशहोता तावत्येव मन्त्रात्मिका वागासीत् । किंच तस्य एतावानेव यावान् दशहोत्रा होमश्चित्त्यादिसामग्रीकः तावानेव यज्ञक्रतुरासीत् । यूपवान्महाक्रतुर्यज्ञक्रतुः । अथ स तथा तप्यमानः प्रजापतिः चतुर्होतारमसृजत । अथ तं दृष्ट्वा अनन्दत् अहृष्यत् असृक्षि सृष्टवानहमिमं महानुभावं व्याहृतीनां लोकानां च कारणं चतुर्होतारमिति । 'लिङ्सिचावात्मनेपदेषु' इति किन्त्वम् । अथ तस्य प्रजापतेः सोमो बाह्यो हविरासीत् । अथ सोमं हविर्लब्धवान् सौम्यं हविः कृत्वा चतुर्होत्रा अतप्यत होमं कृतवान् । स तथा तप्यमानोऽताम्यत् तान्तोऽभवत् । अथ समं वेदेन भूरिति व्याहरत् अशब्दयत् ।

मतप्यत । सोऽताम्यत् । स सुवरिति व्याहरत् । स दिवमसृजत । अग्निष्टोममुक्थ्यमतिरात्रमृचः । [2]एता वै व्याहृतय इमे लोकाः । इमान्खलु वै लोकाननु प्रजाः पशवश्छन्दाꣳसि प्राजायन्त । य एवमेताः प्रजापतेः प्रथमा व्याहृतीः प्रजाता वेद ॥ २३ ॥ प्र प्रजया पशुभिर्मिथुनैर्जायते । [3]स पञ्चहोतारमसृजत । स हविर्नाविन्दत । तस्मै सोमं-

तया व्याहृत्या च भूमिमसृजत । भूरिति व्याहृतिर्भूमित्वेन परिणताऽभवत् । अग्निहोत्रं दर्शपूर्णमासौ च यज्ञानामसृजत, यजूंषि च वेदानाम् । स द्वितीयमित्यादि । गतम् ॥

[2]एता वा इत्यादि ॥ एवमेता व्याहृतयः इमे लोकास्संजाताः लोकात्मना परिणताः । लोक्यन्त इति लोकाः यज्ञा वेदाश्च गृह्यन्ते । इमान् खलु लोकाननु एतल्लोकनिष्पत्त्या हेतुना । 'अनुर्लक्षणे' इति हेतावनोः कर्मप्रवचनीयत्वम् । प्रजाश्च पशवश्च छन्दांसि च प्राजायन्त । य एवमित्यादि । प्रजापतिव्याहरणपरिणामत्वात्सर्वे लोकादयस्तत्प्रजाता इति यो वेद स प्रजया पशुभिश्च मिथुनैः प्रजायते ॥

[3]स पञ्चहोतारमित्यादि ॥ हविः होमद्रव्यम् । वेगेन प्रत्यग्वृत्तिरेव देहं पीडयन् प्राणवायुः प्रावर्तत । तस्यामवस्थायाममसुरानसृजत । तत्र अपानपीडनेन असुरान् जनयच्छरीरं अ

स्तनुवं प्रायच्छत् । एतत्ते हविरिति । स पञ्चहोत्राऽ-
तप्यत । सोऽताम्यत् । स प्रत्यङ्ङबाधत । सोऽसु-
रानसृजत । तदस्याप्रियमासीत् ॥ २४ ॥ तद्दुर्व-
र्णꣳ हिरण्यमभवत् । तद्दुर्वर्णस्य हिरण्यस्य जन्म ।
[4]स द्वितीयमतप्यत । सोऽताम्यत् । स प्राङबाधत ।
स देवानसृजत । तदस्य प्रियमासीत् । तत्सुव-
र्णꣳ हिरण्यमभवत् । तत्सुवर्णस्य हिरण्यस्य ज-
न्म । य एवꣳ सुवर्णस्य हिरण्यस्य जन्म वेद ॥
सुवर्ण आत्मना भवति । दुर्वर्णोऽस्य भ्रातृव्यः ।
तस्मात्सुवर्णꣳ हिरण्यं भार्यम् । सुवर्ण एव भव-

---

स्याप्रियमासीत्, तत् पीडनं वा । तत् दुर्वर्णं दुष्टवर्णं सीसता-
म्रादिकं हिरण्यमभवत् । सर्वलोहवचनो हिरण्यशब्दः । 'हर्य
गतिकान्त्योः' 'हर्यतेः कन्यन् हिरच्' । तदिदं दुर्वर्णस्य हि-
रण्यस्य जन्म उत्पत्तिः ॥

[4]स द्वितीयमित्यादि ॥ किंच अतप्यत । प्राङ् अनुकूलः
प्राणश्च ऊर्ध्ववृत्तिरेव आत्मानमपीडयत् इतरनिरोधेन प्रवर्तनात्
स देवान् असृजत सृष्टवान् । तच्च शरीरमस्य प्रियमासीत् ।
तत्सुवर्णं शोभनवर्णं हिरण्यं जातरूपमभवत् । तत्सुवर्णस्येत्यादि।
गतम् । आत्मनेति । 'प्रकृत्यादिभ्यः' इति तृतीया । गतमन्यत् ॥

ति । ऐनं प्रियं गच्छति नाप्रियम् । [5]स सप्तहोता-
रमसृजत । स सप्तहोत्रैव सुवर्गं लोकमैत् । त्रि-
णवेन स्तोमेनैभ्यो लोकेभ्योऽसुरान्प्राणुदत । त्र-
यस्त्रिंशेन प्रत्यतिष्ठत् । एकविंशेन रुचमधत्त।
सप्तदशेन प्राजायत । य एवं विद्वान्त्सोमेन यज-
ते । सप्तहोत्रैव सुवर्गं लोकमेति । त्रिणवेन स्तो-
मेनैभ्यो लोकेभ्यो भ्रातृव्यान्प्रणुदते । त्रयस्त्रिंश-
शेन प्रति तिष्ठति । एकविंशेन रुचं धत्ते । सप्त-
दशेन प्रजायते । [6]तस्मात्सप्तदशस्तोमो न निर्-
हृत्यः । प्रजापतिर्वै सप्तदशः । प्रजापतिमेव म-
ध्यतो धत्ते प्रजात्यै ॥२७॥ अनन्दुद्भुव इति व्या-
हरद्वेदासीद्वेदाधत्त प्रजात्यै ॥ ४ ॥

[5]स सप्तहोतारमित्यादि ॥ गतम् । सप्तहोतृफलप्रसंगेन स्तो मफलान्युच्यन्ते । एवं सप्तहोतृमाहात्म्यज्ञः सप्तहोतृकेण सोमेन यजते । शिष्टं स्पष्टम् ॥

[6]तस्मादित्यादि ॥ यस्मात्सप्तदशेन प्रजायते तस्मादयं सप्तद-शस्तोमो न निर्हृत्यः न बहिर्निरसितव्यः, अपितु मध्यत एव स्थाप्यः । यस्मादयं सप्तदशः स्वयं प्रजापतिरेव प्रजापतिहो-तृत्वात्; तस्मान्मध्ये निधानेन प्रजापतिरेव मध्ये निहितो भवति। तच्च प्रजात्यै भवति । हरतेः छान्दसः क्यप् ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयप्रपाठके
चतुर्थोऽनुवाकः.

[1]देवा वै वरुणमयाजयन् । स यस्यै यस्यै देवतायै दक्षिणामनयत् । तामव्लीनात् । तेऽब्रुवन् । व्यावृत्य प्रति गृह्णाम । तथा नो दक्षिणा न व्लेष्यतीति । ते व्यावृत्य प्रत्यगृह्णन् । ततो वै तां दक्षिणा नाव्लीनात् । य एवं विद्वान्व्यावृत्य दक्षिणां प्रतिगृह्णाति । नैनं दक्षिणा व्लीनाति ॥२८
राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यमित्याह । आग्नेयं वै हिरण्यम् । स्वयैवैनद्देवतया प्रति गृह्णाति । सोमाय वास इत्याह । सौम्यं वै वासः । स्वयैवैनद्देवतया प्रति गृह्णाति । रुद्राय गामित्याह । रौद्री वै गौः । स्वयैवैनां देवतया प्रति गृह्णाति । वरुणायाश्वमित्याह ॥ २९ ॥ वारुणो वा अश्वः । स्वयैवैनं देवतया प्रति गृह्णाति । प्रजाप-

---

[1]देवा वा इत्यादि ॥ पूर्वं देवा ऋत्विजो भूत्वा वरुणमयाजयन् । वरुणो यस्यै देवतायै आर्त्विज्यं कृतवत्यै दक्षिणामनयत् दत्तवान्, तां देवतां या दक्षिणा प्रतिगृहीता सा अव्लीनात् विशीर्णामकरोत् 'व्ली विशरणे' । अथ ते देवा अब्रुवन् । व्यावृत्य व्यवधाय मध्ये कृत्वा प्रत्यगृह्णन् । स्वयैव देवतया एनत् प्रतिगृह्णाति प्रतिग्राहयति, न स्वयं गृह्णातीत्य-

तये पुरुषमित्याह । प्राजापत्यो वै पुरुषः । स्वयैवै- नं देवतया प्रति गृह्णाति । मनवे तल्पमित्याह । मानवो वै तल्पः । स्वयैवैनं देवतया प्रति गृह्णा- ति । उत्तानायाङ्गीरसायान इत्याह । इयं वा उत्ता- न आङ्गिरसः ॥ ३० ॥ अनयैवैनत्प्रति गृह्णाति । [2]वैश्वानर्यर्चा रथं प्रति गृह्णाति । वैश्वानरो वै देव- तया रथः । स्वयैवैनं देवतया प्रति गृह्णाति । तेना- मृतत्वमश्यामित्याह । अमृतमेवात्मन्धत्ते । वयो दात्र इत्याह । वय एवैनं कृत्वा । सुवर्गं लोकं ग- मयति । मयो मह्यमस्तु प्रतिग्रहीत्र इत्याह ॥ ३१ ॥

र्थो लक्ष्यते । यद्वा—भावप्रधानो निर्देशः । तत्तद्रूपं देवताभा- वेन प्रतिगृह्णाति नात्मना । गतमन्यत् । तल्पं शयनम् । इयं पृथिवी । उत्तान आङ्गीरसः । तस्मादनयैव एनत् अनः प्रति- गृह्णाति ॥

[2]वैश्वानर्येति ॥ 'वैश्वानरः प्रत्नथा' *इत्यनया । प्रकृतेन सा- वित्रेण कृताविदामिति केचित् । यदि प्रकृतोरथो ऽस्ति न तत्रा- नया इत्यन्ये । वयो दात्र इति । दातुस्स्वर्गगमनाय वयः पक्षी भवत्वियं दक्षिणेति । तस्माद्वय एवात्मानं कृत्वा एनं दातारं स्वर्गं गमयति । यद्वा—शीघ्रतया वयस्त्वं पक्षित्वं ममास्तु । तस्माच्छीघ्रगामिनमेनं पक्षी कृत्वा पक्षिवच्छीघ्रं वा कृत्वा स्वर्गं

* तै.आ. १-१०.

यद्वै शिवम् । तन्मयः । आत्मन एवैषा परीत्तिः । क इदं कस्मा अदादित्याह । प्रजापतिर्वै कः । स प्रजापतये ददाति । कामः कामायेत्याह । कामेन हि ददाति । कामेन प्रतिगृह्णाति । कामो दाता कामः प्रतिग्रहीतेत्याह ॥ ३२ ॥ कामो हि दाता । कामः प्रतिग्रहीता । कामꣳ समुद्रमाविशेत्याह । समुद्र इव हि कामः । नेव हि कामस्यान्तोऽस्ति । न समुद्रस्य । कामेन त्वा प्रति गृह्णामीत्याह । येन कामेन प्रतिगृह्णाति । स एवैनममुष्मिन्लोके काम आगच्छति । कामैतत्ते एषा ते काम दक्षिणेत्याह । काम एव तद्यजमानोऽमुष्मिन्लोके द-

---

प्रापयति । यद्वा—वयः आयुः दीर्घमस्तु, तस्माद्वयास्विनमेनं कृत्वा जीवयित्वा पश्चात्स्वर्गं प्रापयति । शिवं शान्तं सुखं मयः । आत्मन एषा परीत्तिः परिदानं रक्षा 'पा रक्षणे' 'अच उपसर्गात्तः' इति तादेशः । 'दस्ति' इति दीर्घत्वम् । प्रजापतिः प्रजापतये ददाति न मह्यं, काम एव प्रतिग्रहीता, नाहम् । समुद्र इव कामः, उभयोरनन्तत्वात् । अन्ताभावेन दुरुच्छेदत्वं लक्ष्यते, येन कामेन इच्छया प्रतिगृह्णाति अस्मै प्रयोजनाय इदं प्रतिगृह्णामीति गृह्णाति, स कामः काम्यमानोर्थः । परलोके एनमागच्छति उपतिष्ठति । काम एवेति । अमुष्मिन् परलोके यः कामः अ-

क्षिणामिच्छति । न प्रतिग्रहीतारि । [3]य एवं वि-
द्वान्दक्षिणां प्रतिगृह्णाति । अनृणामेवैनां प्रति गृ-
ह्णाति ॥ ३ ३ ॥

व्लीनात्यश्वमित्याहाङ्गिरसः प्रतिग्रहीत्र
इत्याह प्रतिग्रहीतेत्याह दक्षिणे-
त्याह चत्वारि च ॥५॥

---

भिमतभोगः तन्निमित्तमेव दक्षिणादानमिच्छति यजमानः, न प्रति ग्रहीतृनिमित्तम् । तस्मादेनमागच्छति उपतिष्ठति । तत्ते काम एषा ते दक्षिणेति कामार्थत्वेनोच्यत इति । यद्वा—कामे दक्षिणा-फलमिच्छति यजमानः परलोकविषयं, कामभोग्यत्वात्, न प्रति-ग्रहीतारि कामनिमित्तं दक्षिणाफलममुष्मिन् लोके यजमान इच्छति । न पुनरिदानीमेव प्रतिग्रहीतारि लब्धुमिच्छति । तस्मात्कामदक्षिणा च कामाय परिदीयते परलोके प्रतिदातुम् ॥

[3]य एवमित्यादि ॥ एनां दक्षिणामनृणां परलोके दानफल-प्रदामेव प्रतिगृह्णाति । यद्वा—यस्य दक्षिणायां प्रतिगृहीतायां ऋणं नास्ति नान्यद्दातव्यमवशिष्यते तादृशमेव कृत्वा प्रतिगृह्णा-ति । यद्वा—प्रतिग्रहीतुः ऋणाभाव उच्यते । यस्यां प्रतिगृही-तायां प्रतिग्रहीतुः ऋणं नास्ति, अपाकर्तव्यो दोष ऋणं, तद्र-हितां निर्दोषामेव दक्षिणां प्रतिगृह्णाति ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयप्रपाठके
पञ्चमोऽनुवाकः.

[1]अन्तो वा एष यज्ञस्य । यद्दशममहः । दश॒मेऽहन्थ्सर्पराज्ञिया ऋग्भिस्स्तुवन्ति । यज्ञस्यैवान्तं गत्वा । अन्नाद्यमवरुन्धते । तिसृभिस्स्तुवन्ति । त्रयं इमे लोकाः । एभ्य एव लोकेभ्योऽन्नाद्यमव रुन्धते । पृश्निवतीर्भवन्ति । अन्नं वै पृश्नि ॥३४॥ अन्नमेवाव रुन्धते । मनसा प्रस्तौति । मनसोद्गायति । मनसा प्रति हरति । मन इव हि प्रजापतिः । प्रजापतेराप्त्यै । [2]देवा वै सर्पाः । तेषामियꣳ राज्ञी । यथ्सर्पराज्ञिया ऋग्भिस्स्तुवन्ति । अस्यामेव प्रति तिष्ठन्ति ॥३५॥ चतुर्होतृन् होता व्याचष्टे । स्तुतमनुशꣳसति शान्त्यै । अन्तो वा

[1]अन्तो वा इत्यादि ॥ दशरात्रस्य प्राधान्यादेवमुक्तम् । इदं चतुर्होतृस्तुतिप्रसंगेनोच्यते । सर्पराज्ञिया ऋचः 'आयं गौः पृश्निरक्रमीत्' * इत्याद्याः । पौष्कल्येन यज्ञनिर्वृत्त्या अन्नादनसामर्थ्यमवरुन्धते । तिसृभिरित्यादि । गतम् । प्रस्तावोद्गीथप्रतिहाराणां मानसत्वादव्यक्तत्वेन मनस्सदृशस्य प्रजापतेराप्त्यै भवति ॥

[2]देवा वा इत्यादि ॥ देववत्पूज्याः सर्पाः । यद्वा—सर्पणशीला जङ्गमाः, ते स्थावरेभ्यः पूज्यत्वाद्देवाः । तेषामियं पृथ्वी राज्ञी

* तै.सं. १-५-३.

एष यज्ञस्य । यद्दशममहः । एतत्खलु वै देवानां परमं गुह्यं ब्रह्म । यच्चतुर्होतारः । दशमेऽहंश्चतुर्होतॄन्व्याचष्टे । यज्ञस्यैवान्तं गत्वा । परमं देवानां गुह्यं ब्रह्मावरुन्धे । तदेव प्रकाशं गमयति॥ ३ ६
तदेनं प्रकाशं गतम् । प्रकाशं प्रजानां गमयति । [3]वाचं यच्छति । यज्ञस्य धृत्यै । [4]यजमानदेवत्यं वा अहः । भ्रातृव्यदेवत्या रात्रिः । अह्ना रात्रिं ध्यायेत् । भ्रातृव्यस्यैव तल्लोकं वृङ्क्ते । यद्दिवा वाचं

धारणपोषणादिना स्वामिनी । उक्तं च—'यद्वा अस्यां किं चार्चन्ति यदानृचुस्तेनेयं सर्पराज्ञी '* इत्यादि । चतुर्होतॄनिति 'चित्तिस्स्रुक्'† इत्याद्यान् पञ्चानुवाकान् । स्तुत्यनन्तरं मनसा 'आयं गौः'‡ इत्याद्याश्शंसति । शान्त्यर्थं भवति । अन्तो वा इत्यादि । गतम् ॥

[3]वाचं यच्छतीति ॥ स्तोत्रशस्त्रसमाप्तौ वाचं यच्छति बहिर्वाचो वृत्तिं नियच्छति निवर्तयति । तद्यज्ञस्यैव धृत्यै भवति ॥

[4]यजमानदेवत्यं वा इति ॥ प्रकाशवत्तया तत्सामान्यात् । विपर्ययाद्रात्रिः भ्रातृव्यदेवत्या । छन्नं हि भ्रातृव्या अपकुर्वन्ति । अह्ना अहस्त्वेनाह्नो रूपेण रात्रिं ध्यायेत् । ततो रात्र्यभावात् भ्रातृव्यस्य लोकं स्थानं वृङ्क्ते वर्जयति । यद्दिवेत्यादि । यद्यहि

* तै.सं. ७-३-१. † तै. आ. ३-१. तै.सं. १-६-३.

विसृजेत् । अहुर्भ्रातृव्यायोच्छिꣳषेत् । यन्नक्तं वि-
सृजेत् । रात्रिं भ्रातृव्यायोच्छिꣳषेत् । [5]अधिवृक्ष-
सूर्ये वाचं विसृजति । एतावन्तमेवास्मै लोकमु-
च्छिꣳषति । यावदादित्योऽस्तमेति ॥ ३७॥

पृश्निं तिष्ठन्ति गमयति शिꣳषेत्पश्चं च ॥६॥

[1]प्रजापतिः प्रजा असृजत। तास्सृष्टास्समश्लि-

---

वाचं विसृजेत् वाग्व्याजेनाहरनेन त्यक्तमिति भ्रातृव्यायाहरु-च्छिषेत् उच्छिष्टमेव त्यजेत् जह्यात्, रात्रौ चेत् रात्रिमुच्छिषेत् भ्रातृव्याय । द्विविकरणत्वेन श्रंश्र ॥

[5]अधिवृक्षसूर्य इति ॥ सूर्यकार्य आतपस्सूर्यशब्देनोच्यते । वृक्षस्योपर्यातपस्तिष्ठति यस्मिन् काले न भूम्यां सोऽधिवृक्षसूर्यः । तिष्ठद्गुप्रभृतित्वेन अव्ययीभावे समासान्तोदात्तत्वम् । एतावन्तमिति । ततःप्रभृति यावदादित्योऽस्तमेति एतावन्तमेव लोकं स्थानं एततुल्यमतिसंकुचितं स्थानमुच्छिषेत् उच्छेषयति अस्मै भ्रातृव्याय सर्वमन्यदपहरतीति ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयप्रपाठके
षष्ठोऽनुवाकः.

---

[1]प्रजापतिः प्रजा असृजतेत्यादि ॥ प्रजापतिना सृष्टास्सर्वाः प्रजाः समश्लिष्यन् संश्लिष्टा एकीभूता एकरूपेण नाम्ना चावि-

ष्यन् । ता रूपेणानु प्राविंशत् । तस्मादाहुः । रूपं वै प्रजापतिरिति । ता नाम्नाऽनु प्राविंशत् । तस्मादाहुः । नाम वै प्रजापतिरिति । तस्मादप्यांऽमित्रौ संगत्य । नाम्ना चेद्ध्वयेते ॥ ३८ ॥ मित्रमेव भंवतः । प्रजापतिर्देवासुरानसृजत । स इन्द्रमपि नासृजत । तं देवा अंब्रुवन् । इन्द्रं नो जनयेति । स आत्मन्निन्द्रमपश्यत् । तमसृजत । तं त्रिष्टुग्वीर्यं भूत्वाऽनु प्राविंशत् । [2]तस्य वज्रः पञ्चदशो हस्त आपद्यत । तेनोदर्यासुरानभ्यंभवत् ॥ ३९ ॥ य

---

लक्षणा अभवन् । अथ प्रजापतिस्ताः प्रजा रूपेणानुप्राविशत् । गवादीनां यद्यद्विलक्षणं रूपं तेन तेन रूपेण विभक्तात्मा स्वयमेव तासु प्राविशत् तस्माद्रूपं प्रजापतिरित्याहुः । तथा नाम्ना चानुप्राविशत् गौरश्वः खण्डो मुण्ड इत्यादिलक्षणेन नाम्ना विभक्तात्मा स्वयमेव तास्वनु प्रविश्य अतिष्ठत् । तस्मात्पूर्वममित्रावपि अमित्रावेवामित्रौ, स्वार्थिकोण्, अन्तोदात्तत्वं चोपदिश्यते । तौ द्वौ संगत्य परस्परस्य नाम्ना चेदाह्वयेते परस्परं मित्रमेव भवतः, नाम्नः प्रजापतित्वात्तस्य च सर्वमित्रत्वात् । अपिशब्दात् कश्चिदाकारः प्रश्लिष्यते । तदा आकार आख्यातेनान्वीयते । तस्य परेण एकादेशस्वरेणोदात्तत्वं अप्राप्तं व्यत्ययेन भवति ॥

[2]तस्येत्यादि ॥ पञ्चदशः स्तोमः पञ्चदशावयवो वज्रो भूत्वा

एवं वेद । अभि भ्रातृव्यान्भवति । [3]ते देवा असुरैर्विजित्य । सुवर्गं लोकमायन् । तेऽमुष्मिन्लोके व्यक्षुध्यन् । तेऽब्रुवन् । अमुतः प्रदानं वा उपजिजीविमेति । ते सप्तहोतारं यज्ञं विधायायास्यम् । आङ्गिरसं प्राहिण्वन् । एतेनामुत्र कल्पयेति ॥१०॥

---

तस्येन्द्रस्य हस्ते आपद्यत आगच्छत् । तेनोदय्य उत्पत्य असुरानभ्यभवत् अभिभूतवान् । य एवमित्यादि । गतम् ॥

[3]असुरैर्विजित्येति ॥ असुरव्यावृत्त्या जयं लब्ध्वा स्वर्गं गताः । तेऽमुष्मिन् परस्मिन् लोके व्यक्षुध्यन् विशेषेण क्षुधिता आसन् । अथ देवा अब्रुवन्—अमुतः प्रदानं अमुना मनुष्यलोकेन यत्प्रदीयते तद्वयमुपजीवामः तस्मादित्थं कुर्म इति मत्वा सप्तहोतारं यज्ञं विधायायास्यं नाम ऋषिं अङ्गिरसोपत्यं प्राहिण्वन् मनुष्यलोके प्रेषितवन्तः । एतेन यज्ञेनामुत्र मनुष्यलोके कल्पय यागसाधनं निर्वर्तय, येन वयं यागद्वारेण क्षुधमपहन्म इति । ननु 'तस्मादितः प्रदानं देवा उपजीवन्ति' * इत्युक्तं, तत्कथमुच्यते अमुतः प्रदानं वयमुपजीवाम इति? तत्रस्थानां देवानामयं व्यवहारः । तत्रस्था हि मनुष्यलोकममुमाहुः, यत्रस्थास्तम् । दूरस्थासंनिहितवाचित्वाददश्शब्दस्य । उपजिजीविमेति छान्दसो लिट् । अमुतःप्रदानमिति सार्वविभक्तिकस्तसिल् । क्तुत्तरपदप्रकृतिस्वरत्वं बाधित्वा अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

---

* तै.सं. ३-२-९.

[4]तस्य वा इयं क्लृप्तिः। यदिदं किंच। य एवं वेद। कल्पतेऽस्मै। [5]स वा अयं मनुष्येषु यज्ञस्सप्तहोता। अमुत्र सद्भ्योय देवेभ्यो हव्यं वहति। य एवं वेद। उपैनं यज्ञो नमति। [6]सोऽमन्यत। अभि वा इमेऽस्माल्लोकादमुं लोकं कमिष्यन्त इति। स वाचस्पते हृदिति व्याहरत्। तस्मात्पुत्रो हृ-

[4]तस्य वा इत्यादि ॥ यदिदं मनुष्यलोके यत्किंचिद्दृश्यते पशुमृगधान्यादि तत्सर्वं तस्यायास्यस्यैवेयं क्लृप्तिः कल्पना। लिङ्गं च—'अयास्य उद्गाता' *इति। य एवं वेद अस्मै कल्पते अभीष्टभावाय भवत्ययं लोकः, अयं वा सप्तहोता ॥

[5]स वा इत्यादि ॥ मनुष्यलोकेऽवतीर्णः सप्तहोता अमुत्र विद्यमानेभ्यो देवेभ्यो हव्यं वहति, यागनिर्वृत्तिहेतुत्वात्। एवं वेदितारं यज्ञ उपनमति उपसंप्राप्नोति, फलाव्यभिचारात् ॥

[6]सोमन्यतेत्यादि ॥ एवमित्थमिमं मनुष्यलोकं क्लृप्तवानायास्योऽमन्यत—यथा मया कृतं, इत्थमिमे सर्वे मनुष्या अनुत्पाद्यैव पुत्रान् अस्मान्मनुष्यलोकात् अमुं लोकं गन्तुमभिकमिष्यन्ते। ततश्च मानुषस्तन्तुः उच्छिद्यत इति। 'हृत्'* इति ग्रहप्रतीकं व्याहरत् 'मा दैव्यस्तन्तुश्छेदि मा मनुष्यः'* इत्यादि च। तस्मात्ततःप्रभृति पुत्र एव पितुर्हृदयमभूत्। पुत्रा एवोत्पाद्याः, न त्वरितेनापुत्रेणैव स्वर्गार्थं यष्टव्यमिति। यस्मादेवं

* ते. आ. ३—९.

दयम् । तस्मादस्माल्लोकादमुं लोकं नाभिकामयन्ते । पुत्रो हि हृदयम् ॥ ४१ ॥

ह्ययैते अभवत्कल्पयेतीति चत्वारि च ॥ ७ ॥

देवा वै चतुर्होतृभिर्यज्ञमतन्वत । ते वि पाप्मना भ्रातृव्येणाजयन्त । अभि सुवर्गं लोकमजयन् । य एवं विद्वाꣳश्चतुर्होतृभिर्यज्ञं तनुते । वि पाप्मना भ्रातृव्येण जयते । अभि सुवर्गं लोकं जयति[2] । षड्ढोत्रा प्रायणीयमासादयति ।

---

तस्माल्लोकादमुं लोकं त्वरिता नाभिकामयन्ते पुत्रानेव तानुत्पादयन्ति सन्तानवृद्ध्यर्थम् । तदिदमाह—पुत्रो हि हृदयमिति। पितैव पुत्र इति केचित् ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः.

---

[1]देवा वा इत्यादि ॥ चतुर्होतृभिर्दशहोत्रादिभिः पञ्चभिः उपकरणभूतैः यज्ञमतन्वत देवाः । अथ पाप्मना भ्रातृव्येण व्यजयन्त व्यावृत्तं जयं प्राप्तवन्तः । पाप्मना वियुक्ता अभवन्नित्यर्थः । स्वर्गं लोकं चाभ्यजयन् । एवमित्यादि । गतम् ॥

[2]षड्ढोत्रेति ॥ प्रायणीयं हविरासादयति । अमुष्मै लोकाय अस्य द्युलोकस्य प्राप्तये । षड्ढोतैव पर्याप्तो भवति ।

अमुष्मै वै लोकाय षड्ढोता । घ्नन्ति खलु वा एतत्सोमम् । यदभिषुण्वन्ति ॥ ४२ ॥ ऋजुधैवैनममुं लोकं गमयति । [3]चतुर्होत्राऽऽतिथ्यम् । यशो वै चतुर्होता । यश एवात्मन्धत्ते । पञ्चहोत्रा पशुमुप सादयति । सुवर्ग्यो वै पञ्चहोता । यजमानः पशुः । यजमानमेव सुवर्गं लोकं गमयति । ग्रहान्गृहीत्वा सप्तहोतारं जुहोति । [4]इन्द्रियं वै सप्त-

---

अभिषवो नामायं सोमस्य वधः । तस्माद्धिंसानिमित्ताधर्मापनोदनेन ऋजुधा पावनेन मार्गेण एनं यजमानं अमुं लोकं गमयितुं षड्ढोतैव पर्याप्तो भवतीति । ऋजु धारयतीत्यृजुधा, विधि तृतीयैकवचने आतो लोपे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । यद्वा—सोमो हतत्वात् न स्वर्गस्य गमयिता, तस्मात् षड्ढोतैव अविलम्बनेन मार्गेण स्वर्गं गमयति । तस्मात् षड्ढोत्रा प्रायणीयं स्वर्गगमनारम्भप्रयोजनं हविरासादयति । अनुप्रवचनादित्वाच्छः । यद्वा—स्वर्गं प्राप्तुमारभ्यतेऽनेनेति प्रायणीयं, करणे अनीयर् प्रत्ययः ॥

[3]चतुर्होत्रेति ॥ आसादयतीत्येव । यशो वा इति । तद्धेतुत्वात्ताच्छब्द्यम् । अतिथिपूजया यशस्वी भवति । यजमान एव स्वयं पशुः प्रधानत्वाच्च ॥

[4]इन्द्रियं वा इति ॥ ग्रहणेन क्षीणं वीर्यं पुनरात्मनि स्थापयति ॥

होता ॥ ४३ ॥ इन्द्रियमेवात्मन्धत्ते । [5]यो वै चतुर्-होतृननुसवनं तर्पयति । तृप्यति प्रजया पशुभिः । उपैनꣳ सोमपीथो नमति । बहिष्पवमाने दशहोतारं व्याचक्षीत । माध्यंदिने पवमाने चतुर्होतारम् । आर्भवे पवमाने पञ्चहोतारम् । पितृयज्ञे षड्ढोतारम् । यज्ञायज्ञियस्य स्तोत्रे सप्तहोतारम् । अनुसवनमेवैनाꣳस्तर्पयति ॥ ४४ ॥ तृप्यति प्रजया पशुभिः । उपैनꣳ सोमपीथो नमति । [6]देवा वै चतुर्होतृभिस्सत्रमासत । ऋद्धिपरिमितं यशस्कामाः । तेऽब्रुवन् । यन्नः प्रथमं यश ऋच्छात् । सर्वेषां नस्तत्सहासदिति । सोमश्चतुर्होत्रा । अग्निः पञ्चहोत्रा । धाता षड्ढोत्रा ॥ ४५ ॥ इन्द्र-

---

[5]यो वा इत्यादि ॥ अनुसवनं सवने सवने, यथार्थेऽव्ययीभावः । पितृयज्ञे पुरोडाशशकलावसाने ॥

[6]देवा वा इत्यादि ॥ ऋद्धिपरिमितं ऋद्ध्या फलेन परिच्छिन्नं यावत्फलोदयं कर्तव्यं 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । समयं च कृतवन्तः—अस्माकं मध्ये प्रथमं यं देवं यशः प्राप्नोति तत्तदीयं यशः सर्वेषामस्माकं सहासत् साधारणमस्त्विति । अस्तेर्लेटि अडागमः । कः केन होत्रा आस्त इत्याह—सोम इत्यादि । गतम् ॥

स्सप्तहोत्रा । प्रजापतिर्दशहोत्रा । तेषा१ँ सोम१ँ राजानं यश आर्च्छत् । [7]तन्न्यकामयत । तेनापाक्रामत् । तेन प्रलायमचरत् । तं देवाः प्रैषैः प्रैषमैच्छन् । तत्प्रैषाणां प्रैषत्वम् । निविद्भिर्न्यवेदयन् । तन्निविदां निवित्त्वम् ॥ ४६ ॥ आप्रीभिराप्नुवन् । तदाप्रीणामाप्रित्वम् । तमघ्नन् । तस्य यशो व्यगृह्णत । ते ग्रहा अभवन् । तद्ग्रहाणां ग्रहत्वम् । यस्यैवं विदुषो ग्रहा गृह्यन्ते । तस्य त्वेव गृहीताः ।

[7]तन्न्यकामयत इत्यादि ॥ स सोमः तत् यशः न्यकामयत न्यग्भावेनातिलोभेन देवेभ्यो दातुमनिच्छन् ममैवेदमस्त्वित्यकामयत । अथ तथा कामयमानः तेन यशसा सहापाक्रामत् देवसकाशात्पलायत । अपक्रम्य तेन यशसा सह प्रलायं प्रलीय अदृश्यो भूत्वा अचरत् । लीयतेर्णमुल् । अथ देवाः प्रैषैः तं प्रैषं प्रेषितुं प्राप्तुमैच्छन् 'होता यक्षत्'* इत्याद्याः प्रैषाः, प्रेषणसाधनत्वात्प्रैषाः । निविद्भिः 'अग्ने महां असि'† इत्यादिभिः न्यवेदयन् अग्नये निवेदितवन्तः । तस्मान्निवेदनहेतुत्वान्निविदः । अत आप्रीभिः 'समिद्धो अद्य'‡ इत्यादिभिस्तमाप्नुवन् । तस्मादाप्तिहेतुत्वादाप्रीत्वम् । आप्नोतेरौणादिकः क्विप्रत्ययः । अथ तं सोमं प्राप्य अघ्नन् हत्वा च तदीयं यशः व्यगृह्णत पृथक्पृथग्गृहीतवन्तः । तद्देवानां प्रत्येकं स्वभूता ग्रहा अभवन् तस्मा-

* तै. ब्रा. २-६-७. † तै. ब्रा. ३-५-१. ‡ तै. ब्रा. ३-६-१.

[6]तेऽब्रुवन् । यो वै नश्श्रेष्ठोऽभूत् ॥१७॥ तमवधिष्म । पुनरिमꣳ सुवामहा इति । तं छन्दोभिरसुवन्त । तच्छन्दसां छन्दस्त्वम् । साम्ना समानयन् । तथ्साम्नस्सामत्वम् । उक्थैरुदस्थापयन् । तदुक्थानामुक्थत्वम् । य एवं वेद । प्रत्येव तिष्ठति ॥१८॥ सर्वमायुरेति । [7]सोमो वै यशः । य एवं विद्वान्थ्सोमंमागच्छति । यश एवैनमृच्छति । तस्मादाहुः ।

त् गृहीतत्वाद्ग्रहाः । एवं विदुष एव ग्रहाः गृहीता भवन्ति अविदुषस्तु गृहीता अपि अगृहीता एव ॥

---

[6]तेऽब्रुवन्नित्यादि ॥ अस्माकं श्रेष्ठमिमं हतवन्तो वयं, तस्मादिमं पुनरपि सुवामहै उत्पादयामः । अथ तं छन्दोभिरुत्पादितवन्तः । तस्मात् छन्दोहेतुत्वात् छन्दांसि । सामनहेतुत्वात्सामानि । 'साम सान्त्वने' । उत्थानहेतुत्वादुक्थत्वम् । उत्पूर्वात्तिष्ठतेस्सुपि 'स्थः' इति के उपसर्गान्त्यविकारश्छान्दसः । य एवमित्यादि गतम् ॥

[7]सोमो वा इत्यादि ॥ स्वयं सोम एव यशः, बहुमानहेतुत्वात् । तस्मात् य एवं विद्वान् सोम एव यश इति जानन् सोममागच्छति भजते । यश एव स्वयमेनमृच्छति भजते । यस्मादेवं तस्मात् यश्चैवं सोमयशसोस्तादात्म्यं वेद, यश्च न वेद तावुभावपि सोममागच्छतः सोमं भजेते । सोमो हि यशः, यशश्चैतौ प्रार्थयमानौ भवतः । तस्मादेतौ

यश्चैवं वेद यश्च न । तावुभौ सोममागच्छतः । सोमो हि यशः । तं त्वाऽव यश ऋच्छतीत्याहुः । यस्सोमे सोमं प्राहेति । तस्मात्सोमे सोमः प्रोच्यः । यश एवैनमृच्छति ॥ ४१ ॥

अभिषुण्वन्ति सप्तहोता तर्पयति षड्ढोत्रा
निवित्त्वमभूत्तिष्ठति प्राहेति द्वे च ॥८॥

[1]इदं वा अग्रे नैव किंच नासीत् । न द्यौरासीत् । न पृथिवी । नान्तरिक्षम् । तदसदेव सन्मनोऽकुरु-

---

सोममागच्छतः । अस्ति त्वत्र विशेषः—यद्यपि सर्वः सोममागच्छति, तथाऽपि तमेव यशः ऋच्छति गच्छतीत्याहुः । कं यः सोमकर्मणि निर्वर्त्यमाने तं सोमं सप्तहोतारं प्राह सदसि व्याचष्टे, अस्य महत्त्वं प्रवक्तुं शक्नोति तमेव यश ऋच्छतीत्याहुः । तस्मात्सोमे सोमः प्रोच्यः प्रवक्तव्यः । यशः एनं प्रवक्तारमृच्छत्येव ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयप्रपाठके
अष्टमोऽनुवाकः ॥

---

[1]इदं वा इत्यादि ॥ यदिदं दृश्यमूतं द्रव्यादिपदार्थषट्कात्मकं प्रपञ्चरूपं इदं किंचिदपि अग्रे आद्यसृष्टेः प्राक् नैवासीत् । किंचनग्रहणं कात्स्न्यनिषेधाय । इदंग्रहणं दृश्यनिषेधाय । एवमसच्छब्दस्य निमित्तार्थो दर्शितः । इदानीं विशेषतः प्रदर्शयति—

त स्यामिति । तदेतप्यत । [2]तस्मात्तेपानाद्धूमोऽजायत । तद्भूयोऽतप्यत । तस्मात्तेपानादग्निरजायत । तद्भूयोऽतप्यत ॥५०॥ तस्मात्तेपानाज्ज्योतिरजायत । तद्भूयोऽतप्यत । तस्मात्तेपानादर्चिरजायत । तद्भूयोऽतप्यत । तस्मात्तेपानान्मरीचयो-

न द्यौरित्यादि । अथ प्रपञ्चोत्तीर्णं तत् ब्रह्म तेनैव प्रपञ्चरूपेण असत् अविद्यमानं औपाधिकं हि सत्त्वं ब्रह्मणः । तत्सदभवत् । कुतः ? यतः मनोऽकुरुत स्यामिति ; आचार्य उपनयत इतिवद्द्रष्टव्यम् । मनस्कार आदरः, प्रपञ्चात्मना स्यामिति यस्मादैक्षत तस्मात्सदभवत् । एतेन सच्छब्दस्य प्रवृत्तिनिमित्तं दर्शितम्, निर्वचनं च । स्वेच्छैव सामग्रीति दर्शयितुमेवकारः । 'सदेव सोम्य' इत्यत्र 'बहु स्याम्' इतीक्षणं लब्धसद्व्यपदेशस्य । अथ तन्मनस्कुर्वत् सत् अतप्यत ध्यानसंपादितं 'चित्तिः स्रुक्'* इत्यादिकं अध्यात्मयागात्मकं तपोऽतप्यत । वक्ष्यति 'असतोऽधि मनोऽसृज्यत'† इति । तत्र तदिति ब्रह्मणो यन्मनस्कुर्वन्मात्ररूपं तदुच्यते यत्तत्त्वानामाद्यं, पदानां परमं, तद्ब्रह्मणः आद्यं विजृम्भणं सदित्युच्यते स्यामिति संकल्पात् । अथ तस्य तप्यमानं रूपं तद्दशहोत्रात्मा प्रजापतिः, तस्य तप्यमानरूपस्य इयं वर्णना । वक्ष्यति 'य एवं तपसो वीर्यं विद्वान्'† इति ॥

[2]तस्मादित्यादि ॥ तेपानात् तप्तवतः, लिटः कानजादेशः । धूमाग्नी गतौ । ज्योतिः प्रकाशः । अर्चिः ज्वाला । मरीचयः

* तै. आ. ३-१. † तै. आ. २-२-९.

ऽजायन्त । तद्भूयोऽतप्यत । तस्मात्तेपानादुदारा अजायन्त । तद्भूयोऽतप्यत । तदभ्रमिव समहन्यत । तद्वस्तिमभिनत् ॥५१॥ स समुद्रोऽभवत् । तस्मांथ्समुद्रस्य न पिबन्ति । प्रजननमिव हि मन्यन्ते । तस्मात्पशोर्जायमानादापः पुरस्ताद्यन्ति । तद्दशहोताऽन्वसृज्यत । प्रजापतिर्वै दशहोता । य

---

शिखाः । उदाराः अधिष्ठानं भित्वा बहिर्गता दीप्तयः । अथ तद्भूमादि सर्वं अभ्रमिव समहन्यत संहतमभवत् तपो वेगाध्मातं धूमादिभावेन परिणतं संहातमिव तदभवत् मूर्तमिव तदभवत् । अथ तदात्मनो वस्ति अधःप्रदेशमभिनत् । अथ तेन यत् स्रुतमुदकं तत्समुद्रोऽभवत् । तस्मात्समुद्रजलं न पिबन्ति । कर्मणस्संप्रदानत्वमुक्तं, चतुर्थ्यर्थे षष्ठी । तस्मात्प्रजननमिव, यस्मान्मन्यन्ते तस्माद्गर्भस्य प्रजननं गर्भोदकम् । तस्मादद्यत्वेऽपि पशोर्जायमानात् पूर्वं आपो यन्ति निर्गच्छन्ति, पश्चात्पशुर्निर्गच्छति । अथ तदनु वस्तिभेदानन्तरमेव दशहोता प्रजापतिरन्वसृज्यत उदपादि अजायत, प्रजाः भूतेन्द्रियाणि, यस्तेषामुत्पत्तिहेतुस्स प्रजापतिर्दशहोता ॥

* य एवमित्यादि । पूर्वोक्तस्य तपसः सामर्थ्यं विद्वान् यः स्वयं तपः करोति सोऽयमैश्वर्यं प्राप्नोत्येव ॥

---

* एतदारभ्यानुवाकसमाप्ति भट्टभास्करभाष्यस्य मातृकाकोशेष्वलाभान्माधवीयमेवात्र भाष्यं निवेशितम्.

एवं तपसो वीर्यं विद्वाꣳस्तप्यते । भवत्येव । [3]तद्वा इदमापस्सलिलमासीत् । सोऽरोदीत्प्रजापतिः ॥ स कस्मा अज्ञि । यद्यस्या अप्रतिष्ठाया इति । यदप्स्ववापद्यत । सा पृथिव्यभवत् । यद्व्यमृष्ट । तदन्तरिक्षमभवत् । यदूर्ध्वमुदमृष्ट । सा द्यौरभवत् । यदरोदीत् । तदनयो रोदस्त्वम् ॥ ५३ ॥ य एवं वेद । नास्य गृहे रुदन्ति । एतद्वा एषां लोकानां

---

[3]अथ लोकत्रयसृष्टिं दर्शयति—तद्वा इत्यादि ॥ तदिदं परमात्मना सृष्टं जगत् समुद्ररूपेण सलिलमासीत् । तस्मिन् सलिले पृथिवीमिश्रणं वारयितुमाप इत्युक्तम् । केवलं जलमेवासीदित्यर्थः तदिदं निरन्तरं जलं दृष्ट्वा दशहोतृरूपः स प्रजापतिररोदीत् । रुदतस्तस्यायमभिप्रायः——यद्यहमप्रतिष्ठाया अवस्थातुमयोग्यायाः अविद्यमानायाः अस्याः पृथिव्यास्सकाशात् किमपि प्राणिजातं स्रष्टुं न शक्नोमि, तर्हि तादृशस्सोहं कस्मा अज्ञि किमर्थमुत्पादितोस्मीति । रुदतस्तस्य यन्नेत्रजलादिकं समुद्ररूपास्वप्सु पतितं तत् घनीभूतं पृथिव्यभवत् । तस्याः पृथिव्याः उपर्युच्चावचभावं वारयितुं विविधं मार्जनं कृतवान् । तच्च मृष्टं स्थानमन्तरिक्षमभूत् । ततो हस्तमूर्ध्वं प्रसार्य यत्स्थानममृष्ट सा द्यौरभवत् । यस्मात्प्रजापतिररोदीत् तेन च रोदनेन द्यावापृथिव्यौ उत्पन्नौ । तस्माद्रोदश्शब्दाभिधेयत्वं तयोस्संपन्नम् । तं प्रकारं वेदितुर्गृहे बन्धुमरणाभावान्न केऽपि रुदन्ति । योऽयं

जन्म । य एवमेषां लोकानां जन्म वेद । नैषु लोकेष्वार्तिमार्च्छति । [4]स इमां प्रतिष्ठामविन्दत । स इमां प्रतिष्ठां वित्वाऽकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स जघनादसुरानसृजत ॥ ५४ ॥ तेभ्यो मृन्मये पात्रेऽन्नमदुहत् । याऽस्य सा तनूरासीत् । तामपाहत । सा तमिस्राऽभवत् । [5]सोऽकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स प्रजननादेव प्रजा

---

लोकत्रयजन्मप्रकारं वेद तद्वेत्ता लोकत्रये नाशं न प्राप्नोति । स प्रजापतिरिमां पृथिवीं प्रतिष्ठां सक्ष्यमाणप्राण्याधारभूतामलभत ॥

[4]अथ तस्यां पृथिव्यामासुरसृष्टिं दर्शयति—स इमामित्यादि ॥ स प्रजापतिः इमां भूमिं स्त्रक्ष्यमाणप्राण्याधारयोग्यां लब्ध्वा प्रजोत्पादनं कामयमानः तदुपायपर्यालोचनरूपं तपः कृत्वा स्वयमेव देहान्तरेण गर्भवानभूत् । तस्य गर्भयुक्तस्य जघनभागादसुरानसृजत । तेभ्यः कस्मिंश्चिन्मृत्पात्रे भोजनार्थमन्नं प्रक्षिप्य दत्तवान् । ततोऽसुराणामुत्पादिका या स्वीया तनूस्तां विनाशितवान् । सा तनूश्शरीराकारं परित्यज्य तमोयुक्ता रात्रिरभवत् ॥

[5]अथ मनुष्यादिसृष्टिं दर्शयति—सोकामयतेत्यादि ॥ प्रजननात्प्रजोत्पादनसमर्थाद्द्वारात् हि यस्मादुत्पादनसामर्थ्यं कारणं तस्मा-

असृजत । तस्मा॒दि॒मा भूयि॑ष्ठाः । प्र॒जन॑ना॒द्ध्यैना॑ असृजत ॥५५॥ ताभ्यो॑ दारु॒मये॒ पात्रे॒ पयो॑ऽदुहत् । या॑ऽस्य॒ सा त॒नूरासी॑त् । ताम॒पाह॑त । सा जोत्स्ना॑ऽभवत् । [6]सो॑ऽकामयत॒ प्रजा॑ये॒येति॑ । स तपो॑ऽतप्यत । सो॑ऽन्तर्वा॑नभवत् । स उ॑पप॒क्षाभ्या॑मि॒वर्तू॒नसृजत । तेभ्यो॑ रज॒ते पात्रे॑ घृतम॑दुहत् । या॑ऽस्य॒ सा त॒नूरासी॑त् ॥५६॥ ताम॒पाह॑त । सो॑ऽहोरा॒त्रयो॑स्स॒न्धिर॑भवत् । [7]सो॑ऽकामयत॒ प्रजा॑ये॒येति॑ । स तपो॑ऽतप्यत । सो॑ऽन्तर्वा॑नभवत् । स मु॑खाद्दे॒वान॑सृजत । तेभ्यो॒ ह॑रिते॒ पात्रे॒ सोम॑मदुहत् । या॑ऽस्य॒ सा त॒नूरासी॑त् । ताम॒पाह॑त । तद॑हरभवत् ॥५७॥ [8]ए॒ते वै प्र॒जाप॑ते॒र्दोहाः॑ । य ए॒वं

स्प्रजा अत्यन्तबहुलाः । जोत्स्ना चन्द्रप्रकाशः । अन्यत्पूर्ववद्व्याख्येयम् ॥

[6]अथ वसन्तादिकालाभिमानिपुरुषस्य सृष्टिं दर्शयति—सोकामयतेत्यादि । पूर्ववद्व्याख्येयम् ॥

[7]अथ देवसृष्टिं दर्शयति—सोकामयतेत्यादि । पूर्ववद्व्याख्येयम् ॥

[8]अथोक्तानामन्नपयोघृतसोमानां वेदनं प्रशंसति—एते वा इत्यादि ॥ गोभ्यः क्षीरमिव प्रजाभ्यो धनं लभत इत्यर्थः ॥

वेद॑ । दु॒ह ए॒व प्र॒जाः । [9]दिवा॒ वै नो॑ऽभू॒दिति॑ । त-
द्दे॒वानां॑ दे॒व॒त्वम् । य ए॒वं दे॒वानां॑ दे॒व॒त्वं वेद॑ । दे॒-
व॒वा॑ने॒व भ॑वति । [10]ए॒तद्वा अ॑हो॒रा॒त्राणा॒ं जन्म॑ ।
य ए॒वम॑हो॒रा॒त्राणां॒ जन्म॒ वेद॑ । नाहो॒रा॒त्रेष्वार्ति॒-
मार्च्छ॑ति ॥५८॥ [11]अस॒तोऽधि॒ मनो॑ऽसृज्यत । म-
नः॑ प्र॒जाप॑तिमसृजत । प्र॒जाप॑तिः प्र॒जा अ॑सृजत ।

[9]देवतावेदनं प्रशंसति—दिवा वा इत्यादि ॥ देवानामुत्पादिका या प्रजापतेस्तनूः सेयमहोरूपेण निष्पन्ना । अतो देवा हर्षादस्माकं दिवैवाभूदित्युच्चारितवन्तः । अतो दिवायोगेन देवत्वं संपन्नम् । तद्वेदिता देववान् प्रकाशवान् भवति ॥

[10]तदेतद्देवासुरोत्पादकतनूभ्यामहोरात्रयोर्जन्म, तस्य वेदनं प्रशंसति—एतद्वा इत्यादि ॥

[11]'तदसदेव सन्मनोकुरुत स्याम्'* इति प्रथमभावि परमात्मनो यन्मनः पूर्वमुक्तं, तदेतन्मनः प्रशंसति—असतोऽधीत्यादि ॥ यत्किंचिदिदं जगदिदानीं दृश्यते तदिदं सर्वं मूलकारणे परमात्ममनस्येव सम्यक्प्रतिष्ठितम् । सत्संकल्पाधीना असतः सृष्टिस्थितिप्रलयाः । तदेतत्संकल्पितार्थं मनः श्वोवस्यसनामकं ब्रह्म । यदुत्तरोत्तरदिने वसीयः अतिशयेन श्रेष्ठं श्वोवस्यसम् । द्विविधं हि ब्रह्म 'सत्यं ज्ञानमनन्तं ब्रह्म'† इत्येवंलक्षणं सजातीयविजातीयस्वगतभेदरहितत्वान्निजस्वरूपमात्रे पर्यवसितं सर्वजनैकरूपमेकं ब्रह्म । अत एव तदेतच्छ्वोवस्यसं न भवति निर्विकारत्वेन तस्य स्रष्टृत्वाभावात् । तदेव सर्व-

* तै.आ. ८-२-९.  † तै. उ. ८-१.

तद्वा इदं मनस्येव परमं प्रतिष्ठितम् । यदिदं किंचं । तदेतच्छ्वोवस्यसंनाम ब्रह्म । [12]व्युच्छन्ती व्युच्छन्त्यस्मै वस्यसी वस्यसी व्युच्छति । प्रजायते प्रजया पशुभिः । प्र परमेष्ठिनो मात्रामाप्नोति । य एवं वेद ॥५९॥ अग्निरजायत तद्भूयोऽतप्यताभिनदरोदीत्प्रजापती रोदस्त्वमसृजतासृजत घृतमदुह्यथाऽस्य सा तनूरासीदहरभवदृच्छति वेद ॥

इदं धूमोऽग्निर्ज्योतिरर्चिर्मरीचय उदारास्तदभ्रꣳ स जघनाथ्सा तमिस्रा स प्रजननाथ्सा ज्योत्स्ना स उपपक्षाभ्याꣳ सोऽहोरात्रयोस्सन्धिस्स मुखात्तदहर्देववान्मृन्मये दारुमये रजते हरिते तेभ्यस्ताभ्यो द्वे तेऽन्नं पयो घृतꣳ सोमम् ॥

---

सृष्टिगोचरशक्तियुक्तं सत्सोपाधिकत्वेनान्यद्ब्रह्म भवति। संकल्पपरंपरया प्रतिक्षणमुत्तरोत्तराधिकजगत्स्रष्टृत्वादीदृग्ब्रह्मरूपत्वान्मनः प्रशस्तम् ॥

[12]तदेतद्वृत्तान्तवेदनं प्रशंसति—व्युच्छन्तीत्यादि । यथोक्तं ब्रह्मसृष्टिप्रकारं विदित्वोपास्तेऽस्मै वेदित्रे प्रातिदिनं प्रभातं कुर्वती देवता पुनरधिकश्रेयस्करा सती प्रभातं करोति, दिनेदिने श्रेयोऽभिवर्धत इत्यर्थः । इह लोके प्रजापशुसंपन्नः परलोके परमेष्ठिनः प्रजापतेरैश्वर्यस्य या मात्रा परिच्छित्तिः तां सर्वामपि प्राप्नोति ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः. ॥

[1]प्रजापतिरिन्द्रमसृजतानुजावरं देवानाम् । तं प्राहिणोत् । परेहि । एतेषां देवानामधिपतिरेधीति । तं देवा अब्रुवन् । कस्त्वमसि । वयं वै त्वच्छ्रेयाꣳसस्स्म इति । सोऽब्रवीत् । कस्त्वमसि

[1]प्रजापतिरित्यादि ॥ आनुजावरं अनुजवदवरं कर्म कुर्वाणं प्राहिणोत् प्रेषितवान् । परेहि गच्छ पश्चाज्जातानां देवानां त्वमेवाधिपतिरेधि भवेति । अथ तं देवसकाशं स्वामित्वेन गतमिन्द्रं देवा अब्रुवन्—कस्त्वमसि स्वामित्वस्य, त्वत्तोपि वयं श्रेयांसः प्रवृत्ततरा ऐश्वर्येण स्म इति । अथ तच्छ्रुतवानिन्द्रः प्रजापतिसकाशं गत्वाऽब्रवीत्—कस्त्वमसि वयं वै त्वच्छ्रेयांसस्स्म इति देवा मामवोचन् उक्तवन्तः, इदानीं किं क्रियतामिति । अथ यदिदानीमादित्ये इदं दृश्यते हरः तेजः प्रकृष्टं तादिदं तर्हि तस्मिन् काले प्रजापतावासीत् । प्रजापतौ पश्यन्निन्द्रः ततदानीमेनं प्रजापतिमब्रवीत्—एतत् त्वयि वर्तमानं हरः मह्यं प्रयच्छ, अथ एतद्यदि लभ्यते तदानीमेवाहमाधिपतिर्भविष्यामीति नान्यथा गतिरिति । अथ प्रजापतिरब्रवीत्—एतत्तुभ्यं प्रदाय कोऽहं स्यां किंरूपस्स्यां, इदं मे प्रशस्तं रूपं, इदं चेत्तुभ्यं दीयते प्रजापतिरेव कथं स्यामिति । अथेन्द्रोऽब्रवीत् सत्यमुक्तं जगद्गुरुणा कोऽहं स्यामिति, एतन्मह्यं प्रदाय एतदेव स्याः । किम्? यद्ब्रवीषि क इति । एतद्रूपस्स्याः प्रजापतिरेव भविष्यसीति भावः । ननु कोऽहं स्यामिति पृष्टे क एव भविष्यसीति किमुत्तरं स्यात्, तत्राह—

वयं वै त्वच्छ्रेयांꣳसस्स्म इति मा देवा अवोचन्निति । अथ वा इदं तर्हि प्रजापतौ हर आसीत् ॥ यदस्मिन्नादित्ये । तदेनमब्रवीत् । एतन्मे प्रयच्छ । अथाहमेतेषां देवानामधिपतिर्भविष्यामीति । कोऽहꣳ स्यामित्यब्रवीत् । एतत्प्रदायेति । एतत्स्या इत्यब्रवीत् । यदेतद्ब्रवीषीति । को ह वै नाम प्रजापतिः । य एवं वेद ॥ ६१ ॥ विदुरेनं नाम्ना । [2]तदस्मै रुक्मं कृत्वा प्रत्यमुञ्चत् । ततो वा इन्द्रो देवानामधिपतिरभवत् । य एवं वेद । अधिपतिरेव समानानां भवति । [3]सोऽमन्यत । किं किं वा अ-

---

को ह्येति । प्रजापतिर्नाम को भवति अज्ञातरूपत्वात्क इत्येव व्यपदेष्टव्यो भवति, कोऽहं स्यामिति तदनुरूपमेवोक्तं तत्रभवता । तस्मात्परिच्छित्तिकारिविशेषभूतहरःप्रदानं प्रजापतित्वस्यैव पौष्कल्यहेतुरिति । एवं वेदितारं सर्वेऽपि नाम्ना विदुः, सर्वैर्विदितनामा भवतीति यावत् ॥

[2]अथ प्रजापतिः तत् हरः रुक्मं आभरणं पट्टाख्यं कृत्वा अस्मा इन्द्राय प्रत्यमुञ्चत् । ललाटे बबन्ध । तत इत्यादि । गतम् ॥

[3]सोऽमन्यतेति ॥ प्रजापतिरमन्यत अस्येन्द्रस्याहं किंकिमकरं, यदिदं कृतं इदमस्यापर्याप्तमिति अमन्यत । 'कमृद्गरुहिभ्यः' इत्यच् ।

करमिति । स चन्द्रं म आहरेति प्रालपत् । तच्च-न्द्रमसश्चन्द्रमस्त्वम् । य एवं वेद ॥६२॥ चन्द्र-वानेव भवति । 'तं देवा अब्रुवन् । सुवीर्यो मर्या यथा गोपायत इति । तत्सूर्यस्य सूर्यत्वम् । य

क्षुद्रशोऽक्षि गुणः । अथ विदिताभिप्रायं भूयश्चिकीर्षुं प्रजापतिं प्रति इन्द्रः चन्द्रं मम आहरेति कुमारवत् प्रालपत्, चान्द्र-माह्लादकं तेजोपि मय्याहरेति, चन्द्रवदाह्लादयिता सर्वस्य भूयास-मिति । एवमिन्द्रेण चन्द्र इत्युक्तत्वात् चन्द्रमस्त्वं चन्द्रमसः । चन्द्रत्वेन आह्लादकत्वेन इन्द्रेण मीयते चन्द्रमाः । एवं वेदिताऽपि आह्लादकरूपवान् भवति ॥

'तं देवा इत्यादि ॥ सूर्यादिभावेन इन्द्रः स्तूयते—तमिन्द्रं देवा अब्रुवन् लब्धचन्द्रभावमाह्लादयितारमिन्द्रं देवा विस्मृतात्मश्रे-ष्ठ्या अस्तुवन्—अयमिन्द्र इदानीमस्मान् गोपायते रक्षितुमर्हति हरसा युक्तः । यथा मर्या सुवीर्यः । मरीचिभिस्सूर्यः । एकत्र म-ध्यमाक्षरलोपः, पूर्वस्य च दीर्घत्वम्, इतरत्रान्त्यलोपः, 'सुपां सुलुक्' इत्याकारश्च । केचिदाहुः—अयं सुवीर्योस्मानिदानीं गो पायते रक्षितुं पर्याप्नोति । यथा यथावदित्यर्थः । हे अमर्याः । अमर-णशीलाः । आमन्त्रणेऽनुदात्तत्वम् । यद्वा—अमर्यान् अमरणशीलान् देवान् । शस आकारः 'छन्दसि निष्टक्र्य' इत्यादौ निपात्यते । छान्दसस्स्वरव्यत्ययः । सूर्यमेव सुवीर्यमब्रुवन् देवाः तस्यैव सुवी-र्यत्वात्तदीयहरस्संक्रमणात् । स एव भूत्वा रक्ष त्वमस्मानिति वि-वक्षितम् । यस्मात् सूर्यं सुवीर्यमब्रुवन् । तस्मात्तस्य सूर्यत्वम् ।

एवं वेद । नैनं दभ्नोति । [5]कश्च नास्मिन्वा इदमिन्द्रियं प्रत्यस्थादिति । तदिन्द्रस्येन्द्रत्वम् । य एवं वेद । इन्द्रियाव्येव भवति ॥ ६३ ॥ अयं वा इदं परमोऽभूदिति । तत्परमेष्ठिनः परमेष्ठित्वम् । य एवं वेद । परमामेव काष्ठां गच्छति । [6]तं देवा-

'राजसूय सूर्य' इति शब्दान्तरमिति भावः । एवं वेदितारं कश्चिदपि न दभ्नोति न हिनस्ति सूर्य एव भवतीति यावत् । एवं कश्चनोति पूर्वशेषं व्याख्येयम् ॥

[5]अथेन्द्रं प्राति देवा अब्रुवन्—अस्मिन्निन्द्रे इदमिन्द्रियं वीर्यं प्रत्यस्थात् प्रतिष्ठितमभूदिति देवैरेवमुक्तत्वादिन्द्रस्येन्द्रत्वम् । यदि ह्यनिन्द्रस्स्यात्ततो नैनं जुष्टमिन्द्रियं भवति वीर्यम् । 'इन्द्रियमिन्द्रलिङ्गं' इत्यादौ निपातनात् । यद्वा—चशब्दश्चिदर्थे । कश्चिदपि इदमस्मिन्निन्द्रे स्थितमिन्द्रियं न प्रत्यस्थात् न प्रत्यर्थित्वेनाभ्यागतस्तिष्ठति । तस्मादेवं महावीर्यत्वादिन्द्रत्वमस्येति । एवं वेदिता च इन्द्रियवान् भवति । पुनरपि देवा अब्रुवन्—अयमिन्द्रः परमः सर्वप्रकर्षी इदं विश्वं अभूत् इदं वा विश्वं प्राप्तवान् विश्वमस्य विधेयं भवति । यस्मादेव देवैश्च व्यापिनः परमात्मत्वमुक्तं तस्मात्परमेष्ठिनः परमेष्ठित्वम् । एवं वेदिता च परमां प्रकृष्टामैश्वर्यकाष्ठां गच्छति ॥

[6]अथ तं प्राप्तपरमेष्ठिभावमिन्द्रं समंततः पर्यविशन् देवाः । वसवः पुरस्तादिति । प्रसश्चमिति । यत्रक्वापि दिशि स्थिताः

स्सम॒न्तं पर्य॑विशन् । वस॑वः पु॒रस्ता॑त् । रु॒द्रा द॑क्षि॒ण॒तः । आ॒दि॒त्याः प॒श्चात् । विश्वे॑ दे॒वा उ॑त्त॒र॒तः । अङ्गि॑रसः प्र॒त्यञ्च॑म् ॥ ६४ ॥ सा॒ध्याः परा॑ञ्चम् । य ए॒वं वेद॑ । उपै॑नꣳ स॒मा॒नास्सं विशन्ति । [7]स प्र॒जाप॑तिरे॒व भू॒त्वा प्र॒जा आव॑यत् । ता अ॑स्मै॒ नाति॑ष्ठन्ता॒न्नाद्या॑य । ता मुखं॑ पु॒रस्ता॒त्पश्य॑न्तीः । द॒क्षि॒ण॒तः पर्या॑यन् । स द॑क्षि॒ण॒तः पर्य॑वर्तयत । ता मु॒खं॑ पु॒रस्ता॒त्पश्य॑न्तीः । मु॒खं॑ दक्षि॒ण॒तः ॥६५॥ प॒श्चात्पर्या॑यन् । स प॒श्चात्पर्य॑वर्तयत । ता मु॒खं॑ पु॒रस्ता॒त्पश्य॑न्तीः । मु॒खं॑ दक्षि॒ण॒तः । मु॒खं॑ प॒श्चात् ।

---

प्रत्यञ्चं प्रतिमुखावस्थानं असेवन्त अङ्गिरसः । साध्याश्च यत्रक्कापि पराञ्चं पृष्ठतोसेवन्त । एवं वेदितारं समाना उपसंविशन्ति निकटे सेवन्ते ॥

[7]अथ इन्द्रो विधेयीकृतविश्वः प्रजापतिरेव भूत्वा प्रजापतितुल्यमहिमा भूत्वा सर्वाः प्रजा आवयत् अवेष्टयत् । वेञो ल्यप् । आवीता इव कृत्वा उपभुक्तवान् । अथ ताः प्रजाः अस्मा इन्द्राय अन्नाद्याय अन्नादनसामर्थ्याय नातिष्ठन्त नात्मानं प्रकाशितवत्यः । यथा अन्नमत्तुं न प्रभवेत् तथा अस्य मुखं परिहृत्य अन्यतरेत्य ताः पलायन्त । 'प्रकाशनस्थेयाख्ययोश्च' इत्यात्मनेपदम् । 'श्लाघह्नुङ् स्थाशपाम्' इति संप्रदानत्वम् । ता इत्यादि ।

उत्तरतः पर्यायन् । स उत्तरतः पर्यैवर्तयत । ता मुखं पुरस्तात्पश्यन्तीः । मुखं दक्षिणतः । मुखं पश्चात् ॥ ६६ ॥ मुखमुत्तरतः । ऊर्ध्वा उदायन् । स उपरिष्टान्न्यवर्तयत । तास्सर्वतोमुखो भूत्वाऽऽवयत् । ततो वै तस्मै प्रजा अतिष्ठन्तान्नाद्याय । य एवं विद्वान्परि च वर्तयते नि च । प्रजापतिरेव भूत्वा प्रजा अत्ति । तिष्ठन्तेऽस्मै प्रजा अन्नाद्याय । अन्नाद एव भवति ॥ ६७ ॥

आसीद्वेदं चन्द्रमस्त्वं य एवं वेदेन्द्रियाव्येव भवति प्रत्यञ्चं मुखं दक्षिणतो मुखं पश्चान्नवं च ॥

ताः प्रजाः पूर्वस्यां दिशि अस्य मुखं पश्यन्तीः दक्षिणतः दक्षिणस्यां दिशि पर्यायन् परिगताः । अथेन्द्रो दक्षिणतोपि मुखं पर्यवर्तयत परिवृत्तमकुरुत । एवं यत्रयत्रास्य मुखं पश्यन्ति ततस्ततोऽन्यत्र पर्यायन् । सोपि तत्र मुखं पर्यवर्तयत । सर्वाभ्यो दिग्भ्यो निवर्त्य उपरिष्टात् स्थापितवान् मुखं, ततस्सर्वतो मुखो भूत्वा सर्वासु दिक्षु प्रजा आवयत् भोग्या अकरोत् विधेयीकृतवान् । ततः प्रजाः तस्मा इन्द्राय अन्नाद्यायातिष्ठन्त आत्मानं प्रकाशितवत्यः । अथ एवं विद्वान् मुखं परिवर्तयते निवर्तयते च स्थाने प्रजापतिरेव भूत्वा सर्वाः प्रजा अत्ति विधेयीकृत्य भुङ्क्ते । प्रजाश्चास्मा अन्नाद्याय तिष्ठन्ते । अन्नादश्च भवत्येव ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः.

[1]प्रजापतिरकामयत बहोर्भूयान्थ्स्यामिति । स एतं दशहोतारमपश्यत् । तं प्रायुङ्क्त । तस्य प्रयुक्ति बहोर्भूयानभवत् । यः कामयेत बहोर्भूयान्थ्स्यामिति । स दशहोतारं प्रयुञ्जीत । बहोरेव भूयान्भवति । [2]सोऽकामयत वीरो म आजायेतेति । स दशहोतुश्चतुर्होतारं निरमिमीत । तं प्रायुङ्क्त ॥ तस्य प्रयुक्तीन्द्रोऽजायत । यः कामयेत वीरो म आजायेतेति । स चतुर्होतारं प्रयुञ्जीत । आऽस्य वीरो जायते । [3]सोऽकामयत पशुमान्थ्स्यामिति । स चतुर्होतुः पञ्चहोतारं निरमिमीत । तं प्रायुङ्क्त । तस्य प्रयुक्ति पशुमानभवत् । यः कामयेत पशुमान्थ्स्यामिति । स पञ्चहोतारं प्रयुञ्जीत ॥६ १॥ पु-

[1]प्रजापतिरित्यादि ॥ यद्लोके बहु ततोपि बहुतरः स्यामिति । प्रायुङ्क्तेति जपहोमादिषु प्रयोगः । प्रयुक्तीति 'सुपां सुलुक्' इति तृतीयाया लुक् । य इत्यादि । गतम् ॥

[2]वीरः पुत्रः विक्रान्तो वा अध्ययनशौर्यादिना । स दश होतुरिति । दशहोतुरपादानाच्चतुर्होतारं निर्मितवान् ॥

[3]पशुमान् बहुपशुः । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् ॥

शुमानेव भवति । [4]सोऽकामयतर्तवो मे कल्पेर-न्निति। स पञ्चहोतुष्षड्ढोतारं निरमिमीत । तं प्रायुङ्क्त । तस्य प्रयुक्त्यृतवोऽस्मा अकल्पन्त। यः कामयेतर्तवो मे कल्पेरन्निति । स षड्ढोतारं प्रयुञ्जीत। कल्पन्तेऽस्मा ऋतवः । [5]सोऽकामयत सोमपस्सोमयाजी स्याम्। आ मे सोमपस्सोमयाजी जायेतेति॥७०॥ स षड्ढोतुस्सप्तहोतारं निरमिमीत । तं प्रायुङ्क्त । तस्य प्रयुक्ति सोमपस्सोमयाज्यभवत् । आऽस्य सोमपस्सोमयाज्यजायत । यः कामयेत सोमपस्सोमयाजी स्याम् । आ मे सोमपस्सोमयाजी जायेतेति । स सप्तहोतारं प्रयुञ्जीत । सोमप एव सोमयाजी भवति । आऽस्य सोमपस्सोमयाजी

---

[4]कल्पेरन्निति ॥ यथायथं संपद्यन्तामिति ॥

[5]सोमपः सोमस्य पाता ऋत्विग्भूत्वा सोमस्य पाता, स ह्यदुष्टार्जन इति तद्भावः प्रार्थ्यते । यद्वा—विदुषोऽधिकाराद्धत्विक्त्वं प्रार्थयते सोमपश्च सोमयाजी च स्यामिति । यद्वा—सोमप इति षष्ठी । सोमपः पितुः पुत्रः सोमयाजी च स्यामिति । मम च कुले सर्वः सोमपः पुत्र ऋत्विग्वा सोमयाजी च स्यादिति । सोमपानयजनसाध्याविकलयागफलाशासनाभिप्रायमुपादानमुभयोः ॥

जायते । [6]स वा एष पशुः पञ्चधा प्रति तिष्ठति ॥ पद्भिर्मुखेन । ते देवाः पशून् वित्वा । सुवर्गं लोकमायन् । तेऽमुष्मिँल्लोके व्यक्षुध्यन् । तेऽब्रुवन् । अमुतः प्रदानं वा उपजिजीविमेति । ते सप्तहोतारं यज्ञं विधायायास्यम् । आङ्गिरसं प्राहिण्वन् । एतेनामुत्र कल्पयेति । तस्य वा इयं क्लृप्तिः ॥७२ यदिदं किञ्च । य एवं वेद । कल्पतेऽस्मै । स वा अयं मनुष्येषु यज्ञस्सप्तहोता । अमुत्र सद्भ्यो देवेभ्यो हव्यं वहति । य एवं वेद । उपैनं यज्ञो नमति । [7]यो वै चतुर्होतॄणां निदानं वेद । निदानवान्भवति । अग्निहोत्रं वै दशहोतुर्निदानम् । दर्शपूर्णमासौ चतुर्होतुः । चातुर्मास्यानि पञ्चहोतुः । पशुबन्धष्षड्ढोतुः । सौम्योऽध्वरस्सप्तहोतुः । एतद्वै

[6]स वा एष इत्यादि ॥ स एष पशुः पञ्चधा पञ्चप्रकारैः प्रति तिष्ठति । धारयति पद्भिश्चतुर्भिः मुखेन च पञ्चमेन चतुष्पात्स्थितिमात्मनः करोति । द्विपात् द्विपादहस्तमुखेन स्थितिं करोति । तस्मात्पञ्चत्वान्वयात् पञ्चभिर्होतृभिः पशून् लब्ध्वा स्वर्गं गताः । तेऽमुष्मिन्नित्यादि । व्याख्यातम् * ॥

[7]यो वा इत्यादि ॥ निदानं कारणं, नियतं दीयते प्रयुज्यते यस्मिन् तन्निदानम् । अग्निहोत्रादीनि दशहोत्रादीनां निदानानि,

* ब्रा. १-२-७.

चतुर्होतृणां निदानम् । य एवं वेद । निदानवान्भवति ॥ ७३ ॥

अमिमीत तं प्रायुङ्क्त पञ्चहोतारं प्रयुञ्जीत जायेतेति तिष्ठति क्लृप्तिर्दशहोतुर्निदानꣳ सप्त, च ॥

प्रजापतिरकामयत प्रजास्सृजेयेति प्रजापतिरकामयत दर्शपूर्णमासौ सृजेयेति प्रजापतिरकामयत प्रजायेयेति स तपस्सत्रिवृतं प्रजापतिरकामयत दशहोतारं तेन दशधाऽऽत्मानं देवा वै वरुणमन्तो वै प्रजापतिस्तास्सृष्टास्समश्लिष्यन्देवा वै चतुर्होतृभिरिदं वा अग्रे प्रजापतिरिन्द्रं प्रजापतिरकामयत बहोर्भूयानेकादश ॥ ११ ॥

प्रजापतिस्तद्रहस्य प्रजापतिरकामयतानयैवैनत्तस्य वा इयं क्लृप्तिस्तस्मात्तेपानाज्ज्योतिर्यदस्मिन्नादित्ये स षड्ढोतुस्सप्तहोतारं त्रिसप्ततिः ॥

---

तत्र हि ते नियतं प्रयज्युन्ते । एवं वेदिता निदानवान् भवति सर्वाभिमतोत्पत्तिनिमित्तवान् भवति ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयप्रपाठके
एकादशोऽनुवाकः.

समाप्तश्चायं प्रपाठकः.

## तृतीयप्रपाठकप्रारम्भः.

हरिः ओम् ॥ [1]ब्रह्मवादिनो वदन्ति । किं चतुर्होतृणां चतुर्होतृत्वमिति । यद्देवेषु चतुर्धा होतारः । तेन चतुर्होतारः । तस्माच्चतुर्होतार उच्यन्ते । तच्चतुर्होतृणां चतुर्होतृत्वम् । [2]सोमो वै चतुर्हो-

---

[1]ब्रह्मवादिन इत्यादि ॥ सर्वेऽपि चतुर्होतृव्यतिरिक्ताः पञ्चापि दशहोत्रादयश्चतुर्होतार उच्यन्ते । एवमेषां चतुर्होतृणां कीदृशं चतुर्होतृत्वकारणमित्यर्थः । यद्देवेत्यादि । यस्माद्देतेषु पञ्चस्वपि चतुर्धा वाक्पत्यादिभेदेन चतुष्प्रकारभिन्ना होतारः ऋत्विजः तेन चतुर्होतारः । चत्वारः प्रत्येकमेतेषु होतार इति चतुर्होतारः । 'ऋतश्छन्दसि' इति कबभावः । होमे प्रवृत्तत्वात् सर्वेऽप्यृत्विजो होतारः । होतृसाहचर्याद्वा होतारः । तत्र दशहोतरि अग्निराग्नीध्रः होता उपवक्ता अध्वर्युरिति । होता अध्वर्युराग्नीध्र उपवक्ता पञ्चहोतर्यपि । त एव सूच्यन्त इति षड्ढोतरि सन्ति, तेनायमपि चतुर्होता । वाग्घोतेति षड्ढोतरि होता पत्नी अध्वर्युः अभिगरः यजमानश्च । सप्तहोतरि—होताऽध्वर्युराग्नीध्र उपवक्ता । असत्स्वप्यन्येषु चत्वारस्तेऽत्र विद्यन्ते । एवं यस्माद्देषु चतुर्धा होतारः तस्माच्चतुर्होतारो भवन्ति । विलक्षणहोतृचतुष्टयवन्तो भवन्ति तस्माद्दशहोत्रादयोपि चतुर्होतार उच्यन्ते । तदिदं चतुर्होतृणां चतुर्होतृत्वकारणम् । इदं किं चतुर्होतृणामिति पृष्टस्योत्तरम् ॥

[2]सोमो वा इत्यादि ॥ सोमादिभाव एवैषां हृदयेष्ववगन्तव्यः ।

ता । अ॒ग्निः पञ्च॑होता । धा॒ता षड्ढो॑ता । इन्द्र॑स्स॒प्त-
हो॑ता ॥ १ ॥ प्र॒जाप॑ति॒र्दश॑होता । य ए॒वं चतु॑र्हो-
तॄणा॒मृद्धिं॒ वेद॑ । ऋ॒ध्नोत्ये॒व । य ए॑षा॒मे॒वं ब॒न्धुतां॒
वेद॑ । बन्धु॑मान्भवति । य ए॑षा॒मे॒वं क्लृप्तिं॒ वेद॑ ।
कल्प॑तेऽस्मै । य ए॑षा॒मे॒वमा॒यत॑नं॒ वेद॑ । आ॒यतन-
वान्भवति । य ए॑षा॒मे॒वं प्रति॒ष्ठां वेद॑ ॥ २ ॥ प्रत्ये॒-
व ति॑ष्ठति । [3]ब्र॒ह्म॒वा॒दिनो॑ वदन्ति । दश॑होता॒ चतु॑-
र्होता । पञ्च॑होता॒ षड्ढो॑ता स॒प्तहो॑ता । अथ॒ कस्मा॒-
च्चतु॑र्होतार उ॒च्यन्त॒ इति॑ । इन्द्रो॒ वै चतु॑र्होता ।
इन्द्रः॒ खलु॒ वै श्रेष्ठो॑ दे॒वता॑नामु॒पदे॒शनात् । य ए॒व-

ऋद्धिः होमादिप्रजादिहेतुत्वम् । बन्धुतां बन्धुसमूहं सोमादिम् । 'ग्रामजनबन्धुसहायेभ्यस्तल्' क्लृप्तिं कल्पनं अग्निहोत्रादिनिदान-ताम् । आयतनं उत्पत्तिस्थानम् । 'तद्दशहोताऽन्वसृज्यत' * इत्यादि ॥

[3]दशहोत्रादयो नानाहोतार एव सन्तः कथं चतुर्होतारस्सर्वेऽप्युच्यन्ते? प्रदर्शनार्थत्वाद्येनैवमुक्तमिति ब्रह्मवादिनश्चोदयन्ति । इन्द्रो वा इत्यादिना स्वयं परिहरति । इन्द्रश्चतुर्होतेति प्रागेव प्रतिपादितम् । इन्द्रश्च देवतानां मध्ये श्रेष्ठः प्रशस्यतमः । कुतः? उपदेशनात् । श्रुतिरेवोपदिशति श्रैष्ठ्यमिन्द्रस्य—'तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः,† इन्द्रो देवानामधिपाः पुरोहितः,‡ ततो वा

* ब्रा २-२-१. † सं ५-४ ८. ‡ ब्रा २-८-४.

मिन्द्रꣳ श्रेष्ठं दे॒वता॑नामु॒पदे॑शना॒द्वेद॑ । वसि॑ष्ठस्स॒मा॒नाना॑ं भवति । ‘तस्मा॒च्छ्रेष्ठ॑मा॒यन्तं॑ प्र॒थमे॑नै॒वानु॑बुध्यन्ते । अ॒यमा॑गन्न् । अ॒यम॑वा॒सा॒दिति॑ । की-

इन्द्रो देवानामधिपतिरभवत्.’ * इत्यादौ श्रैष्ठ्येन च व्यपदेशो भवति । तस्माच्छ्रेष्ठेन्द्रात्मकचतुर्होत्रनुविधायित्वादितरे चतुर्होतार इति ते व्यपदिश्यन्ते । एवमुपदेशनाद्देवतानां श्रेष्ठमिन्द्रं यो वेद स समानानां व सिष्ठः प्रशस्यतमो भवति ॥

‘यदुक्तं श्रैष्ठ्येन व्यपदेशो भवतीति, तत्र निदर्शनार्थमाह—तस्मादित्यादि ॥ यस्माच्छ्रैष्ठ्येन व्यपदेशो भवति तस्माच्छ्रेष्ठं राजानं बहुविधानेकसहचरं आयन्तं आगच्छन्तं प्रथमेनैव प्रथममेवानुबुध्यन्ते । प्रकृत्यादितृतीया । सत्स्वप्यन्येषु बहुषु असत्स्वपि श्रेष्ठमेव प्रथममनुबुद्ध्यन्ते बुद्ध्या स्पृशन्ति । कथम्? अयमागन् ‘अयं पौरव आगमत्, अयं काकुत्स्थ आगमत्’ इति श्रेष्ठमेव इतरैर्बोधितमनुबुद्ध्यन्ते जनाः । गमेर्लुङि ‘मन्त्रे घस’ इति च्लेर्लुक् । ‘मो नो धातोः’ इति नत्वम् । तथा अयमवासात् अवसीयतां ग्रामेऽस्मिन् जनपदेऽस्मिन्नित्यपि श्रेष्ठमेव व्यपदिशन्ति बहुष्वन्येष्वसत्सु सत्सु च । अवपूर्वकात् स्यतेः लुङि ‘विभाषा घ्राधेट् शाच्छासः’ इति सिचो लुक् । एवमत्रापि चतुर्होत्रा श्रेष्ठेन प्रथमम् । एतत्कीर्तिधरमेव प्रथममवबुध्यन्ते ‘अयं विद्यागुरुरागमत्, अयं विक्रमादिवाकर आगमत्’ इति । ईदृग्गुणकोऽयमागमत् अयमत्रावास्यदिति गुणश्रेष्ठमेव प्र-

* ब्रा २-२-१०.

तिरस्य पूर्वाऽऽगच्छति जनतामायतः । अथो एनं प्रथमेनैवानु बुध्यन्ते । अयमागन्न् । अयमवासा-दिति ॥ ३ ॥

सप्तहोता प्रतिष्ठां वेदं बुध्यन्ते षट् ॥१॥

[1]दक्षिणां प्रतिग्रहीष्यन्थ्सप्तदशकृत्वोऽपान्यात्। आत्मानमेव समिन्धे । तेजसे वीर्याय । अथो प्रजापतिरेवैनां भूत्वा प्रति गृह्णाति । आत्मनोऽ-

थमं बुद्ध्यन्ते । तस्मादत्रापि प्रथमतो बुध्यमानचतुर्होतृमहाभाग्याक्रान्तचित्ताश्चतुर्होतृनेव सर्वान् व्यपदिशन्ति । अयमिति गुणवत्स्वरूपनिर्देश इदानीम् ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयप्रपाठके
प्रथमोऽनुवाकः.

---

[1]दक्षिणां प्रतिग्रहीष्यन्नित्यादि ॥ दक्षिणाप्रतिग्रहकाले सप्तदशकृत्वोऽपान्यात् अधोवायुमाकर्षेत् । सप्तदशप्राणायामान् कुर्यादिति केचित् । आत्मानं समिद्धं करोति । अस्माल्लिङ्गात् असौ समिद्धः प्रतिग्रहीतुमर्हतीति गम्यते तेजसे वीर्याय च भवत्यपान्य प्रतिग्रहणम् । अपिच प्रजापतिरेव भूत्वा एनां दक्षिणां प्रतिगृह्णाति । सप्तदशसङ्ख्यान्वयात् सप्तदशः प्रजापतिरिति । तस्मात्मनोऽनार्त्यै भवति अविनाशाय संपद्यते, स्वयमप्रतिग्राहकत्वात् ॥

नार्त्यै । [2]यद्येनमार्त्विज्याद्वृतꣳ सन्तं निरूहेरन् । आग्नीध्रे जुहुयाद्दशहोतारम् । चतुर्गृहीतेनाज्येन । पुरस्तात्प्रत्यङ्तिष्ठन् । प्रतिलोमं विग्राहम् ॥ ४ ॥ प्राणानेवास्योपदासयति । यद्येनं पुनरुप शिक्षेयुः । आग्नीध्र एव जुहुयाद्दशहोतारम् । चतुर्गृहीतेनाज्येन । पश्चात्प्राङासीनः । अनुलोममविग्राहम् । प्राणानेवास्मै कल्पयति । [3]प्रायश्चित्ती वाग्घोतेत्यृ-

[2]यद्येनमित्यादि ॥ आर्त्विज्याद्वृतमन्ये यद्यपनयेयुः अथ स निर्ह्रियमाणः आग्नीध्रे दशहोतारं जुहुयात् चतुर्गृहीतेनाज्येन एकीकृतेन पुरस्तात् प्रत्यङ्मुखस्तिष्ठन् प्रतिलोमं 'सामाध्वर्युः'* इत्यारभ्य 'चित्तिः स्रुक्' * इत्येवमन्तम् । विग्राहं विच्छिद्यविच्छिद्य प्रत्यवयवं जुहुयात् । अस्यात्मानं आर्त्विज्यान्निर्हरतः प्राणानुपदासयति । अथ यद्येनं ते निर्हर्तारः पुनरुपशिक्षेयुः समीपे प्रत्यानयेयुः आग्नीध्र एव जुहुयात् दशहोतारं चतुर्गृहीतेनैवाज्येन पश्चात्प्राङ्मुख आसीनः अनुलोमं 'चित्तिः स्रुक्'* इत्यादि 'सामाध्वर्युः' *इत्येवमन्तं अविग्राहं अविच्छिद्याविच्छिद्य सर्वान्ते जुहोति । प्राणानस्मै कल्पयति स्थापयति । 'अच् प्रत्यन्ववपूर्वात्' इत्यच् समासान्तः । ग्रहेराभीक्ष्ण्ये णमुल् ॥

[3]प्रायश्चित्तीत्यादि ॥ प्रायश्चित्तवान् । प्रायश्चित्तादिनिः, स्वरस्सतिशिष्टत्वात्स्यात् । तस्मात् प्रायश्चित्ती । प्रायश्चित्त्यां कर्तव्यायां

* तै. आ. ३-१.

तुमुख ऋतुमुखे जुहोति। ऋतूनेवास्मै कल्पयति। कल्पन्तेऽस्मा ऋतवः ॥५॥ क्लृप्ता अस्मा ऋतव आयन्ति। 'षड्ढोता वै भूत्वा प्रजापतिरिदꣳ सर्वमसृजत। स मनोऽसृजत। मनसोऽधि गायत्रीमसृजत। तद्गायत्री यश आर्च्छत्। तामाऽलभत। गायत्रिया अधि छन्दाꣳस्यसृजत। छन्दोभ्योऽधि साम। तथ्साम यश आर्च्छत्। तदाऽल-

कर्मभ्रेषोपशमनार्थे ज्ञाने कर्तव्ये जुहोति। 'सुपां सुलुक्' इति सप्तम्याः पूर्वसवर्ण ईकारः। वाग्घोतेत्यृतुमुखे ऋतुमुखे जुहोति सा प्रायश्चित्तिर्भवति। कुत्र? यत्र कर्मभ्रेषो भवति, यत्र चान्यदनिर्दिष्टं प्रायश्चित्तं तत्रापि विकल्प इति केचित्। तत्र सर्वत्राविशेषात् केचिदाहुः—'वाग्घोता, ब्राह्मण एक होता' † इति द्वावनुवाकौ जुहोति। लिङ्गं च 'सर्वं च मे भूयात्' † इति। अस्मा एतदर्थं ऋतून् कल्पयति यथायथं प्रवर्तयति भ्रेषोपशमनात्। त एते ऋतवश्च अस्मै कल्पन्ते संपद्यन्ते। क्लृप्ताश्चर्तव एतदर्थमायन्ति अस्यैवोपकुर्वन्ति आनुगुण्यं भजन्ते॥

'षड्ढोतेत्यादि॥ तत्कथमित्याह—स तादृशः प्रजापतिः प्रथमं षड्ढोतृहोमादिना मनोऽसृजत। अथ मनसा गायत्रीमसृजत। अथ तदात्मीयं यशः सर्वं गायत्रीमार्च्छत् प्रापत्। अथ प्रजापतिस्तामेव गायत्रीं पशुत्वेनालभत। अथ गायत्र्या छन्दांस्य-

† तै. आ. ३, ६-७.

भत ॥ ६ ॥ साम्नोऽधि यजूꣳष्यसृजत । यजुर्भ्योऽधि विष्णुम् । तद्विष्णुं यशं आर्च्छत् । तमाऽलंभत । विष्णोरध्योषधीरसृजत । ओषधीभ्योऽधि सोमम् । तथ्सोमं यशं आर्च्छत् । तमाऽलंभत । सोमादधि पशूनसृजत । पशुभ्योऽधीन्द्रम् ॥ ७ ॥ तदिन्द्रं यशं आर्च्छत् । तदेनं नाति प्राच्यवत । इन्द्र इव यशस्वी भवति । य एवं वेदं । नैनं यशोऽति प्रच्यवते । [5]यद्वा इदं किं चं । तथ्सर्वमुत्तान एवाङ्गीरसः प्रत्यगृह्णात् । तदेनं प्रतिगृहीतं

सृजत उष्णिगादीन्युदपादयत् । अथ तेभ्यश्छन्दोभ्यः सामासृजत । अथात्मीयं यशः तत्साम प्रापत् । अथ तदेवालभत । साम्नोऽधि यजूंष्यसृजत । यजुर्भ्योधि विष्णुमसृजत । तद्विष्णुं यश आर्छत् । तमालभत । विष्णोरोषधीरसृजत । ओषधीभ्यस्सोममसृजत । अथ सोमात् पशूनसृजत । पशुभ्य इन्द्रम् । अथेन्द्रं यशः प्रापत् । तत्तु इन्द्रमतीत्य अन्यत्र न प्राच्यवत यशः । इन्द्र एव परमो यशस्वी बभूव । एवं वेदिता च इन्द्र इव यशस्वी भवति । एनमतीत्यान्यत्र यशः न प्रच्यवते ॥

[5]यद्वा इदमित्यादि ॥ यत्किञ्चिदिदं गवादि, तत्सर्वमुत्तानो नामाङ्गिरसः पुत्रः प्रत्यगृह्णात् । तत् गवादिकं एनं प्रतिग्रही-

नाहिँनत् । यत्किंच प्रतिगृह्णीयात् । तथ्सर्वमुत्तान-स्त्वाङ्गिरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयात् । इयं वा उत्तान आङ्गिरसः । अनयैवैनत्प्रति गृह्णाति । नैनꣳ हिनस्ति । बर्हिषा प्रतीयाद्गां वाऽश्वं वा । एतद्वै पशूनां प्रियं धाम । प्रियेणैवैनं धाम्ना प्रत्यैति ॥ ८ ॥

विप्राहमृतवस्तदाऽलंभतेन्द्रं गृह्णीयाथ्षट् ॥२॥

¹यो वा अविद्वान्निवर्तयते । विशीर्षा सपाप्माऽमुष्मिन्लोके भवति । अथ यो विद्वान्निवर्त-

तारं न हिनस्ति स्म । यदित्यादि । गतम् । सर्वमिति । प्रतिपदोक्तप्रतिग्रहीतृदेवानामपि इयं पृथिव्येवोत्तान आङ्गीरसः बर्हिषेति । गां वाऽश्वं वा प्रतिग्रहीष्यन् बर्हिषा प्रतीयात् प्रतिमुखं गच्छेत् । एतद्वा इत्यादि । गतम् । प्रियेण धाम्ना प्रत्योति ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयप्रपाठके
द्वितीयोऽनुवाकः.

---

¹यो वा इत्यादि ॥ वक्ष्यमाणानग्न्यादिपुष्टिप्रकारान् अविद्वान् यो निवर्तयते केशान् । सामर्थ्याच्चातुर्मास्यशेषोऽयमिति केचित् । चतुर्होतृप्रकरणात् तद्विषयमेव निवर्तनादिकमित्यन्ये । विशीर्षेत्यादि गतम् । अग्न्यादयस्सप्त देवताः पुष्टिकामाः पूर्वं न्यवर्तयन्त ।

र्यते । सशीर्षा विपाप्माऽमुष्मिन्लोके भवति । देवता वै सप्त पुष्टिकामा न्यवर्तयन्त । अग्निश्च पृथिवी च । वायुश्चान्तरिक्षं च । आदित्यश्च द्यौश्च चन्द्रमाः । अग्निर्न्यवर्तयत । स साहस्रमपुष्यत् ॥ पृथिवी न्यवर्तयत । सौषधीभिर्वनस्पतिभिरपुष्यत् । वायुर्न्यवर्तयत । स मरीचीभिरपुष्यत् । अन्तरिक्षं न्यवर्तयत । तद्वयोभिरपुष्यत् । आदित्यो न्यवर्तयत । स रश्मिभिरपुष्यत् । द्यौर्न्यवर्तयत । सा नक्षत्रैरपुष्यत् । चन्द्रमा न्यवर्तयत । सोऽहोरात्रैरर्धमासैर्मासैर् ऋतुभिस्संवथ्सरेणापुष्यत् । तान्पोषान्पुष्यति । याꣳस्तेऽपुष्यन् । य एवं विद्वान्नि च वर्तयते परि च ॥ १० ॥

अपुष्यन्नक्षत्रैरपुष्यत्पञ्च च ॥३॥

---

साहस्रं सहस्रपरिमाणं बहुप्रकारपुष्टिकम् । अपुष्यत् पुष्टोऽभवत् । मरीचयो रश्मयः । वयांसि पक्षिणः । एवं विद्वान् यो निवर्तयते परिवर्तयते च स तान् पोषान् पुष्यति, यानग्न्यादयोऽपुष्यन् । सामान्यपुष्टेर्विशेषपुष्टिः कर्म ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः.

[1]तस्य वा अग्नेर् हिरण्यं प्रतिजग्रहुषः । अर्ध-मिन्द्रियस्यापाक्रामत् । तदेतेनैव प्रत्यगृह्णात् । तेन वै सोऽर्धमिन्द्रियस्यात्मन्नुपाधत्त । अर्धमिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वान् हिरण्यं प्रतिगृह्णाति । अथ योऽविद्वान्प्रति गृह्णाति । अर्धमस्येन्द्रियस्यापक्रामति । [2]तस्य वै सोमस्य वासः प्रतिजग्रहुषः । तृतीयमिन्द्रियस्यापाक्रामत् ॥ ११ ॥ तदेतेनैव प्रत्यगृह्णात् । तेन वै स तृतीयमिन्द्रियस्यात्मन्नुपा-

[1]तस्य वा इत्यादि ॥ प्रतिग्रहशेषोऽयम् । उक्तमग्न्यादयः प्रत्यगृह्णमिति । तत्र तस्याग्नेर्हिरण्यं प्रति जग्रहुषः प्रतिगृहीतवतः। संप्रसारणाभावश्छान्दसः। इन्द्रियस्य वीर्यस्य अर्धं आत्मनोऽपाक्रामत्। अथाग्निः तद्धिरण्यमेतेन प्रतिग्रहमन्त्रेण प्रत्यगृह्णात् । लिङ्गं च 'अग्नये हिरण्यम्' * इति । तेन तादृशेन प्रतिग्रहेण इन्द्रियस्यार्धमपक्रान्तं भूय आत्मन्युपाधत्ताग्निः। अथ य एवं विद्वान् हिरण्यं प्रतिगृह्णाति स इन्द्रियस्यापक्रान्तस्याप्यर्धं पुनरात्मन्युपाधत्ते। अथाविद्वांश्चेत्तस्य इन्द्रियस्यार्धमपक्रामत्येव। तस्मादेवं विदुषा प्रतिग्राह्यमिति विधीयते ॥

[2—7]एवं सोमरुद्रवरुणप्रजापतिमनूक्तानेषु वेदितव्यम्। तृतीयादयोंऽशाः। 'पूरणाद्भागे' इति तृतीयशब्दादन् प्रत्ययः ॥

* तै. आ. १-१०.

धंत्त । तृतीयमिन्द्रियस्यात्मन्नुपाधंत्ते । य एवं विद्वान् वासः प्रतिगृह्णाति । अथ योऽविद्वान्प्रति गृह्णाति । तृतीयमस्येन्द्रियस्याप क्रामति । [3]तस्य वै रुद्रस्य गां प्रतिजग्रहुषः । चतुर्थमिन्द्रियस्यापाक्रामत् । तामेतेनैव प्रत्यगृह्णात् । तेन वै स चतुर्थमिन्द्रियस्यात्मन्नुपाधंत्त ॥ १२ ॥ चतुर्थमिन्द्रियस्यात्मन्नुपाधंत्ते । य एवं विद्वान्गां प्रतिगृह्णाति । अथ योऽविद्वान्प्रतिगृह्णाति । चतुर्थमस्येन्द्रियस्याप क्रामति । [4]तस्य वै वरुणस्याश्वं प्रतिजग्रहुषः । पञ्चममिन्द्रियस्यापाक्रामत् । तमेतेनैव प्रत्यगृह्णात् । तेन वै स पञ्चममिन्द्रियस्यात्मन्नुपाधंत्त । पञ्चममिन्द्रियस्यात्मन्नुपाधंत्ते । य एवं विद्वानश्वं प्रतिगृह्णाति ॥ १३ ॥ अथ योऽविद्वान्प्रतिगृह्णाति । पञ्चममस्येन्द्रियस्याप क्रामति । [5]तस्य वै प्रजापतेः पुरुषं प्रतिजग्रहुषः । षष्ठमिन्द्रियस्यापाक्रामत् । तमेतेनैव प्रत्यगृह्णात् । तेन वै स षष्ठमिन्द्रियस्यात्मन्नुपाधंत्त । षष्ठमिन्द्रियस्यात्मन्नुपाधंत्ते । य एवं विद्वान्पुरुषं प्रतिगृह्णाति । अथ योऽविद्वान्प्र-

तिगृह्णाति । षष्ठमस्येन्द्रियस्याप क्रामति ॥ ११
[6]तस्य वै मनोऽस्तल्पं प्रतिजग्रहुषः । सप्तममिन्द्रियस्यापाक्रामत् । तमेतेनैव पत्यगृह्णात् । तेन वै स सप्तममिन्द्रियस्यात्मन्नुपाधत्त । सप्तममिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वाꣳस्तल्पं प्रतिगृह्णाति । अथ योऽविद्वान्प्रति गृह्णाति । सप्तममस्येन्द्रियस्याप क्रामति । [7]तस्य वा उत्तानस्याङ्गीरसस्याप्राणत्प्रति जग्रहुषः । अष्टममिन्द्रियस्यापाक्रामत् ॥ तदेतेनैव प्रत्यगृह्णात् । तेन वै सोऽष्टममिन्द्रियस्यात्मन्नुपाधत्त । अष्टममिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वानप्राणत्प्रतिगृह्णाति । अथ योऽविद्वान्प्रतिगृह्णाति । अष्टममस्येन्द्रियस्याप क्रामति । [8]यद्वा इदं किं च । तथ्सर्वमुत्तान एवाङ्गीरसः प्रत्य-

[8]यद्वा इदं किञ्चेत्यादि ॥ व्याख्यातम् *। अवयवस्तुत्यर्थं पुनर्वचनम् ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः.

* तै. ब्रा. २-२-२.

गृह्णात् । तदेनं प्रतिगृहीतं नाहिनत् । यत्किंच प्रतिगृह्णीयात् । तथ्सर्वमुत्तानस्त्वाङ्गीरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयात् । इयं वा उत्तान आङ्गीरसः । अनयैवैनत्प्रतिगृह्णाति । नैनꣳ हिनस्ति ॥

तृतीयमिन्द्रियस्यापाक्रामच्चतुर्थमिन्द्रियस्यात्मन्नुपाधत्ताश्वं प्रतिगृह्णाति षष्ठमस्येन्द्रियस्यापक्रामत्यष्टममिन्द्रियस्यापाक्रामत्प्रति गृह्णीयाच्चत्वारि च॥

तस्य वा अग्नेर् हिरण्यꣳ सोमस्य वासस्तदेतेन रुद्रस्य गां तामेतेन वरुणस्याश्वं प्रजापतेः पुरुषं मनोस्तल्पं तमेतेनोत्तानस्य तदेतेनाप्राणद्यद्वै । अर्धं तृतीयमष्टमं तच्चतुर्थं तां पञ्चमꣳ षष्ठꣳ सप्तमं तम् । तदेतेन द्वे तामेतेनैकं तमेतेन त्रीणि तदेतेनैकम् ॥

[1]ब्रह्मवादिनो वदन्ति । यद्दशहोतारस्सत्रमासत । केन ते गृहपतिनाऽऽर्भुवन् । केन प्रजा असृजन्तेति । प्रजापतिना वै ते गृहपतिनाऽऽर्भुवन् । तेन

---

[1—5] ब्रह्मवादिन इत्यादि ॥ अविवाक्येऽह्नि इतरे पृच्छन्ति । गृहपतिः प्रतिवचनं ब्रूते । दशहोतारस्सत्रमासत । तदानीं केन

प्रजा असृजन्त । [2] यच्चतुर्होतारस्सत्रमासत । केन ते गृहपतिनाऽऽर्ध्नुवन् । केनौषधीरसृजन्तेति । सोमेन वै ते गृहपतिनाऽऽर्ध्नुवन् ॥ १७॥ तेनौषधीरसृजन्त । [3] यत्पञ्चहोतारस्सत्रमासत । केन ते गृहपतिनाऽऽर्ध्नुवन् । केनैभ्यो लोकेभ्योसुरान्प्राणुदन्त । केनैषां पशूनवृञ्जतेति । अग्निना वै ते गृहपतिनाऽऽर्ध्नुवन् । तेनैभ्यो लोकेभ्योसुरान्प्राणुदन्त । तेनैषां पशूनवृञ्जत । [4] यत्षड्ढोतारस्सत्रमासत । केन ते गृहपतिनाऽऽर्ध्नुवन् ॥१८॥ केनर्तूनकल्पयन्तेति । धात्रा वै ते गृहपतिनाऽऽर्ध्नुवन् । तेनर्तूनकल्पयन्त । [5] यत्सप्तहोतारस्सत्रमासत । केन ते गृहपतिनाऽऽर्ध्नुवन् । केन सुवरायन् । केनेमाँल्लोकान्थ्समतन्वन्निति । अर्यम्णा वै ते गृहपतिनाऽऽर्ध्नुवन् । तेन सुवरायन् । तेनेमाँल्लोकान्थ्समतन्वन्निति ॥ १९॥

गृहपतिना आर्ध्नुवन् वृद्धिं प्राप्नुवन् कर्मफलमलभन्त? केन च गृहपतिना प्रजा असृजन्त? फलविशेषप्रश्नः । दशहोतुरसाधारणफलत्वात् । एवमितरैः पृष्टे गृहपतिः प्रतिब्रूते—प्रजापतिनेत्यादि । गतम् । गृहपतिः प्रधानयजमानः । दशहोतृप्रधानाद्दशहोतारः । एवं चतुर्होतार इत्यादि ॥

[6]एते वै देवा गृहपतयः । तान् य एवं विद्वान् । अप्यन्यस्य गार्हपते दीक्षते । अवान्तरमेव सत्त्रिणामृध्नोति । [7]यो वा अर्यमणं वेद । दानकामा अस्मै प्रजा भवन्ति । यज्ञो वा अर्यमा । आर्यावसतिरिति वै तमाहुर्यं प्रशꣳसन्ति । आ-

---

[6]एते वा इत्यादि ॥ एते प्रजापत्यादयो देवानां मध्ये गृहपतयः । एवं तान् गृहपतीन् विद्वान् योऽन्यस्यापि गार्हपते गृहपतिसंबन्धिनि कर्मणि दीक्षते सोऽप्यवान्तरं पृथक्पृथगेव सत्रिणां सर्वेषां ऋध्नोति ऋद्धिं प्राप्नोति । किं पुनरात्मनो गार्हपते यो दीक्षते ॥

[7]यो वा इत्यादिर्यज्ञस्तुतिः यष्टुस्स्तुतिर्वा, अर्यम्णो वा स्तुतिः ॥ अरीन् यमयति निगृह्णातीत्यर्यमा, यष्टा दाता च । तं यो वेद अस्मै प्रजा दानकामा भवन्ति । अस्य वा प्रजा यष्ट्र्यो दात्र्यश्च भवन्ति । 'शीलिकामि' इत्यादिना णप्रत्ययान्तत्वेन क्लीबभावः । यज्ञवत्पूज्यः खल्वर्यमा । इदानीमर्यम्णः पूज्यत्वे हेतुमाह—यं हि प्रशंसन्ति तमार्यावसतिमाहुः । आर्याणं साधूनां दातॄणां वा आवासमाहुः । वनस्पत्यादित्वादाद्युदात्तत्वम् । आर्यावसतिरित्येव प्रशंसनीय इत्याहुः । स चार्याणां साधूनां देवमनुष्याणामावासो दाता यष्टा च । तस्मात्स एवार्यमा आर्याणां निर्भीकत्वादेर्दाता । अर्यमेति पृषोदरादिः । एवं यथोक्तप्रकारं अर्यम्णो वेदिता आर्यावसतिर्भवति, यष्टा दाता च भवति ॥

यीँ वसतिर्भवति । य एवं वेद ॥२०॥ [8]यद्वा इदं किं च । तथ्सर्वं चतुर्होतारः । चतुर्होतृभ्योधि यज्ञो निर्मितः । स य एवं विद्वान् विवदेत । अहमेव भूयो वेद । यश्चतुर्होतॄन् वेदेति । [9]स ह्येव भूयो वेद । यश्चतुर्होतॄन् वेद । [10]यो वै चतुर्होतृणाꣳ होतॄन् वेद । सर्वासु प्रजास्वन्नमत्ति॥ सर्वा दिशोभि जयति । प्रजापतिर्वै दशहोतृणाꣳ होता । सोमश्चतुर्होतृणाꣳ होता । अग्निः पञ्च-

---

[8]यद्वा इत्यादि ॥ इदं विश्वं दृश्यमानं श्रूयमाणं च चतुर्होतारः दशहोत्रादयः चतुर्होतृभवत्वात् ताच्छब्द्यम् । किं बहुना, यज्ञोपि सर्वश्चतुर्होतृभ्यो निर्मितः । एवं चतुर्होतृमाहात्म्यमुक्तप्रकारं विद्वान् यो नाम कश्चिल्लोके अन्येन विवदेत, कथम्? अहमेव भूयो वेद बहुतरं जानामि नेतरः मनुष्यो मत्तुल्यो बहुज्ञो नास्त्येव कश्चित्, योऽहं चतुर्होतॄन् वेद याथात्म्येन जानामीति ॥

[9]अस्मिन् विवादे वयं निर्णयं ब्रूम इत्याह—स ह्येवेत्यादि ॥ यदुक्तमहमेव भूयो वेदेति, सत्यमेव । स ह्येव भूयो वेद यश्चतुर्होतॄन् वेदेति, नेतरः । नात्र विवादः दीयतां हस्ते परशुरिति भावः ॥

[10]यो वा इत्यादि ॥ यश्चतुर्होतृणां दशहोत्रादीनां होतॄन् वेद सप्रजासु मध्ये अन्नमात्ति भोक्ता भवति, सर्वप्रजा विषये

होतॄणाꣳ होता । धाता षड्ढोतॄणाꣳ होता । अर्यमा सप्तहोतॄणाꣳ होता । एते वै चतुर्होतॄणाꣳ होतारः । तान् य एवं वेद । सर्वासु प्रजास्वन्नमत्ति । सर्वा दिशोभि जयति ॥२२॥

आर्ध्नुवन्नार्ध्नुवन्नित्येवं वेदात्ति सर्वा दिशोभि जयति ॥५॥ वै तेन सत्रं केन ॥

[1] प्रजापतिः प्रजाः सृष्ट्वा व्यस्रꣳसत । स हृदयंभूतोशयत् । आत्मन् हा ३ इत्यह्वयत् । आपः प्रत्यशृण्वन् । ता अग्निहोत्रेणैव यज्ञक्रु-

---

भुङ्क्ते । सर्वाश्च दिशोऽभिजयति । प्रजापत्यादयश्चतुर्होतॄणां होतारः होतृस्थानीयाः, एषां यज्ञत्वात् । प्रजापत्यादयो होतारः, कर्तृत्वसामान्यात् । एवं वेदिनाऽपि सर्वासु प्रजास्वन्नमत्ति, अभिजयति च सर्वा दिशः ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयप्रपाठके
पञ्चमोऽनुवाकः.

[1–2] प्रजासृष्ट्यनन्तरं प्रजापतिर्व्यस्रंसत विशीर्णशरीरोऽभवत् । स हृदयमात्रं भूत्वा अशयत् अशरीरोऽशेत । व्यत्ययेन परस्मैपदम् । विकरणव्यत्ययेन शप् । अथ शयित एव हे आत्मन्निति शरीरात्मानमह्वयत् आहूतवान् । 'है हे प्रयोगे हैहयोः' इति दूराद्धूते

तुनोप पर्यावर्तन्त । ताः कुसिन्धमुपौहन् । तस्मादग्निहोत्रस्य यज्ञक्रतोः । एक ऋत्विक् । [2]चतुष्कृत्वोऽह्वयत् । अग्निर्वायुरादित्यश्चन्द्रमाः ॥२३॥ ते प्रत्यशृण्वन् । ते दर्शपूर्णमासाभ्यामेव यज्ञक्रतुनोप पर्यावर्तन्त । त उपौहꣳश्चत्वार्यङ्गानि । तस्माद्दर्शपूर्णमासयोर्यज्ञक्रतोः । चत्वार ऋत्विजः ।

प्लुतः । 'एचोऽप्रगृह्यस्य' इति आकाराच्छान्दसं संहितायां पररूपत्वम् । अथ सकृदाह्वान एव आपः प्रत्यशृण्वन् शरीरमाह्वयन्तं प्रजापतिं प्रतीत्याह्वानमशृण्वन् । अथास्मै शरीरं प्रदातुं अग्निहोत्रेण यज्ञक्रतुतुल्येन समाहूता आपः उपपर्यावर्तन्त अस्य समीपे आ गच्छन् । यज्ञक्रतवो यूपवन्तः । अथापः कुसिन्धं कबन्धं कळेबरं कण्ठात्पूर्वं उपौहन् उपायन् प्रजापतये निष्पादितवत्यः । कुशिमात्मकोशं दधातीति कुशिन्धः । पृषोदरादिः । यस्मात्सकृदाह्वाने आपः प्रतिश्रुत्य अग्निहोत्रेण सहागताः, तस्मादग्निहोत्रस्य एक एवर्त्विक् अध्वर्युः । अथ प्रजापतिः आत्मन् हा इति चतुष्कृत्वोऽह्वयत् । अथाग्न्यादयः तत्प्रत्यशृण्वन् । तेऽग्न्यादयो दर्शपूर्णमासाभ्यां यज्ञक्रतुतुल्याभ्यां उपपर्यावर्तन्त । ते चत्वार्यङ्गानि हस्तौ पादौ चोपौहन् । तस्मादित्यादि । चतुराह्वाने दर्शपूर्णमासाभ्यां सहागमनात् तयोश्चत्वार ऋत्विजः अध्वर्युहोतृब्रह्माग्नीध्रा इति ॥

[3]पञ्चकृत्वोऽह्वयत् । पशवः प्रत्यशृण्वन् । ते चातुर्मास्यैरेव यज्ञक्रतुनोप पर्यावर्तन्त । त उपौहन्लोम छवीं माꣳसमस्थि मज्जानम् । तस्माच्चातुर्मास्यानां यज्ञक्रतोः ॥ २४ ॥ पञ्चर्त्विजः । [4]षट्कृत्वोऽह्वयत् । ऋतवः प्रत्यशृण्वन् । ते पशुबन्धेनैव यज्ञक्रतुनोप पर्यावर्तन्त । त उपौहन्थ्स्तनावाण्डौ शिश्नमवाञ्चं प्राणम् । तस्मात्पशुबन्धस्य यज्ञक्रतोः । षडृत्विजः । [5]सप्तकृत्वोऽह्वयत् । होत्राः प्रत्यशृण्वन् । तास्सौम्येनैवाध्वरेण यज्ञक्रतुनोप पर्यावर्तन्त ॥२५॥ ता उपौहन्थ्सप्त शीर्ॆषण्यान्प्राणान् । तस्माथ्सौम्यस्याध्वरस्य यज्ञक्रतोः । सप्त होत्राः प्राचीर्वषट्कुर्वन्ति । [6]दशकृत्वोऽह्वयत् । तपः

[3—6]एवं पञ्चकृत्व इत्यादि व्याख्येयम् ॥ सर्वत्र यागरूपस्याभिन्नत्वात् यज्ञक्रतोरित्येकवचनम् । यथा—'वसवो देवता रुद्रा देवता'* इति । लोमादीनि पञ्च । छवी त्वक् । 'कृदिकारादक्तिनः' इति ङीष् । पञ्चर्त्विज इति । प्रतिप्रस्थातृपञ्चमाः । स्तनौ द्वौ आण्डौ वृषणौ द्वौ शिश्नं अवाक्प्राणमपानं च षडुपौहन् । षडृत्विज इति मैत्रावरुणषष्ठाः । होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टा अच्छावाक आग्नीध्र इति सप्त । सप्तशीर्षण्यानिति । द्वे चक्षुषी

* तै. सं. ४-१-७.

प्रत्यशृणोत् । [7]तत्कर्मणैव संवथ्सरेण सर्वैर्यज्ञक्रतुभिरुप पर्यावर्तत । तथ्सर्वमात्मानमपरिवर्गमुपौहत् । तस्माथ्संवत्सरे सर्वे यज्ञक्रतवोऽवरुध्यन्ते । [8]तस्माद्दशहोता चतुर्होता । पञ्चहोता षड्ढोता सप्तहोता । एकहोत्रे बलिꣳ हरन्ति । हरन्त्यस्मै प्रजा बलिम् । ऐनमप्रतिख्यातं गच्छति । य एवं वेद ॥२६॥

चन्द्रमाश्चातुर्मास्यानां यज्ञक्रतोरध्वरेणं यज्ञक्रतुनोप पर्यावर्तन्त सप्तहोता चत्वारि च ॥६॥

---

द्वे श्रोत्रे द्वे नासिके एकमास्यमिति । प्राचीः प्राच्या वषट् कुर्वन्ति प्राञ्चस्त्वा यजन्ति ॥

[7—8]तत्कर्मणैवेत्यादि ॥ कर्मात्मकेन संवत्सरेण गवामयनेन सर्वैश्चान्यैः प्रकृतिविकृतिरूपैः यज्ञक्रतुभिस्सह तप उपपर्यावर्तत । तत्प्रजापतेस्सर्वमात्मानं शरीरं अपरिवर्गं किञ्चिदङ्गमपरिवृज्य पुष्कलसर्वाङ्गमुपौहत् । तस्मात्संवत्सरे क्रतौ अन्ये सर्वेऽपि यज्ञक्रतवोऽवरुध्यन्ते प्रकृतिविकृतिरूपेण सर्वे तत्रान्तर्भवन्ति । तस्मादित्यादि । यस्मादेवमग्निहोत्रेण एकहोत्रा प्रथमं कुसिन्धे उपानीते पश्चाद्दर्शपूर्णमासादिभिरङ्गैरुपकृतं, तस्माद्दशहोत्रादयः पञ्चापि आत्मविशेषा एकहोत्रे परस्मै आत्मने बलिं हरन्ति उपकुर्वन्ति । एवं वेदित्रे सर्वाः प्रजाः बलिं हरन्ति, प्रतिख्यातरहितं चैश्वर्यमेनमागच्छति ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः.

---

[1]प्रजापतिः पुरुषमसृजत । सोऽग्निरब्रवीत् । म-
मायमन्नमस्त्विति । सोऽबिभेत् । सर्वं वै माऽयं
प्रधक्ष्यतीति । स एताꣳश्चतुर्होतृनात्मस्परणान-
पश्यत् । तानजुहोत् । तैर्वै स आत्मानमस्पृणोत्।
[2]यदग्निहोत्रं जुहोति । एकंहोतारमेव तद्यज्ञक्रतुमा-
प्नोत्यग्निहोत्रम् ॥ २७॥ कुसिन्धं चात्मनस्स्पृणोति।
आदित्यस्य च सायुज्यं गच्छति । [3]चतुरुन्नयति ।
चतुर् होतारमेव तद्यज्ञक्रतुमाप्नोति दर्शपूर्णमा-
सौ । चत्वारि चात्मनोऽङ्गानि स्पृणोति । आदित्य-

---

[1]प्रजापतिः पुरुषमित्यादि ॥ प्रजापतिः परमात्मा पुरुषं हिरण्यगर्भमसृजत । अथाग्निः अनन्तरसृष्टोऽब्रवीत्—मम अन्नं अदनीयं अयमस्तु पुरुष इति, तद्व्यतिरिक्तस्याभावात् । अथ पुरुषस्तच्छ्रुत्वा अबिभेत् मां सर्वमप्ययं प्रधक्ष्यतीति । अस्त्वेव मां काममित्यनुमन्यमानः सर्वदाहात् बिभेति स्म । अथ स पुरुष एतान् चतुर्होतॄन् दशहोत्रादीन् आत्मस्परणान् आत्मनो रक्षणभूतान् अपश्यत् । अथ तद्धोमेन आत्मानमस्पृणोत् अरक्षत्, 'स्पृ प्रीतौ' अत्र रक्षणे । यद्वा—तैरात्मानमप्रीणयत् अरक्षदित्युक्तं भवति ॥

[2—7]तस्मादग्निहोत्रहोमेन एकहोतारमग्निहोत्रं यज्ञक्रतुमाप्नोति । एकहोतृता सर्वचतुर्होत्रादिसमुच्चयत्वात् । होतॄणां वा भागरूपम् । तादृशो यज्ञक्रतुराहृतो भवत्यग्निहोत्रहोमेन । केचिदाहुः—'ब्राह्मण एक-

स्यं च सायुज्यं गच्छति । [4]चतुरुन्नयति । समि-
त्पञ्चमी । पञ्चहोतारमेव तद्यज्ञक्रतुमाप्नोति चातु-
र्मास्यानि । लोम छवीं माꣳसमस्थि मज्जानम् ॥
तानि चात्मनस्स्पृणोति । आदित्यस्य च सायुज्यं
गच्छति । [5]चतुरुन्नयति । द्विर्जुहोति । षड्ढोतारमेव
तद्यज्ञक्रतुमाप्नोति पशुबन्धम् । स्तनावाण्डौ शि-
श्नमवाञ्चं प्राणम् । तानि चात्मनस्स्पृणोति । आ-
दित्यस्य च सायुज्यं गच्छति । [6]चतुरुन्नयति । द्वि-
र्जुहोति ॥ २१ ॥ समिथ्सप्तमी । सप्तहोतारमेव
तद्यज्ञक्रतुमाप्नोति सौम्यमध्वरम् । सप्त चात्मन-
श्शीर्षण्यान्प्राणान्थ्स्पृणोति । आदित्यस्य च सा-

होता'* इत्ययं सर्वहोतृसमुदायात्मा एकहोता, तदेवाविरासीदग्निहोत्रम्। स एव सर्वो यज्ञक्रतुः, स एवाप्तो भवत्यग्निहोत्रहोमेनेति । एवमग्निहोत्रस्तुतिस्सर्वोऽनुवाकः । प्रजापतिरिवात्मनः कुसिन्धं स्पृणोति, तस्याग्निहोत्रसंपादितत्वात् प्रजापतेः । कुसिन्धो व्याख्यातः† । आदित्यस्य पुरुषसमष्टिरूपस्य च सायुज्यं गच्छति । अथाग्निहोत्रे चतुरुन्नयनाच्चतुर्होत्रात्मकदर्शपूर्णमासलाभः । चत्वारि चाङ्गानि हस्तौ पादौ च स्पृणोति । आदित्यस्य सायुज्यं गच्छति । एवं सर्वत्र द्रष्टव्यम् । अथ चतुरुन्नयनात् समिधा च पञ्चम्या पञ्चहोत्रात्म-

* तै, आ, ३-७.  † ब्रा. २-२ ६.

युज्यं गच्छति । [7]चतुरुन्नयति । द्विर्जुहोति । द्विर्निमार्ष्टि । द्विः प्राश्नाति । दशाहोतारमेव तद्यज्ञक्रतुमाप्नोति संवथ्सरम् । सर्वं चात्मानमपरिवर्गꣳ स्पृणोति । आदित्यस्य च सायुज्यं गच्छति ॥

अग्निहोत्रं मज्ज्ञानं द्विर्जुहोत्यपरिवर्गꣳ स्पृणोत्येकं च ॥ ७ ॥

[1]प्रजापतिरकामयत प्रजायेयेति । स तपोतप्यत । सोऽन्तर्वानभवत् । स हरितश्श्यावोऽभवत् ।

---

कचातुर्मास्यलाभः । लोमादिपञ्चकं चात्मनः स्पृणोति । अथ चतुरुन्नयनात् द्विश्च होमात् सप्तम्या च समिधा सप्तहोत्रात्मकसौम्याध्वरलाभः । सप्त शीर्षण्यान् प्राणान् स्पृणोति । अथ चतुरुन्नयनात् द्विश्च होमात् द्विर्मार्जनात् द्विश्च प्राशनात् दशहोत्रात्मकसंवत्सरलाभः । संवत्सरो गवामयनम् । सर्वं चात्मानमपरिवर्गं किंचिदप्यपरिवृज्य स्पृणोति । आदित्यस्य च सायुज्यं गच्छति ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः.

---

[1]प्रजापतिरकामयतेत्यादि ।। तप इति दशहोतुर्जपहोमादिकमकरोत् । अन्तर्वान् गर्भवान् । हरितश्श्यावश्च श्वेतसंसर्गवर्णः नीलपाण्डुः, हरितसुवर्ण इति केचित् । 'अन्तर्वत्पतिवतोः' इति नि-

तस्माथ्स्त्र्यन्तर्वत्नी । हरिणी सती श्यावा भवति । स विजायमानो गर्भेणाताम्यत् । स तान्तः कृष्णश्श्यावोऽभवत् । तस्मात्तान्तः कृष्णश्श्यावो भवति । तस्यासुरेवाजीवत् ॥ ३१ ॥ तेनासुनाऽसुरानसृजत । तदसुराणामसुरत्वम् । य एवमसुराणामसुरत्वं वेद । असुमानेव भवति । नैनमसुर्जहाति । [2]सोसुरान्थ्सृष्ट्वा पितेवामन्यत । तदनु पितॄनसृजत । तत्पितृणां पितृत्वम् । य एवं पितृणां पितृत्वं वेद । पितेवैव स्वानां भवति ॥ ३२ ॥ य-

---

पातनान्मतुप् । हरिणी 'वर्णादनुदात्तात्' इति ङीप् । अथ प्रजापतिः विजायमानः प्रसुवानः प्रसवकाले तेन गर्भेण अताम्यत् क्लेशी बभूव, तान्तश्च कृष्णः श्यावः, कृष्णश्च श्वेतः वर्णेन अभवत् । तस्माद्ध्वगमनादिना तान्तोऽन्यः कोपि कृष्णः श्यावसंसर्गरूपो भवति । तस्य तान्तस्य प्रजापतेः असुः प्राण एवात्राजीवत् । तेनासुना असुरानसृजत । तेन असुना सृष्टत्वात् असुमन्तः प्राणवन्तोऽसुरा अभुवन् । य एवमित्यादि । गतम् ॥

[2] अथ असुरसृष्ट्यनन्तरं पितरं असञ्जातपितृत्वमात्मानममन्यत । तत्रान्तरे पितरमात्मानमनुमन्यमानः पितॄनसृजत । पितृभावमनुसंदधता सृष्टत्वात् पितरः । एवं वेदिता स्वानां ज्ञातीनां पितेव भवति । 'अज्ञातिधनाख्यायाम्' इति वचनात् सर्वनामत्वाभावः ।

न्त्र्यस्य पितरो हवम् । [3]स पितॄन्थ्सृष्ट्वाऽमनस्यत् ।
तदनु मनुष्यानसृजत । तन्मनुष्याणां मनुष्यत्वम् ।
य एवं मनुष्याणां मनुष्यत्वं वेद । मनस्व्येव भ-
वति । नैनं मनुर्जहाति । [4]तस्मै मनुष्यान्थ्ससृ-
जानाय । दिवा देवत्राऽभवत् । तदनु देवानसृजत ।
तद्देवानां देवत्वम् । य एवं देवानां देवत्वं वेद ।
दिवा हैवास्य देवत्रा भवति । [5]तानि वा एतानि
चत्वार्यम्भाꣳसि । देवा मनुष्याः पितरोऽसुराः ।

---

किंच अस्य हवं आह्वानं पितरो यन्ति आह्वानस्थानं गच्छन्ति, पितृत्वेन श्रद्धेयवचनत्वात् ॥

[3]अथ पितॄन् सृष्ट्वा अस्मिन्नवसरे अमनस्यत् मन आत्मन ऐच्छत् । मनस्वी बभूवेति वा । किमिदानीं सृजेयमिति मनसि कृतवान् । तस्मात् तदानीं जाता मनुष्याः मन्यमानस्यापत्यत्वात् मनुष्याः । 'मनोर्जातौ' इति यत्, षुक् । य एवमित्यादि । गतम् । मनुः मनुत्वं मन्तृत्वमेनं न जहाति ॥

[4-5]अथ तस्मै मनुष्यान् सृष्टवते दिवा दिवसस्तादात्विकः देवत्रा देवनादिकत्वे अभवत् मनुष्यवत्तया दीप्तिमानभवत् । तत्रान्तरे देवानसृजत । तस्माद्दीप्तिमद्देहसम्बन्धाद्देवाः । एवं वेदितुः सर्वो दिवसो देवत्रैव भवति देवन एव भवति । 'देवमनुष्य' इत्यादिना त्राप्रत्ययः । तानीत्यादि । अम्भांसि अदनस्थानानि 'अ

तेषु सर्वेष्वम्भो नभं इव भवति । य एवं वेद ॥

अजीवथ्स्वानौ भवति देवानसृजत सप्त च ॥

[1]ब्रह्मवादिनौ वदन्ति । यो वा इमं विद्यात् । यतोऽयं पवते । यदभि पवते । यदभि संपवते । सर्वमायुरियात् । न पुराऽऽयुषः प्रमीयेत । पशुमान्थ्स्यात् । विन्देत प्रजाम् । यो वा इमं वेद ॥ यतोऽयं पवते । यदभि पवते । यदभि संपवते । सर्वमायुरेति । न पुराऽऽयुषः प्रमीयते । पशुमा-

देर्नुम्भश्च' इत्यसुन् । भोगस्थानानीत्यर्थः । एवं वेदिता तेषु सर्वेष्वपि तत्तदम्भस्सदृशो विख्यातो भवति, व्याप्तिमांश्च भवति, नभ इव ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयप्रपाठके
अष्टमोऽनुवाकः.

---

[1]ब्रह्मवादिन इत्यादि ॥ वायुव्रतं नामेदं विधीयते । वायोः पञ्चहोतृहृदयत्वात्संगतिः । लिङ्गं च—'वायोरात्मानं कवयो निचिक्युः' * इति । ब्रह्मवादिनो वदन्ति— य इमं प्रसिद्धं पवमानं वायुं विद्यात् वेदितुमर्हति, यतश्च कारणादपादानाद्वा अयं पवते वाति तच्च यो विद्यात्, यच्चाभिपवते यदाश्रित्याभिलक्ष्य वा पवते

* तै. आ. १-१२.

न्भवति । विन्दते प्रजाम् । [2]अद्भ्यः पवते । अपोभि पवते । अपोभि संपवते ॥३५॥ अस्याः पवते । इमामभि पवते । इमामभि संपवते । अग्नेः पवते । अग्निमभि पवते । अग्निमभि संपयते । अन्तरिक्षात्पवते । अन्तरिक्षमभि पवते । अन्तरिक्षमभि सं पवते । आदित्यात्पवते ॥३६॥ आदित्यमभि पवते । आदित्यमभि सं पवते । द्योः

---

तत्र यो विद्यात् यत्राभिसंपवते आभिमुख्येनाश्रित्य सह पवते तत्र यो विद्यात्, स सर्वमायुरियात् पुरुषायुषं जीवितुमर्हति । सर्वत्रार्हार्थे लिङ् । आयुषो मध्ये न म्रियते, बहुपशुश्च स्यात् । लभेत च प्रजाम् । यस्मादेवं ब्रह्मवादिभिरुक्तम् ॥

[2]तद्दर्शयति—अद्भ्य इत्यादि ॥ अपः कर्माणि । अप्कारणः पवते कर्मनिर्वृत्तिद्वारेण अद्भ्यः पवनात् । तथा अप आश्रित्य अभिलक्ष्य वा पवते, अप्सु प्रवृत्तेः अपां वा हेतुत्वात् । तथाऽद्भिस्सह पवते, तस्य लोकस्थितिहेतुत्वात् । अपामभावे सर्वमेतन्न स्यात् । अस्या इति । हविर्निष्पत्त्यादेर्हेतुत्वात् पृथिव्याः । तदभावे वायोरभावात् । पृथिवीमाश्रित्य पवते, पृथिव्या सह स्थितिहेतुर्भवति । अग्नेरिति यागनिर्वृत्तिद्वारेणाग्नौ स्थित्वा पवते । अग्निना सह पवते । अन्तरिक्षादिति सुषिराभावे कर्मलोपात् अन्तरिक्षे पवते अन्तरिक्षेण सह विश्वं धारयति । आदित्या-

पवते । दिवमभि पवते । दिवमभि सं पवते । दिग्भ्यः पवते । दिशोभि पवते । दिशोभि सं पवते । [3]स यत्पुरस्ताद्वाति । प्राण एव भूत्वा पुरस्ताद्वाति ॥ ३७॥ तस्मात्पुरस्ताद्वान्तम् । सर्वाः प्रजाः प्रति नन्दन्ति । प्राणो हि प्रियः प्रजानाम् । प्राण इव प्रियः प्रजानां भवति । य एवं वेद । स वा एष प्राण एव । [4]अथ यद्दक्षिणतो वाति । मात-

दिति। वृष्ट्यादिद्वारेण आदित्ये तिष्ठति। आदित्येन सह विश्वं गच्छति। द्योरिति। वृष्ट्यादिहेतुत्वाद्दिवि तिष्ठति। द्युलोकेन संगत्य विश्वं धारयति। दिग्भ्य इति। पुरोवातादिहेतुत्वात् दिक्षु वातस्सञ्चरति दिग्विशेषैस्सङ्गत्य ऋतुधर्मान् प्रवर्तयति ॥

[3]स यदित्यादि ॥ स वायुः यदा पुरस्तात् पूर्वस्या दिशो वाति तदाऽसौ प्राण एव भूत्वा प्रजानां प्राणतुल्यः पूर्वस्या आगच्छति। तस्मात् पूर्वस्या दिश आगच्छन्तं वायुं सर्वाः प्रजाः प्रतिनन्दन्ति, प्रतिमुखं प्रत्येकं वा तिष्ठन्ति प्राणो नाम प्रजानां प्रियो भवति । पुरोवातश्च प्राण इत्युक्तम् । अथैवं वेदिता प्राण इव प्रजानां प्रियो भवति। किमुच्यते प्राण इव प्रिय इति? ननु स एष एवं पवमानमहिमवेदी प्राण एव सर्वप्रजानाम् । विदुषा हि सर्वं संधार्यते ॥

[4]अथ यदित्यादि ॥ मातरि सर्वस्य परिच्छेदके आकाशे सर्वत्र श्वयति वर्धते, सर्वस्य वा श्वासयिता, मातृवद्वा सर्व-

रिश्वैव भूत्वा दक्षिणतो वाति । तस्माद्दक्षिणतो वान्तं विद्यात् । सर्वा दिश आवाति ॥ ३८ ॥ सर्वा दिशोऽनु विवाति । सर्वा दिशोऽनु संवातीति । स वा एष मातरिश्वैव । [5]अथ यत्पश्चाद्वाति । पवमान एव भूत्वा पश्चाद्वाति । पूतमस्मा आहरन्ति । पूतमुपहरन्ति । पूतमश्नाति । य एवं वेद । स वा एष पवमान एव ॥ ३९ ॥ [6]अथ यदुत्तरतो वाति । सवितैव भूत्वोत्तरतो वाति । सवितेव स्वानां भवति । य एवं वेद । स वा एष सविते-

---

स्याश्वासयिता मातरिश्वा । एतादृश एव हि भूत्वा दक्षिणतो गच्छति, सर्वाप्यायकत्वात् । स खल्वेवं वेदिता स्वयं मातरिश्वैव । एवं विदुषा हि सर्वमाप्यते ॥

[5]पवमानः शोधकः पश्चाद्वातो भवति, शुद्धिहेतुत्वात्तस्य । अथ एवं वेदित्रेऽस्मै पूतं शुद्धमेव सर्वमाहरन्ति ददति, पूतमेवैतत्सकाशं प्रापयन्ति । पूतं एव स्वयं चाश्नाति भुङ्क्ते । किं बहुना, स एष वेदिता पवमान एव स्वयम् ॥

[6]अथ यदित्यादि ॥ सविता देवः सर्वस्यानुज्ञाता, स एव भूत्वोत्तरतो वाति । अथ एवं वेदिता स्वानां ज्ञातीनामपि सवितृतुल्यो भवति । किमुच्यते सवितेवेत्यादि ननु स एव स्वयं सवितैव ॥

व । [7]ते य एनं पुरस्तादायन्तमुपवदन्ति । य एवास्य पुरस्तात्पाप्मानः । तांस्तेऽपघ्नन्ति । पुरस्तादितरान्पाप्मनस्सचन्ते । [8]अथ य एनं दक्षिणत आयन्तमुपवदन्ति ॥ ४० ॥ य एवास्य दक्षिणतः पाप्मानः । तांस्तेऽपघ्नन्ति । दक्षिणत इतरान्पाप्मनस्सचन्ते । [9]अथ य एनं पश्चादायन्तमुपवदन्ति । य एवास्य पश्चात्पाप्मानः । तांस्तेऽपघ्नन्ति । पश्चादितरान्पाप्मनस्सचन्ते । [10]अथ य एनमुत्तरत आयन्तमुप वदन्ति । य एवास्यौत्तरतः पाप्मानः । तांस्तेऽपघ्नन्ति ॥ ४१ ॥ उत्तरत इतरान्पाप्मनस्सचन्ते । [11]तस्मादेवं विद्वान् । वीवं नृत्येत् । प्रेवं

[7]ते य एनमित्यादि ॥ ते खलु य एते पुरस्तादायन्तं पूर्वस्या दिश आगच्छन्तं विद्वांसं प्राणादिरूपेण प्राच्यादिदिक्षु निर्धारितमेनमुपवदन्ति निन्दन्ति । निन्दितृदर्शनेऽपि न निन्दितः स इति दर्शयति—ते उपवदितारोऽस्य पुरस्तात्पाप्मानः तद्दिगवस्थितान् उपवदितारः स्वयं गृह्णन्तीति । एवं विद्वत्संबन्धेन साऽपि दिक् विपाप्मा भवतीति ॥

[8—10]अथ य एनं दक्षिणत इत्यादि ॥ समानम् ॥

[11]तस्मादिति ॥ यस्मादेवमुपवदितारः पाप्मनोऽपघ्नन्ति । तस्मादुपवदनमेवंफलमिति विद्वान् वीव नृत्येत् विरूपमिव नृत्येत् गात्राणि

चलेत् । व्यस्येवाक्ष्यौ भाषेत । मण्टयेदिव । क्राथयेदिव । शृङ्गायेतेव । उत मोपवदेयुः । उत मे पाप्मानमपहन्युरिति । [12]स यां दिशꣳ सनिमेष्यन्थ्स्यात् । यदा तां दिशं वातो वायात् । अथ

विनामयेत्, प्रेव चलेत् प्रकृष्टमिव चलेत् प्रमाणातीतमिव पद-विन्यासं कुर्यात् । व्यस्येवाक्ष्यौ भाषेत व्यस्य विक्षिप्येव अक्ष्यौ अक्षिणी चक्षुषी भाषेत अतिमात्रविष्फारिताक्षो वक्तव्यानि प्रतिपद्येत 'ई च द्विवचने' इतीकारः । मण्टयेदिव उन्मत्त इव अनवस्थितं चेष्टेत । 'मटि उन्मादे' । क्राथयेदिव उन्मादातिशयेन क्राथयन् सर्वान् जन्तून् हिनस्ति । 'क्रथ हिंसायाम्' चुरादिः । अथोन्माथमिव चरेत् । शृङ्गायेतेव शृङ्गायितं नाम उक्षक्रीडितं, यत्र शृङ्गाभ्यां मृदमुद्धृत्य पृष्ठे विक्षिपति तामेव क्रीडामाचरेत् । किमर्थमिति चेत्—उत मोपवदेयुः अपिनाम किञ्चिन्मां निन्दयेयुरिति । तदपि किमर्थमिति चेत्—उत मे पाप्मानमपहन्युरिति । अपिनाम मम पाप्मानमेते नाशयेयुरिति ॥

[12]स यामित्यादि ॥ स विद्वान् यां दिशं सनिं भिक्षणं एष्यन् स्यात् यां दिशं भिक्षितुमेष्यन् स्यात् सननीयं भक्तं सनिं 'वन षण संभक्तौ' औणादिक इप्रत्ययः । गत्यर्थत्वात् द्विकर्मकत्वम् । सन्वेषणं वा । तां दिशमाश्रित्य यदा वातो वायात् यतो दिशो वात आगच्छेत् अथ अनन्तरं तां दिशं प्रवेयात् प्रेयाद्वा स्वयं प्रधावयेत् प्रेषयेद्वा शिष्यादिकम् । केचिदाहुः—तां दिशं प्रतिगच्छेद्वा धावेद्वेति । स्वार्थिको णिच्

प्रवेयात् । प्र वा धावयेत् * । सातमेव रदितं व्यूढं गन्धमभि प्रच्यवते । आऽस्य तं जनपदं पूर्वा कीर्तिर्गच्छति । दानकामा अस्मै प्रजा भवन्ति । य एवं वेद ॥ ४२॥

वेद सं पवत आदित्यात्पवते वात्यावात्येष पवमान एव दक्षिणत आयन्तमुप वदन्त्युत्तरतः पाप्मानस्ताꣳस्तेऽपघ्नन्तीत्यष्टौ च ॥ ९ ॥

---

यथेष्टं गच्छेदिति । यथा गच्छन् स्यात्ताहग्गुणकमेव भैक्षमभिप्रच्यवते यत्रैवंगुणकमुत्पत्स्यते तत्रैव गच्छेत् । सातं स्वयं लब्धं न तु पूर्वं लिप्सितं प्रागनावेदितम् । सनोतेर्निष्ठायां 'जनसनखनाम्' इत्यात्वम् । रदितं विलेखितं कृतमर्यादं परिमितमित्यर्थः । 'रद विलेखने' । व्यूढं विभक्तं साधारणपात्रात् पृथगुद्धृतम् । गन्धं प्रकाशितं इदमद इति ख्यापितं, गन्धं सिद्ध्यन्तमिति केचित् । एवमिदं व्रतमाचरति । अस्य कीर्तिः पूर्वा प्रथमैव तं जनपदं जनाधिवासं आगच्छति । अस्य कीर्तिस्तत्र प्रथमं प्रथते, अयमेव सर्वजनचित्तस्थो भवति । वेदितुरेव वा इदं फलम् । अथैवं वेदित्रे दानकामास्सर्वाः प्रजा भवन्ति ॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयप्रपाठके नवमोऽनुवाकः.

---

* धापयेत्.

[1]प्रजापतिस्सोम॒ꣳ राजानमसृजत । तं त्रयो॒ वेदा॒ अन्वसृज्यन्त । तान् हस्तेऽकुरुत । अथ॒ ह सीता सावि॒त्री । सोम॒ꣳ राजानं चकमे । श्र॒द्धामु॒ स चकमे । सा ह पि॒तरं प्र॒जापति॒मुपससार । तꣳ होवाच । नमस्ते अस्तु भगवः । उप त्वाऽऽयानि ॥ ४३ ॥ प्र त्वा पद्ये । [2]सोम॒ं वै राजानं कामये । श्र॒द्धामु॒ स कामयत॒ इति । तस्या॒ उ॒ ह स्थागरमलङ्कारं कल्पयि॒त्वा । दशहोतारं पु॒रस्ताद्व्याख्याय । चतुर्होतारं दक्षि॒णतः । पञ्चहोतारं प॒-

---

[1]प्रजापतिस्सोममित्यादि ॥ सोमसृष्ट्यनन्तरं त्रयो वेदास्सृष्टाः । अथ सोमस्तान् वेदान् हस्तेऽकुरुत हस्तेऽगृह्णात् । अथ एतं सोमं राजानं सीता नाम सवितुः त्वष्टुः प्रजापतेः दुहिता चकमे । स तु सोमः श्रद्धामेव प्रजापतिपुत्रीं चकमे । अथ सा सीता भर्तुः द्वेष्या पितरं प्रजापतिमुपससार उपाजगाम उवाच च पितरं—नमस्ते अस्तु भगवः, उपायानि त्वा त्वामेवोपयानि त्वत्पार्श्वे एव मया वस्तव्यं मा गां पत्यन्तिकं, प्रपद्येऽहं त्वां शरणं भजामि ॥

[2]अथ किं तवागतमिति पित्रा पृष्टा सोवाच—सोमं राजानं कामयेऽहं स तु श्रद्धामेव कामयत इति । अथ प्रजापतिस्तस्यै तदर्थं भर्तृवशीकारार्थं स्थागरं स्थगरविकारं स्थगरो नाम

श्चात् । षड्ढोतारमुत्तरतः । सप्तहोतारमुपरिष्टात् । सम्भारैश्च पत्निभिश्च मुखेऽलङ्कृत्य ॥ ४४ ॥ आऽस्यार्धं वव्राज । ताꣳ होदीक्ष्योवाच । उप माऽऽवर्तस्वेति । तꣳ होवाच । भोगं तु म आचक्ष्व । एतन्म आचक्ष्व । यत्ते पाणाविति । तस्या उ ह त्रीन् वेदान्प्रददौ । तस्मादु ह स्त्रियो भोगमेव हारयन्ते । [3]स यः कामयेत प्रियस्स्यामिति ॥ ४५ ॥ यं वा

गन्धद्रव्यविशेषः, तं पिष्ट्वा अलङ्कारं कल्पयित्वा तेन गन्धेन मण्डनं कृत्वा। तस्य पूर्वादिदिक्षु दशहोत्रादीन् व्याख्याय, मण्डनेन मण्डयित्वेति केचित् । अथ संभारैः 'अग्निर्यजुर्भिः' *इत्याद्यैः पत्नीभिश्च 'सेनेन्द्रस्य' *इत्यादिभिः तां मुखे अलंकृत्य तस्या मुखं लेपयित्वा अस्य सोमस्य अर्धं अर्धांशं समीपं आवव्राज आगमयामास । मुख्यत्वाद्गन्तव्यस्याध्वनोऽर्धे स्थितां सोम उदीक्ष्य दृष्ट्वा उवाच । उच्छ्रितमीक्षणमुदीक्षणं, वशीकरणप्रयोगसामर्थ्येन अयथापूर्वं सौत्सुक्यमीक्षित्वा तामुवाच—मामुपावर्तस्व किमर्थेऽध्वनि स्थीयते । अथ तच्छ्रुत्वा तमुवाच—भोगं मे आचक्ष्व यत्ते पाणौ स्थितमिति पृष्टस्सोमस्तस्यै त्रीन् वेदान् प्रददौ । यस्मादियं सीता प्रियं वस्तु ययाचे तस्माल्लोकेऽपि स्त्रियो भोगमुद्दिश्य प्रियं दायं पुरुषमाहारयन्त एव ॥

[3]स य इत्यादि ॥ गतम् ॥

* तै. आ. ३-८, ९.

कामयेत प्रियस्स्यादिति । तस्मा एतꣳ स्थागरमलङ्कारं कल्पयित्वा। दशहोतारं पुरस्ताद्व्याख्याय । चतुर्होतारं दक्षिणतः । पञ्चहोतारं पश्चात् । षड्ढोतारमुत्तरतः । सप्तहोतारमुपरिष्टात् । सम्भारैश्च पत्निभिश्च मुखेऽलङ्कृत्य । आऽस्यार्धं व्रजेत् । प्रियो हैव भवति ॥ ४६ ॥

अयान्यलङ्कृत्यं स्यामिति भवति ॥ १० ॥

[1]ब्रह्मात्मन्वदसृजत । तदकामयत । समात्मना पद्येयेति । आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै द-

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयप्रपाठके दशमोऽनुवाकः.

---

*[1]दशमे होतृमन्त्रैः काम्यप्रयोग उक्तः। अथैकादशे दशहोत्रादिमन्त्रनाम्नां प्रवृत्तिनिमित्तमुच्यते । तत्रादौ दशहोतृशब्दस्य प्रवृत्तिनिमित्तं दर्शयति—ब्रह्मात्मन्नित्यादिना ॥ यदेतज्जगत्कारणं परं ब्रह्म तदेतदादिसृष्टावात्मन्वज्जीवात्मोपेतं दशहोतृमन्त्राभिमानिदेवतानां शरीरमसृजत तत्सृष्ट्वा चानन्तरमनेन जीवात्मना

* एकादशानुवाकीयभट्टभास्करभाष्यस्य मातृकापुस्तकेऽलाभात्सायणीयमेवात्र भाष्यं निवेशितम्.

शम॑ँ हूतः प्रत्यशृणोत् । स दशहूतोऽभवत् । दशहूतो ह वै नामैषः । तं वा एतं दशहूत॑ँ सन्तम् । दशहोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ॥ ४७॥ [2]आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै सप्तम॑ँ हूतः प्रत्यशृणोत् । स सप्तहूतोऽभवत् । सप्तहूतो ह वै नामैषः । तं वा एत॑ँ सप्तहूत॑ँ सन्तम् । सप्तहोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । [3]आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै षष्ठ॑ँ हूतः प्रत्यशृणोत् । स षड्ढूतोऽभवत् ॥ ४८॥ षड्ढूतो ह वै नामैषः । तं वा एत॑ँ

सम्पद्येय संगतो भवेयमिति विचार्य तं जीवात्मानमुद्दिश्य आत्मन्निति संबोध्य आमन्त्रितवान् । द्विरुक्तिर्बह्वर्था । बहुकृत्व आहूतवानित्यर्थः । एवं ब्रह्मण्याह्वयति सति दशमे पर्याये समाहूतो जीवात्मा प्रत्यशृणोत् भो इति प्रत्युत्तरं दत्तवान् । तावता तस्य दशहोतेति नाम संपन्नम् । सोऽयं वस्तुतो दशहूत एव । एवमेव वास्तवं नामविशेषमाच्छाद्य अपरेण वर्णान्तरव्यवहितेन दशहोतेति नाम्ना व्यवहरन्ति । यस्माद्देवाः पूज्याः पित्राचार्यादयः स्वकीयं वास्तवं नाम परित्यज्य हे तात ! हे आचार्य ! इति परोक्षेणाह्वानं प्रियं पश्यन्ति तस्माद्युक्तः परोक्षनामव्यवहारः ॥

[2—5]अथ सप्तहोत्रादिनामप्रवृत्तिं दर्शयति—आत्मन्नित्यादिना ॥

षड्ढूत॒ꣳ सन्त॑म् । षड्ढो॒तेत्या च॑क्षते प॒रोक्षे॑ण । प॒रो-क्ष॑प्रिया इ॒व हि दे॒वाः । ⁴आत्म॒न्नात्म॒न्नित्या म॑न्त्र-यत । तस्मै॑ पञ्च॒मꣳ हूतः प्रत्य॑शृणोत् । स पञ्च॑हू-तोऽभवत् । पञ्च॑हूतो ह॒ वै नाम॒ष: । तं वा ए॒तं पञ्च॑हूत॒ꣳ सन्त॑म् । पञ्च॑हो॒तेत्या च॑क्षते प॒रोक्षे॑ण ॥ प॒रोक्ष॑प्रिया इ॒व हि दे॒वाः । ⁵आत्म॒न्नात्म॒न्नित्या म॑-न्त्रयत । तस्मै॑ चतु॒र्थꣳ हूतः प्रत्य॑शृणोत् । स च-तु॒र्हूतोऽभवत् । चतु॒र्हूतो ह॒ वै नाम॒ष: । तं वा ए॒तं चतु॒र्हूत॒ꣳ सन्त॑म् । चतु॒र्हो॑तेत्या च॑क्षते प॒रो-क्षे॑ण । प॒रोक्ष॑प्रिया इ॒व हि दे॒वाः । ⁶तम॑ब्रवीत् । त्वं वै मे॒ नेदि॑ष्ठꣳ हूतः प्रत्य॑श्रौषीः । त्वयै॑नाना-ख्या॒तार॒ इति॑ । तस्मा॒न्नु है॑ना॒ꣳश्चतु॒र्होतार॒ इत्या-

---

सप्तहोतृषड्ढोतृपञ्चहोतृचतुर्होतृनामानिर्वचनवाक्यानि दशहोतृवाक्यवद्व्या-ख्येयानि ॥

⁶अथ चतुर्होतृमन्त्राभिमानिनं पुरुषं विशेषतः प्रशंसति—तम-ब्रवीदित्यादिना ॥ चतुर्होतृमन्त्राभिमानिनं देवं प्रजापतिरेवमब्रवीत्—त्वमेवैको मया समाहूतस्सन् मदीयं वाक्यं नेदिष्ठमतिसमीपं यथा भवति तथा श्रुत्वा प्रत्युत्तरं दत्तवान् । चतुर्थमामन्त्रणं त्वया श्रुतं इतरे न तथा सहसा श्रुतवन्तः । तस्मात्त्वयैव सर्वानेतान्

चक्षते। तस्माच्छुश्रूषुः पुत्राणाꣳ हृद्यतमः। नेदिष्ठो हृद्यतमः। नेदिष्ठो ब्रह्मणो भवति। य एवं वेद॥

देवांꣳष्षड्ढूतोऽभवत्पञ्चहोतेत्याचक्षते परोक्षेणा-श्रौषीष्षड्ढ॥ ११॥

ब्रह्मवादिनः किं दक्षिणां यो वा अविद्वान्तस्य वै ब्रह्मवादिनो यद्दशहोतारः प्रजापतिर्व्यस्त्रं प्रजापतिः पुरुषं प्रजापतिरकामयत स तपस्सोऽन्तर्वान्ब्रह्मवादिनो यो वा इमं विद्यात्प्रजापतिस्सोमꣳ राजानं ब्रह्मात्मन्वदेकादश॥ ११॥

ब्रह्मवादिनस्स्य वा अग्नेर्यद्वा इदं किंच प्रजापतिरकामयत य एवास्य दक्षिणतः पश्चाशत्॥

हि जनाः कथयिष्यन्ति। एते चतुर्होतार इत्येवं त्वन्नाम्नैव व्यवहारो भविष्यतीत्यर्थः। यस्मादेवं प्रजापतिना वरो दत्तः तस्मादेतान् दशहोत्रादीन् सर्वानपि चतुर्होतार इत्येव वचनं वैदिका आचक्षते। यस्मादेवं शीघ्रं वाक्यं श्रुतवतश्चतुर्होतुः प्रजापतेर्वरलाभस्तस्माल्लोकेऽपि पुत्राणां मध्ये यः पितृवाक्यमादरेण श्रोतुमिच्छति स एव पितुर्हृद्यतमोऽत्यन्तं प्रियः। योऽतिप्रियः स नेदिष्ठोऽतिसमीपवर्ती भवति। पुमानेवं चतुर्होतृब्रह्मसमीपवर्तित्वं वेद स स्वयमपि ब्रह्मणोऽतिसमीपवर्ती भवति॥

इति तैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयप्रपाठके
एकादशोऽनुवाकः
समाप्तश्चायं प्रपाठकः.

# चतुर्थप्रपाठकप्रारम्भः.

---

हरिः ओम् ॥ [1]जुष्टो दमूना अतिथिर्दुरोणे । इमं नो यज्ञमुप याहि विद्वान् । विश्वा अग्नेऽभियुजो विहत्य । शत्रूयतामाभरा भोजनानि । [2]अ-

---

[1]अथोपहोमा आरभ्यन्ते । सतीष्वपि याज्यानुवाक्यासु बाहुल्यात् उपहोमाख्यं प्रश्नद्वयं वैश्वदेवं काण्डं, लिङ्गवन्तः यथालिङ्गं विनियोज्याः । तत्र 'संस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय' इत्यस्य विधानात्तत्र द्वे संयाज्ये—जुष्टो दमूना इति त्रिष्टुभौ ॥ जुष्टः प्रीतः 'नित्यं मन्त्रे' इत्याद्युदात्तत्वम् । दमूनाः दान्तमनाः दान्तेषु वा मनो यस्य । पृषोदरादिः । अतिथिः सततगमः 'अत सातत्ये' अतेरिथिन्प्रत्ययः । अतिथिवत्पूज्यो वा दुरोणे यज्ञगृहे दुःखेनावितव्ये औणादिके न प्रत्यये ओर्गुणः । हे अग्ने! इमं आस्माकीनं यज्ञं उपयाहि उपगच्छ विद्वान् सर्वार्थज्ञः । आगत्य च विश्वा अभियुजः अभियोक्तॄन् । कर्तरि संपदादिलक्षणः क्विप् । विहत्य विनिवार्य शत्रूयतां अस्मासु शत्रुत्वमिच्छताम् । 'छन्दसि परेच्छायामपि' इति क्यच् । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । भोजनानि भोज्यानि धनानि अस्मभ्यं आभर आहर । 'ह्रग्रहोर्भश्छन्दसि' इति भत्वम् ॥

ग्ने शर्धं महते सौभगाय। तव द्युम्नान्युत्तमानि सन्तु। सं जास्पत्यꣳ सुयममा कृणुष्व। शत्रूयतामभितिष्ठा महाꣳसि। [3]अग्ने यो नोऽभितो जनः। वृको वारो जिघाꣳसति ॥१॥ ताꣳस्त्वं

---

[2]अग्ने शर्धेति ॥ अग्ने! शर्ध उत्साहवान् भव। आमान्त्रितस्य अविद्यमानवत्त्वान्निघाताभावः। महते सौभगाय 'सुभगान्मन्त्रे' इत्यण्। उत्तरपदवृद्धिश्च नेष्यते। तव द्युम्नानि तेजांसि यशांसि उत्तमानि उत्कृष्टतमानि सन्तु। उत्तमशब्दः उञ्छादिरन्तोदात्तः। जास्पत्यं जायन्त इति जासः पुत्रादयः। जनेरसुनि जादेशः। तेषां पतित्वात् गत्युत्तरपदलक्षणो यत्। सुयमं सुष्ठु संयन्तुं शक्यं समाकृणुष्व अस्मासु सम्यक्प्रकाशय 'धिन्विकृण्व्योर च' इत्युप्रत्ययः। आतो लोपः। अस्मासु शत्रूयतां शत्रुत्वमिच्छतां त्वयि वा शत्रुमात्मानमिच्छतां महांसि तेजांसि अभितिष्ठ आक्रमस्व न्यग्भूतानि कुरु। काचिदाग्नेय्यौ याज्यानुवाक्ये। एवं सर्वत्र ॥

[4]अग्ने यो न इत्यनुष्टुभौ ॥ हे! अग्ने! यः शत्रुजनः वृको वृकसदृशः अरण्यश्वा यथोपद्रवकारी तथोपद्रवकारीत्यर्थः। अत एव वारः अस्मद्व्यवहारस्य निवारकस्सन् सर्वतोस्मान् जिघांसति हन्तुमिच्छति। हे वृत्रहन्! वैरिघातिन्! अग्ने! तान् वृकसदृशान् जहि मारय। अस्मभ्यं तु वसु धनं आभर संपादय ॥

वृत्रहञ्जहि । वस्वस्मभ्यमाभर । [4]अग्ने यो नोऽभिदासति । समानो यश्च निष्ट्यः । इध्मस्येव प्रक्षायतः । मा तस्योच्छेषि किंचन । [5]त्वमिन्द्राभिभूरसि । देवो विज्ञातवीर्यः । वृत्रहा पुरुचेतनः । [6]अप प्राच इन्द्र विश्वाꣳ अमित्रान् ॥ २॥ अपापाचो अभि-

---

[4]हे अग्ने! यः नः अस्मान् अभिदासति उपक्षयति समानजातीयः यश्च निष्ट्यः शिष्यश्चण्डालादिः । तस्य किंचन किंचिदपि मोच्छेषि । अग्नौ प्रक्षिप्तस्य इध्मस्य प्रक्षायतः दाहेन क्षीयमाणस्य दह्यमानस्य न किंचिदुच्छिष्यते तद्वत् ॥

[5]त्वमिन्द्रेति गायत्री ॥ अभिभूः सर्वस्याभिभविताऽसि । देवः देवनादिगुणयुक्तः । विज्ञातवीर्यः प्रसिद्धवीर्यः । अत एव अभिभूः अभिभविता शत्रूणामसि । वृत्रहा पापादीनां हन्ता । पुरुचेतनः महाप्रज्ञः । बहुभिर्ज्ञातव्यो वा ॥

[6]अप प्राच इति त्रिष्टुप् ॥ ऊराविति चतुर्थपादादिः हे ! इन्द्र ! प्राच्यां दिशि स्थितान् विश्वान् अमित्रान् अपनुदस्व नाशय । अपापाचः प्रतीच्यां दिशि स्थितान् अपनुदस्व । हे अभिभूते ! अभिभवनशील ! हे ! शूर ! उदीचः उदीच्यां दिशि स्थितान् अपनुदस्व । अधराचः दक्षिणस्यां दिशि स्थितान् अपनुदस्व । गोळाभिप्रायं दक्षिणस्याधरत्वम् । यथा तव ऊरौ उरौ, वर्णव्यत्ययश्छान्दसः । विस्तीर्णे शर्मन् शर्मणि सुखे मदेम इष्टजनैस्सह माद्येम, तथा सर्वान् शत्रूनपनुदस्व ॥

भूते नुदस्व । अपोदीचो अप शूराधराच उरौ । यथा तव शर्मन्मदेम । [7]तमिन्द्रं वाजयामसि । महे वृत्राय हन्तवे । स वृषा वृषभो भुवत् । [8]युजे रथं गवेषणꣳ हरिभ्याम् । उप ब्रह्माणि जुजुषाणमस्थुः । विबाधिष्टास्य रोदसी महित्वा । इन्द्रो

[7]तमिन्द्रमिति गायत्री ॥ तमिन्द्रं वाजयामसि । 'वजि वक्रगतौ' 'इदन्तोमसि' । महे महते वृत्राय । शतुर्वचनोऽयम् । 'गत्यर्थकर्मणि' इति चतुर्थी । महान्तं अस्मच्छत्रुं हन्तवे अस्य वृत्रस्य हननाय । स चेन्द्रो वृषा कामानां वर्षयितृस्वभावः । वृषभः अस्मदभिप्रेतस्य वर्षिता, वृषभवद्‌सह्यो वा । भुवत् भवतु ॥

[8]युजे रथमिति त्रिष्टुप् ॥ युजे युङ्क्ते । 'बहुलं छन्दसि' इति शपो लुक् । 'लोपस्त आत्मनेपदेषु' इति तलोपः । गवेषणं गोरुदकस्येषणं प्राप्तिहेतुं 'अवङ् स्फोटायनस्य' इत्यवङ् । वृष्टिहेतुं रथं हरिभ्यां अश्वाभ्यां युक्तं इन्द्रः । कदेत्याह—ब्रह्माणि परिवृढानि हवींषि जुजुषाणं प्रियमाणं उपास्थुः उपतिष्ठन्ते । जुषेः लिटि कानच् । तदानीं रथं युङ्क्ते । अनन्तरं च वृत्राणि अमित्रादीनि अप्रति प्रतीकाररहितं जघन्वान् हतौ 'अभ्यासाच्च' इति कुत्वम् । ईदृशोऽयमिन्द्रः अस्य यजमानस्य क्रतोः रोदसी रोदस्योः द्यावापृथिव्योरपि स्थितान् अमित्रान् विबाधिष्ट विविधं बाधते । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । महित्वा माहात्म्येन, भावप्रत्ययान्तात्तृतीयाया आकारः ॥

वृत्राण्यप्रती जघन्वान् ॥ ३ ॥ [9]हव्यवाहमभिमाति-षाहम् । रक्षोहणं पृतनासु जिष्णुम् । ज्योतिष्मन्तं दीद्यतं पुरन्धिम् । अग्निꣳ स्विष्टकृतमा हुवेम । [10]स्विष्टमग्ने अभि तत्पृणाहि । विश्वा देव पृतना अभिष्य । उरुं नः पन्थां प्रदिशन्वि भाहि । ज्यो-

---

[9]यस्याग्निहोत्रं विच्छिद्यते तस्य संयाज्ये—हव्यवाहमिति त्रिष्टुभौ ॥ हव्यवाहं हविषां वोढारं अभिमातिषाहं पाप्मनामभिभवितारं रक्षोहणं रक्षसां हन्तारं पृतनासु संग्रामेषु जिष्णुं जयशीलं ज्योतिष्मन्तं दीप्तिमन्तं दीद्यतं निर्मलदीप्तिं पुरंधिं पुरुषु शरीरेषु धीयमानं, उपास्यमानम्, पुरुप्रज्ञानं वा । पृषोदरादिः । ईदृशं स्विष्टकृतं अग्निं आहुवेम आह्वयाम । लिङ्ग्याशिष्यङ् ॥

[10]स्विष्टमग्न इति ॥ हे! अग्ने! स्विष्टं सम्यगिष्टं तत् अभिपृणाहि आभिमुख्येन पूरय पालय वा । 'सेर्ह्यपिच्च' इत्यस्य 'वा छन्दसि' इति बाधितत्वात् ह्रिस्वाभावः । हे! देव! विश्वाः पृतनाः संग्रामान् अभिष्य आभिमुख्येनान्तं गमय । स्यतेः लोटि हिलोपे 'विभाषा' इति निघाताभावः । अस्मभ्यं च उरुं विशिष्टं प्रसिद्धं पन्थां पन्थानं मार्गं प्रदिशन् ददत् विभाहि विशेषेण संदीप्यस्व । किं च ज्योतिष्मत् उज्ज्वलं लोकपूजितं अजरं अजर्य्यं आयुः अस्मज्जीवितं वा अस्मभ्यं धेहि देहि ॥

तिष्मद्वेह्यजरं न आयुः । [11]त्वामग्ने हविष्मन्तः । देवं मर्तास ईडते ॥४॥ मन्ये त्वा जातवेदसम् । स हव्या वक्ष्यानुषक् । [12]विश्वानि नो दुर्गहा जातवेदः । सिन्धुं न नावा दुरिताऽतिपर्षि । अग्ने अत्रिवन्मनसा गृणानः । अस्माकं बोध्यविता तनू-

---

[11]त्वामग्ने इत्यनुष्टुप् ॥ ततः परं क्वचिदुपहोमाः । देवं दीप्यमानं हविष्मन्तः मर्तासः मनुष्याः ईडते स्तुवन्ति, तं त्वामहं जातवेदसं जातानां वेदितारं जातधनं वा मन्ये जानामि । स त्वमस्माकं हव्या हवींषि वक्षि । वहेर्लेटि शपो लुक् । आनुषक् अनुक्रमेण ॥

[12]विश्वानि न इति ॥ हे! जातवेदः! नः अस्मदीयानि दुर्गहा दुष्परिहराणि विश्वानि दुरितानि पापानि अतिपर्षि अतीत्य पालय । तत्र दृष्टान्तः—यथा नावा सिन्धुं तीर्त्वा नाविकः प्रजाः पालयति । किंच अत्रिणा तुल्यमस्माकं मनसा गृणानः श्रद्धया कीर्त्यमानः स्तूयमानः । कर्मणि कर्तृप्रत्ययश्छान्दसः। यद्वा—मनसा गृणानः शब्दयन् साधु करोत्ययमिति अस्मद्यागं हृदयेन प्रशंसन् अस्माकं तनूनां शरीराणां पुत्रादिसंबन्धिनीनां अविता रक्षिता भव । अत्रिवत् बोधि बुध्यस्व । लोटि छान्दसः शपो लुक् । यद्वा—अत्र्यादिवत् अबोधि आद्रियते । छान्दसो लुक् । 'दीपजन' इत्यादिना कर्तरि चिण् । 'बहुळं छन्दस्यमाङ्योगेऽपि' इत्यडभावः ॥

नाम्न् । [13]पूषा गा अन्वेतु नः । पूषा रक्षत्ववतः । पूषा वाजꣳ सनोतु नः । [14]पूषेमा आशा अनुवेद् सर्वाः ॥ ५ ॥ सो अस्माꣳ अभयतमेन नेषत् । स्वस्तिदा अघृणिस्सर्ववीरः । अप्रयुच्छन्पुर एतु

[13]पूषा गा इति गायत्री ॥ अस्माकं गाः पूषा अन्वेतु रक्षकत्वेन पृष्ठतोऽनुगच्छतु । पूषैव अर्वतः अश्वानपि रक्षतु । वाजमन्नं धनं वा अस्मभ्यं सनोतु । 'षणु दाने' ॥

[14]पूषेमा इति त्रिष्टुभ् ॥ इमा आशा दिशः सर्वाः पूषा अनुवेद अनुक्रमेण जानाति । सोऽस्मान् 'प्रकृत्याऽन्तः पादमव्यपरे' इति प्रकृतिभावः । अभयतमेन धर्माविरुद्धमार्गेण भयरहितेन वा नेषत् नयतु उभयोरपि लोकयोः भयनिवृत्तिमात्रमेव न, अपिच स्वस्तिदाः अविनाशस्य कल्याणस्य दाता 'आतो मन्' इति विच् । अघृणिः रक्षणशीलः 'अघृ धारणे' औणादिको निप्रत्ययः । यद्वा—अघृणिः आघृणिः समन्ताद्दितायमानतेजाः । उपसर्गह्रासः । यद्वा—यत्सकाशे अन्यो घृणिमान्नास्ति । पूर्ववन्न लुस्वरबाधः । सर्ववीरः सर्वे वीरा यस्य संबन्धिनः तादृशः । यद्वा—सर्वैर्वीरैस्सह अस्माकं पुरः अग्रतः अनुगच्छतु । अप्रयुच्छन् अप्रमाद्यन् । 'युच्छ प्रमादे' । प्रजानन् प्रकर्षेण जानन् अस्मदभिप्रेतानि जानन् ॥

प्रजानन् । [15]त्वमग्ने सप्रथा असि । जुष्टो होता वरेण्यः । त्वया यज्ञं वितन्वते । [16]अग्नी रक्षांꣳसि सेधति । शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्यः । [17]अग्ने रक्षाणो अꣳहसः ॥६॥ प्रतिष्म देव रीषतः । तपिष्ठैरजरो दह । [18]अग्ने हꣳसि न्यत्रिणम् । दी-

[15]त्वमग्न इति गायत्र्यश्चतस्रः ॥ हे! अग्ने! त्वं सप्रथाः प्रथया सहितः विस्तीर्णोसि । जुष्टः प्रीतः । होता देवानामाह्वाता । वरेण्यः वरणीयः । त्वया यज्ञं वितन्वते विस्तारयन्ति यजमानाः । त्वदृते किञ्चिन्न वर्तते । तस्मादस्मदभिप्रेतं साधयेति ॥

[16]अग्नी रक्षांसि इति ॥ अयं अग्निः रक्षांसि सेधति नाशयति शास्ति वा 'षिधु शास्त्रौ' । शुक्रशोचिः निर्मलदीप्तिः । अमर्त्यः अमरणशीलः । शुचिः नित्यशुद्धः पावकः सर्वस्य शोधयिता । ईड्यः स्तुत्यः ॥

[17]अग्ने रक्षेति ॥ हे! अग्ने! अस्मान् रक्ष अंहसः पापात् । 'द्व्यचोतस्तिङः' इति दीर्घत्वम् । हे! देव! त्वत्प्रसादाद्वयं तस्यांहसः रीषतः, रिषेर्वर्णविकारश्छान्दसः । धात्वन्तरं वा । अस्मान् हिंसितुः तस्य वयमपि प्रतिष्म प्रतिकूला अभिभवितारो भवाम । अल्लोपे लेटि छान्दसं षत्वम् । तदर्थमपि तान् तपिष्ठैः तप्तृतमैः किरणैः दह । अजरः अविनाशस्त्वम् ॥

[18]अग्ने हंसीति ॥ हे! अग्ने! अत्रिणं रक्षः अदननिमित्तो मदः अत्रिः तद्वत् रक्षः अत्रिणम् । पामादिलक्षणो नप्र-

द्युन्मर्त्येष्वा। स्वे क्षये शुचिव्रत। [19]आ वात वाहि भेषजम्। वि वात वाहि यद्रपः। त्वꣳ हि विश्वभेषजः। देवानां दूत ईयसे। [20]द्वाविमौ वातौ वातः॥ आसिन्धोरापरावतः। दक्षं मे अन्य आवातु। प-

---

त्यय:। एतत् निर्हंसि नियमेन नाशय। हन्तेः पञ्चमो लकारः। दीघन् दीप्यमान! शुचिव्रत शुद्धस्य कर्मणो निष्पादक!। स्वे क्षये स्वकीये यज्ञगृहे मर्त्येष्वा सर्वेषु मनुष्येष्वपि॥

[19]आ वातेति॥ हे! वात! वायो! भेषजं यथा भवति तथा आवाहि अस्मान् प्रति सर्वतो वातं कुरु। हे! वात! यद्रपः पापमस्ति तत् विवाहि विश्लिष्य गच्छ। कस्मादेवं त्वमुच्यस इति चेत्—त्वं हि विश्वभेषजः विश्वं कर्म भेषजं यस्य तादृशोसि। एक एव देवानामपि दूत ईयसे। तस्मात्सर्वहितत्वात् उच्यसे॥

[20]द्वाविमाविति॥ इदानीं कार्यभेदान्वितमध्यारोप्याह—द्वौ खल्विमौ वातौ वातः विश्वं व्याप्य वर्तेते। आसिन्धोः आ-समुद्रात् आ च परावतः ततोपि दूरात् परागतं परावत्। 'उपसर्गाच्छन्दसि धात्वर्थे' इति वतिः। एतयोरन्य एकः मम-दक्षं कुशलं आवातु आगच्छतु। अन्य एकः यद्रपः पापं तत् परावातु परागमयतु। 'तिङि चोदात्तवति' इति गतेर-नुदात्तत्वम्॥

राऽन्यो वातु यद्रपंः । [21]यद्दो वात ते गृहे । अमृतस्य निधिर्हितः । ततो नो देहि जीवसे । ततो नो धेहि भेषजम् । ततो नो मह आवह । [22]वात आवातु भेषजम् । शम्भूर्मयोभूर्नो हृदे ॥८॥ प्रण आयूꣳषि तारिषत् । [23]त्वमग्ने अयाऽसि । अया स-

---

[21]यदद इति पङ्क्तिः पञ्चपदा ॥ हे! वात! तव गृहे अमृतस्य निधिः यत् यस्मात् कारणात् अदः असौ निहितः। लिङ्गव्यत्ययः । यद्वा—यददः कारणं तव गृहे अमृतस्य निधिः निहित इति । ततः कारणात् ततो वाति ततो वा निधेरादाय नोऽस्मभ्यं देहि जीवसे अस्मान् जीवयितुम् । किंच तत एव वा अस्माकं भेषजं अनिष्टशमनं धेहि अस्मासु स्थापय । किंच तत एव नोऽस्माकं महः महत्त्वं पूजां आवह आनय ॥

[22]वात आवात्विति गायत्री ॥ अयं वातो नोऽस्माकं भेषजमावातु आगमयतु । यथा भेषजं भवति तथा आगच्छतु । शम्भूः रोगादिशान्तेः भावयिता । मयोभूः सुखानां भावयिता । अस्माकं हृदे हृदयाय हृदयतृप्त्यर्थं वात आवातु । किञ्च अस्माकं आयूंषि आयुर्विशेषान् सर्वानपि प्रतारिषत् प्रवर्तयतु । लेटि ।सिप्। छान्दसं दीर्घत्वम् । लुङि वा सिचि वृद्धिविध्यपवादः । अडागमः ॥

[23]त्वमग्ने अयाऽसीत्यनुष्टुप् ॥ हे! अग्ने! त्वं अया अयमेवासि । इदमः प्रथमैकवचनस्य 'सुपां सुलुक्' इति डादेशः ।

न्मनसा हितः । अया सन् हव्यमूहिषे । अया नो धेहि भेषजम् । [24]इष्टो अग्निराहुतः । स्वाहाकृतः पिपर्तु नः । स्वगा देवेभ्य इदं नमः । [25]कामो भूतस्य भव्यस्य । सम्राडेको विराजति ॥ १ ॥ स इदं प्र-

टिलोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' इति उदात्तनिवृत्तिस्वरेण आकारस्य उदात्तत्वम् । अयमेवासि त्वम् । तव याथात्म्यं न जानीमः यं त्वां वयं प्रपश्यामः अयमेवासि । किं च अया अयमेव सन् मनसा हितः युक्तैर्धृतः । नान्यं जानीम इति । अपि च अयमेव सन् हव्यमूहिषे आस्माकीनं हविर्वह । छान्दसो लिट् । किञ्च अयमेव त्वमस्माकं भेषजमनिष्टशमनं धेहि अस्मासु स्थापय । किमनेन रूपेण कर्तुं न शक्यत इति भावः ॥

[24]इष्टो अग्निरिति गायत्री ॥ इष्टः यागेनाराधितोऽयमग्निः आहुत्या चाराधितः नोऽस्मान् पिपर्तु पालयतु, अभिप्रेतैर्वा पूरयतु इदं नमः आस्माकीनं स्वगाकरोतु यथास्वं प्रापयतु ॥

[25]कामो भूतस्येत्यनुष्टुप् ॥ कामो देवताविशेषः । भूतस्य अतीतस्य भव्यस्य भविष्यतश्च एक एव संराट् उत्पत्तिहेतुः एको विराजति कारणात्मना एकमेव वस्तु दीप्यते । अत इदं विश्वं भूतभव्यात्मकं भूतेन्द्रियशरीरादिभेदभिन्नं प्रतिपन्नथे स एव कामः प्रत्येकं प्रथयति । ऋतूंश्च कालावयवात् स एव वशी स्वतन्त्रः काम एवोत्सृजते उत्पादयति । ईश्वरस्य इच्छाशक्तिः कामः, यथा—'सोऽकामयत' * इति ॥

* आ. १-२-१.

र्ति पप्रथे । क्रतूननुत्सृजते वशी । [26]कामस्तदग्रे सम॑वर्तताधि॑ । मन॑सो रेतः॑ प्रथमं यदासीत् । सतो बन्धुमस॑ति निरविन्दन् । हृदि प्रतीष्या॑ कवयो॑ मनीषा । [27]त्वया॑ मन्यो सरथमारुजन्तः॑ । हर्ष॑-

[26]कामस्तदिति त्रिष्टुभस्तिस्रः ॥ अग्रे मनसः पूर्वम् । प्रवृत्तिनिवृत्तिविशेषहेतुर्मनः । ततः पूर्वं काम इच्छाशक्तिमात्रं समवर्तत । ततः अधि अस्मादधि उपरि मनसोपि रेतः कारणं प्रथमं प्रधानं यदासीत् 'तदसदेव सन्मनोकुरुत स्यामिति'* । सतः प्रपञ्चस्य भूतेन्द्रियात्मनः बन्धुं कारणं मनः असति प्रपञ्चरूपेण असति ब्रह्मणि निरविन्दन् निष्कृष्य अलभन्त । यद्वा— अग्रे सृष्ट्यादौ काम एव प्रथमं तस्मात्समवर्तत । पुनश्च कीदृशमित्याह—मनसो रेतः कार्यं यदासीद्भूतेन्द्रियादिकं तस्य सर्वस्य सतः स्थूलस्य प्रपञ्चस्य बन्धुं असति मूलकारणे निरविन्दन् । यथा 'असतस्सद्ये ततक्षुः' † इत्याहुः । मनः कामः इच्छेति पर्यायाः । कामः प्रथमं संकल्प्य आदौ समवर्तत । ततस्तस्य यद्रेतः कार्यंभूतेन्द्रियादिकं तत्समवर्तत । तत्कथमित्याह—सतः प्रपञ्चस्य कारणं बन्धुं असति निरविन्दन् कवयः । हृदि हृदये प्रतीष्य प्रतिलभ्य । संहितायां दीर्घत्वं छान्दसम् । यद्वा—प्रतीष्या बुद्ध्या संकल्पात्मिकया मनीषा मनीषया ज्ञानेन इन्द्रियात्मिकया बुद्ध्या निरविन्दन् ॥

[27]त्वया मन्यो इति ॥ मन्युः देवताविशेषः । हे! मन्यो!

* ब्रा. ९-२-९. † आ. १-११.

माणासो धृषता मरुत्वः । तिग्मेषव आयुधा सꣳशिशानाः । उपप्रयन्ति नरो अग्निरूपाः ॥ १० ॥ [28]मन्युर्भगो मन्युरेवास देवः । मन्युर् होता वरुणो विश्ववेदाः । मन्युं विश ईडते देवयन्तीः । पा-

---

त्वया भीहेतुना सरथं महता रथेन सहितं आरुजन्तः भजन्तः । हर्षमाणासः हृष्यन्तः । व्यत्ययेनात्मनेपदम् । 'आज्जसेरसुन्' । धृषता धर्षणशक्त्या इत्थंभूताः । हे! मरुत्वः ! मरुत्वन् ! तिग्मेषवः निशितायुधाः आयुधा आयुधानि संशिशानाः अग्निरूपाः तदावेशादग्निवज्ज्वलन्तः ईदृशा नरः मनुष्याः उपप्रयन्ति निगृह्य पार्श्वमुपगच्छन्ति । यद्वा—मन्युः दीप्तिः तद्वानिन्द्रो मन्युः । हे ! मन्यो ! इन्द्र ! मरुत्वः मरुद्भिः तद्वान् सरथं समानं रथं आरुजन्तः आरूढवन्तः हर्षमाणासः हृष्टाः तिग्मेषवः आयुधानि संशिशानाः अग्निरूपाः ज्वलन्तः नरो नेतारः मरुतः त्वां उपगच्छन्ति । 'नयतेर्डिच्च' इति ऋप्रत्ययः, टिलोपश्च ॥

[28]मन्युर्भग इति ॥ मन्युरेव भगः धनहेतुः । मन्युरेव देवः दानादिगुणयुक्तः आस भवति । भूभावाभावश्छान्दसः । 'उदात्तानुदात्तस्य स्वरितः' इति संहितायां सकारः स्वर्यते । मन्युरेव होता वरुणश्च । विश्ववेदाः विश्वस्य वेदिता । मन्युमेव ईडते स्तुवन्ति । विशो मनुष्याः । देवयन्तीः देवयन्त्यः । देवान् कामयमानाः । मन्यौ स्तुते सर्वदेवाः स्तुता भवन्तीति हे! मन्यो! अस्मान् पाहि तपसा श्रमेण । 'अग्नये व्रतपतये पुरोडाशम-

हि नो मन्यो तपसा श्रमेण । [29]त्वमग्ने व्रतभृच्छु-
चिः । देवाꣳ आसादया इह । अग्ने हव्याय वोढवे।
[30]व्रता नु बिभ्रद्व्रतपा अदाभ्यः । यजा नो देवाꣳ
अजरस्सुवीरः । दधद्रत्नानि सुविदानो अग्ने । गो-
पाय नो जीवसे जातवेदः ॥ ११ ॥

जिघाꣳसत्युमित्राअघन्वानीडते सर्वा अꣳहसो वातो हृदे राजत्यग्निरूपास्सुविदानो अग्न एकं च ॥

ष्टाकपालं निर्वपेद्य आहिताग्निरश्रु कुर्यात्' * इति तस्य याज्यानुवाक्ये ॥

[29]त्वमग्न इति गायत्रीत्रिष्टुभौ ॥ हे! अग्ने! व्रतभृत् व्रतानां कर्मणां भर्ता । शुचिः शुद्धः । देवान् दानादिगुणयुक्तान् इह अस्मिन् कर्मणि आसादय आवह । दीर्घत्वप्रकृतिभावौ सांहितिकौ छान्दसौ । हव्याय वोढवे हविर्वोढुं तेभ्यः ॥

[30]व्रता न्विति ॥ नु क्षिप्रनाम । व्रता व्रतानि कर्माणि क्षिप्राणि बिभ्रत् । व्रतपाः व्रतानां च पालयिता । अदाभ्यः केनचिदप्यहिंस्यः । स त्वमस्मदर्थं देवान् यज । अजरः अविनाशः । सुवीरः शोभनवीरपुरुषः । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । रत्नानि रमणीयानि अस्मासु दधत् सुविदानः सुष्ठु हितमस्माकं जानन् हे! अग्ने! जातवेदः! जातप्रज्ञ! अस्मान् गोपाय रक्ष । जीवसे जीवनार्थम् । 'तुमर्थे सेसेन्' इत्यसेप्रत्ययः॥

इत्युपहोमभाष्ये प्रथमोऽनुवाकः.

---

* तै. सं. २-२-२.

[1]चक्षुषो हेते मनसो हेते । वाचो हेते ब्रह्मणो हेते । यो माऽघायुरभिदासति । तमग्ने मेन्याऽमेनिं कृणु । [2]यो मा चक्षुषा यो मनसा । यो वाचा ब्रह्मणाऽघायुरभिदासति । तयाऽग्ने त्वं मेन्या। अमुममेनिं कृणु । [3]यत्किंचासौ मनसा यच्च वाचा । यज्ञैर्जुहोति यजुषा हविर्भिः ॥१२॥ तन्मृत्यु-

[1]अभिचारेष्ट्यां 'अग्नये यविष्ठाय'* इत्यादौ उपहोमाः—चक्षुषो हेत इति बृहतीमकारः ॥ चक्षुरादीनां ज्ञानेन्द्रियाणां शत्रुसंबन्धिनां हे! हेते! विनाशहेतो! मनसश्चान्तःकरणस्य हेते! वागादीनां च कर्मेन्द्रियाणां हेते! ब्रह्मणो मन्त्रस्य कर्मणो वा हेते! यो मामघायुः अघं पापं वधादिकं ममेच्छन् 'छन्दसि परेच्छायामपि' इति क्यच् । 'अश्वाघस्यात्' इत्यात्वम् । अभिदासति क्षपयति 'दसु उपक्षये' वर्णविकारश्छान्दसः । हे! अग्ने! तदीयचक्षुरादिविनाशक! तं मेन्या वज्रेणायुधेन अमेनिं अशरीरं कृणु कुरु । अमनस्कमित्येके । मारयेति यावत् ॥

[2]यो मेति बृहतीविशेषः ॥ यो मां चक्षुरादिना अघायुः चक्षुरादिविनाशरूपं ममेच्छन् मामभिदासति अमुं अमुकशर्माणं मेन्या तया अमेनिं कृणु हे! अग्ने! ॥

[3]यत्किंचेति त्रिष्टुप् ॥ असौ अमुकनामा मम मरणार्थं य-

* तै. सं. २-२-२.

निर्ऋत्या संविदानः। पुराऽऽदिष्टादाहुतीरस्य हन्तु।
[3]यातुधाना निर्ऋतिरादु रक्षः। ते अस्य घ्नन्त्वनृतेन सत्यम्। इन्द्रेषिता आज्यमस्य मथ्नन्तु। मा तत्समृद्धि यदसौ करोति। [5]हन्मि तेऽहं कृतꣳ हविः। यो मे घोरमचीकृतः। अपाञ्चौ त उभौ बा-

---

र्त्किचिन्मनसा वाचा च यज्ञेर्जुहोति हविर्भिस्साधनैः, तत् तदा अस्य आहुतीर्हन्तु मृत्युः। निर्ऋत्या कृच्छ्रवत्या संविदानः ऐकमत्यं गतः आदिष्टात्पुरा प्रागेव देवतादेशात् प्रागेव हन्तु उत्तरकाले हन्तुमशक्यत्वात् ॥

[3]यातुधाना इति त्रिष्टुप् ॥ दक्षिणादिग्वासिनी निर्ऋतिरुक्ता। रक्षः प्रसिद्धम्। ते यज्ञविद्वेषिणः सर्वे अस्य मदीयस्य शत्रोः सत्यं यागफलं आदु अनन्तरमेव घ्नन्तु अनृतेन विपरीतसाधनेन। पुंसश्शेषश्छान्दसः। किंच ते सर्वेऽपि इन्द्रेषिता इन्द्रेण प्रेषिताः आज्यं आज्यादिकं हविः मथ्नन्तु। मा तत्समृद्धि तत्कर्म संगतर्द्धिकं समृद्धं मा भूत्। यदसौ यज्ञशर्मा करोति साधयति। यद्वा—तत्कर्म मा समृद्धि यत्करोति कर्म अमुकः। च्लेः वर्णविकारः ॥

[5]हन्मि त इत्याद्या अनुष्टुभः ॥ शत्रो! त्वदीयं कृतं हविः अहं हन्मि नाशयामि यस्त्वं मे घोरं क्रूरं आयुरादिकं अचीकृतः कृन्तसि। 'कृती छेदने'। किंच तव ते उभावपि बाहू अपाञ्चौ अपगतौ आस्यं च अपनह्यामि ॥

हू। अपनह्याम्यास्यम् ॥१३॥ [6]अपनह्यामि ते बाहू। अपनह्याम्यास्यम्। अग्नेर्देवस्य ब्रह्मणा। सर्वं तेऽवधिषं कृतम्। [7]पुराऽमुष्य वषट्कारात्। यज्ञं देवेषु नस्कृधि। स्विष्टमस्माकं भूयात्। माऽस्मान्प्रापन्नरातयः। [8]अन्ति दूरे सतो अग्ने। भ्रातृव्यस्याभिदासतः ॥१४॥ वषट्कारेण वज्रेण। कृत्याः हन्मि कृतामहम्। [9]यो मा नक्तं दिवा सायम्। प्रातश्चा-

---

[6]अपनह्यामीत्याद्यर्धर्चो गतः। अग्नेर्देवस्य दीप्तिमतः ब्रह्मणा तेजसा कर्मणा वा ते त्वदीयं कृतं सर्वमपि कर्म अवधिषं हतवानेवास्मि ॥

[7]पुराऽमुष्येति ॥ अमुष्य यज्ञशर्मणो वषट्कारात्पुरैव अस्माकं यज्ञं देवेषु कृधि कुरु स्थापय। अस्य यज्ञः छिनत्तु। अस्माकं स्विष्टं भूयात्। अस्मान् मा प्रापन् अप्राप्यैव विनश्यन्तु ॥

[8]अन्ति दूर इत्यादि ॥ अन्तिके दूरे वा सतः भ्रातृव्यस्य शत्रोः 'कादिलोपो बहुळम्' इत्यन्तिकस्य लोपः। अभिदासतः मामुपक्षयितुं प्रवृत्तस्य संबन्धिनीं तेन कृतां कृत्यां वज्रस्थानीयेन वषट्कारेण अहं हन्मि त्वत्प्रसादात् ॥

[9]यो मा नक्तमिति ॥ नक्तं दिवा च अह्नोपि सायं प्रातश्च अविरतं यो मां निपीयति नियमेन पिबति शोषयति अद्य

हो निपीयति । अद्या तमिन्द्र वज्रेण । भ्रातृव्यं पादयामसि । [10]इन्द्रस्य गृहोसि तं त्वा । प्रपद्ये सगुस्साश्वः । सह यन्मे अस्ति तेन । [11]ईडे अग्निं विपश्चितम् ॥१५॥ गिरा यज्ञस्य साधनम् । श्रुष्टीवानं धितावानम् । [12]अग्ने शकेम ते वयम् । यमं देवस्य

---

अस्मिन् कर्मणि अप्रतिहतशक्त्या तं भ्रातृव्यं पादयामसि गमयामः मनुष्यलोकात् हे ! इन्द्र ! त्वत्प्रसादात् ॥

[10]आदित्यमुपातिष्ठते—इन्द्रस्येत्यादि गायत्री ॥ इन्द्रस्य ईश्वरस्य गृहोसि उपासनस्थानमसि । तं त्वा प्रपद्येऽहमाश्रयामि । सगुः गोसहितः साश्वः अश्वसहितः । यच्चान्यत् मे ममास्ति पुरुषादि तेन च सह त्वां प्रपद्ये ॥

[11]ईडे अग्निमिति गायत्री ॥ ईडे स्तौमि अग्निं विपश्चितं मेधाविनं यज्ञस्य साधनं श्रुष्टीवानं सुखवन्तं अन्नवन्तं वा । धितावानं धितं निहितं धनं तेन तद्वन्तम् । हित्वाभावश्छान्दसः। यद्वा—'धि धारणे' 'छन्दसि वनिपौ' इति वनिप् । ईदृशमग्निं गिरा स्तौमि ॥

[12]अग्ने शकेमेति गायत्री ॥ हे ! अग्ने ! देवस्य देवनशीलस्य वाजिनः अन्नवतः तव यमं यमनं अन्त्यलोपश्छान्दसः । वशीकारं शकेम कर्तुं च समर्थास्स्याम । ततश्चातितरेम द्वेषांसि द्वेष्याणि पापानि ॥

वाजिनः। अति द्वेषाꣳसि तरेम। [13]अवतं मा समनसौ समोकसौ। सचेतसौ सरेतसौ। उभौ मामवतं जातवेदसौ। शिवौ भवतमद्य नः। [14]स्वयं कृण्वानस्सुगमप्रयावम् ॥ १६ ॥ तिग्मशृङ्गो वृषभश्शोशुचानः। प्रत्नꣳ सधस्थमनुपश्यमानः। आ तन्तुमग्निर्दिव्यं ततान। [15]त्वं नस्तन्तुरुत सेतुर-

[13]अवतमिति पङ्क्तिः ॥ हे! जातवेदसौ मामवतं रक्षतम्। समनसौ समानमनस्कौ ऐकमत्यं गतौ समोकसौ संगतस्थानौ सचेतसौ समानचैतन्यौ सरेतसौ समानपुंस्त्वौ। उभौ युवां गार्हपत्याहवनीयौ मां अवतम्। शिवौ चास्माकं भवतम्। अद्य अस्मिन् कर्मणि ॥

[14]'यस्याग्निहोत्रं विच्छिद्येत सोऽग्नये तन्तुमते' इत्यस्य याज्यानुवाक्ये—स्वयं कृण्वान इति त्रिष्टुभौ ॥ स्वयं कृण्वानः स्वयमेव कुर्वन् सुगं सुष्ठु गन्तव्यं, अप्रयावं प्रमादरहितं तन्तुं अपत्यं दिव्यं देवयोग्यं आततान आतनोत्वग्निः। कीदृशः? तिग्मशृङ्गः तीक्ष्णज्वालः वृषभः वर्षिता कामानाम्। शोशुचानः भृशं दीप्यमानः प्रत्नं पुराणं सधस्थं सहस्थानं पितापुत्रयोः सहावस्थानफलं अनुपश्यमानः अनुरूपत्वं पश्यन् तन्तुं आतनोतु॥

[15]त्वं न इति ॥ हे अग्ने! त्वमेव अस्माकं तन्तुः संततिः, तत्कार्यकरणात्। अपिच त्वमेव अस्माकं सेतुः दुःखानां समाप्तिस्थानम्। दिवोपि त्वत्प्रसादप्राप्यत्वात् त्वमेव देवयानः देव-

ग्ने । त्वं पन्था भवसि देवयानः । त्वयाऽग्ने पृष्ठं वय-
मारुहेम । अथा देवैस्सधमादं मदेम । [16]उदुत्तमं
मुमुग्धि नः । वि पाशं मध्यमं चृत । अवाधमानि
जीवसे ॥ १७॥ [17]वयꣳ सोम व्रते तव । मनस्तनूषु
बिभ्रतः । प्रजावन्तो अशीमहि । [18]इन्द्राणी देवी
सुभगा सुपत्नी । उदꣳशेन पतिविद्ये जिगाय । त्रिꣳ-

त्वत्प्राप्तिमार्गोसि, अस्माकं त्वत्प्राप्तिहेतुत्वात् । त्वयैव हेतुना वयं पृष्ठं स्वर्ग आरुहेम, कर्मनिर्वृत्तिहेतुत्वात् । अथ एवं त्वया संपादिते वयं देवैः सधमादं सहमदं मदेम ॥

[16]उदुत्तममिति गायत्री ॥ उदुत्तमं पाशं मुमुग्धि ऊर्ध्वं मोचय । मध्यमं पाशं विचृत विश्लिष्य छिन्धि । अधमानि अधस्स्थानानि अवचृत अवमुमुग्धि अवागाकृष्य नाशय । जीवसे जीवनाय ॥

[17]हे! सोम! तव व्रते कर्मणि वर्तमाना वयं अत्रैव तनूषु शरीरेषु मनो बिभ्रतः विस्रब्धां स्मृतिं धारयन्तः अशीमहि व्याप्नुयाम, तत्फलत्वात् । अश्नोतेश्छान्दसश्शपो लुक् ॥

[18]इन्द्राणीति त्रिष्टुभौ ॥ 'इन्द्राण्यै चरुम्'* इत्यत्र विकल्पः उपहोमो वा । इन्द्राणी इन्द्रस्य पत्नी देवी क्रीडनादिशीला सुभगा सुशीला सुश्रीः सुपत्नी शोभनपतिका 'विभाषा सुपूर्वस्य' इति ङीब्नकारौ । उभयत्राद्युदात्तत्वम् । अस्याः को विशेष इत्याह—एषा हि अंशेन एकदेशेन उपस्थेन सौभाग्यैक-

* सं. २-२-८.

शार्दस्या जघनं योजनानि। उपस्थ इन्द्रं स्थविरं बिभर्ति। [19]सेना ह नाम पृथिवी धनञ्जया। विश्वव्यचा अदितिस्सूर्यत्वक्। इन्द्राणी देवी प्रासहाऽऽददाना॥ सा नो देवी सुहवा शर्म यच्छतु। [20]आ त्वाऽहार्ष-

देशेन वा पतिविषये पतिलाभे उज्जिगाय। छान्दसः क्यप्। उच्छ्रिता बभूव। तत्कथमित्याह—त्रिंशद्योजनानि अस्या जघनं योनिपरीणाहः रतिकाले। अतः स्थविरं सर्वैर्गुणैः परिवृढं इन्द्रं रतिकाले उपस्थे बिभर्ति उत्सङ्गे गृह्णाति। ततो ज्ञायते—अंशमात्रेणैव पतिविषये उज्जयं लभत इति॥

[19] सेना हेति॥ सेना बलवती सेश्वरा वा। ह नाम प्रसिद्धौ। पृथिवी विस्तीर्णा। धनंजया धनानां नेत्री 'संज्ञायां भृतृवृजि' इति खश्। विश्वव्यचा विश्वं व्याप्य वर्तमाना 'गतिकारकयोरपि' इत्यसुन्। अदितिः अखण्डनीया सूर्यत्वचा वर्तमाना दीप्तिमतीत्यर्थः। ईदृशी इन्द्राणी देवी प्रासहा प्रसहनेन सहेः क्विपि 'नहि वृति' इति दीर्घत्वम्। आददाना शत्रुधनानि अस्मदर्थमाहरन्ती सा देवी अस्मभ्यं सुखं यच्छतु ददातु। सुहवा सुखेनाह्वातव्या 'बहुलं छन्दसि' इति संप्रसारणम्। शोभनाह्वाना वा। 'ह्वयतेश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्। आह्वानप्रयोजनस्य सद्य एव करणं शोभनत्वम्॥

[20]अतः परं राजाभिषेके विनियोज्याः पञ्चाप्यनुष्टुभः—आ त्वाऽहार्षमिति॥ व्याख्याता 'विष्णोः क्रमोसि'* इत्यत्र। पुरोहितो

* सं. ४-२-१.

मन्तरभूः । ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा स-
र्वा वाञ्छन्तु । मा त्वद्राष्ट्रमधिभ्रशत् । [21]ध्रुवा द्यौ-
र्ध्रुवा पृथिवी । ध्रुवं विश्वमिदं जगत् । ध्रुवा ह प-
र्वता इमे । ध्रुवो राजा विशामयम् । [22]इहैवैधि
मा व्यथिष्ठाः ॥११॥ पर्वत इवाविचाचलिः । इन्द्र

राजानं मत्याह—त्वां अहं आहार्षं स्थानाच्च्युतमाहरामि । आहृतश्च त्वं अन्तरभूः राष्ट्रस्य मध्ये भव । अविचाचलिः विचालयितुमशक्यः ध्रुवश्च तिष्ठ । विशो राष्ट्रवर्तिन्यः प्रजाः त्वामेव राजानं वाञ्छन्तु राष्ट्रं च त्वत्तो माऽधिभ्रशत् । अधिरत्र पञ्चम्यर्थानुवादी । भ्रष्टं मा भूत् ॥

[21] त्रिषु पादेषु दृष्टान्ताः, चतुर्थो दार्ष्टान्तिकः—ध्रुवेत्यादि ॥ द्यौः पृथिवी च ध्रुवा । इदं च विश्वं ध्रुवं जगत् आप्रवाहं नित्यं ध्रुवं, बहुकालावस्थायित्वात् । इमे च पर्वताः ध्रुवाः । अयं च विशां मनुष्याणां राजा ध्रुवः । तुल्ययोगोपमैषां, द्युप्रभृतिविषयो राजा भवत्विति यावत् ॥

[22] इहैवैधीति ॥ इहैव राष्ट्रे एधि राजा भव । मा व्यथिष्ठाः पर्वत इव अविचाचलिः अविचलो भव । 'उपसर्गाच्छन्दसि' इति इप्रत्ययः । इन्द्र इव ध्रुवो भव । इह राजभावे तिष्ठ । राष्ट्रं च धारय । अवधारणे उकारः । राष्ट्रं धारयैव माऽमुचः ॥

इवेह ध्रुवस्तिष्ठ। इह राष्ट्रमु धारय। [23]अभितिष्ठ पृतन्यतः। अधरे सन्तु शत्रवः। इन्द्र इव वृत्रहा तिष्ठ। अपः क्षेत्राणि संजयन्। [24]इन्द्र एणमदीधरत्। ध्रुवं ध्रुवेण हविषा। तस्मै देवा अधिब्रवन्। अयं च ब्रह्मणस्पतिः ॥ २० ॥

हविर्भिरास्यमभि दासतो विपश्चितमप्रयावं जीवसे ददाना व्यथिष्ठा ब्रवन्नेकं च ॥ २ ॥

---

[23]अभितिष्ठेति ॥ पृतन्यतः संग्रामं कर्तुमिच्छतः 'कव्यध्वरपृतनस्यर्चि लोपः' 'शतुरनुमः' इति विभक्तेरुदात्तत्वम्। शत्रवोऽधरे त्वत्तो निकृष्टैश्वर्यबलास्सन्तु। वृत्रहा वृत्रस्य हन्ता इन्द्र इव पृतन्यतोऽभितिष्ठ। यथा शत्रूणां अपः कर्माणि क्षेत्राणि संजयन् वृत्रहेव शत्रूनाक्राम ॥

[24]इन्द्र एणमिति ॥ इन्द्र एनं राजानं आदीधरत् धारयतु। छान्दसं सांहितिकं णत्वम्। ध्रुवं अविचलितैश्वर्यं कृत्वा ध्रुवेण नित्येन हविषा। किं च—तस्मै अस्मै देवाः अधिब्रवन् अधिब्रुवन्तु उपरिवदन्तु पक्षपातेन वदन्तु। अयं च ब्रह्मणः कर्मणः पतिरिन्द्रश्च अस्मानधिब्रवीतु ॥

इत्युपहोमभाष्ये द्वितीयोऽनुवाकः.

[1]जुष्टी॑ न॒रो ब्रह्म॑णा वः पितृ॒णाम् । अक्ष॑मव्य॒यं न किला॑ रिषाथ । यच्छक्व॑रीषु बृह॒ता रवे॑ण । इन्द्रे॒ शुष्म॒मद॑धाथा वसिष्ठाः । [2]पा॒व॒का न॒स्सर॑स्वती । वाजे॑भिर्वा॒जिनी॑वती । य॒ज्ञं व॑ष्टु धि॒या व॒-

[1]तृतीयानुवाके प्रथमामृचमाह—हे वसिष्ठा ! वसिष्ठस्य मम पुत्राः! यत् यस्मात्कारणात् शक्करीषु "प्रोष्वस्मै पुरो रथम्"* इत्यादिकासु शक्करीछन्दोयुक्तास्वृक्षु बृहता रवेण महता सामध्वनिना इन्द्रे शुष्मं बलमदधाथाः संपादितवन्तः । तस्मात्कारणाद्धे नरः! मत्पुत्राः! पुरुषाः! वो युष्मत्संबन्धिनां पितॄणां ब्रह्मणा जुष्टी भवदीयेन परिवृढेन स्तोत्रेण प्रीतानामक्षं क्रुद्धं चक्षुरिन्द्रियमव्ययं वसिष्ठोऽहमाच्छादितवानस्मि । इतःपरं यूयं न रिषाथ किल सर्वथा हिंसिता न भवथ । अयमर्थः—सौदासनामकैरसुरैर्यदा वसिष्ठो हतपुत्रोऽभूत्तदानीं पुत्राभावादेतदीयाः पितरो रक्तवर्णेन चक्षुषा युक्ताः क्रुद्धा दृश्यन्ते । तदानीं वसिष्ठः पुत्रानुत्पादितवान् । ते च पुत्रा विद्याधिकाः सन्तः सामगानेनेन्द्रं तोषितवन्तः । तदीयपितॄणां क्रुद्धमक्षं क्रोधपरित्यागेन शान्तं संपन्नम् । सोऽयं वृत्तान्तो वसिष्ठेन स्वपुत्रान्प्रत्यभिहित इति । अयं मन्त्रो रक्षार्थे द्रष्टव्यः ॥

[2]अथ द्वितीयामाह—इयं सरस्वती नोऽस्मदीयं यज्ञं धिया स्वबुद्ध्या वष्टु कामयताम् । कीदृशी ? पावका शोधिका । वाजेभिर्नानाविधैरन्नैर्युक्तत्वेन वाजिनीवती बहन्ना । वसुः सर्वेषां निवा-

* तै. सं. १-७ १३,

सुः । [3]सरस्वत्यभि नो नेषि वस्यः । मा पस्फरीः पयसा मा न आ धंक् । जुषस्व नस्सख्या वेश्या च ॥२१॥ मा त्वत्क्षेत्राण्यरणानि गन्म । [4]वृञ्जे हविर्नमसा बर्हिरग्नौ । अयामि स्रुग्घृतवती सुवृक्तिः ।

सयित्री । अयं मन्त्रोऽङ्गहीनपशूपाकरणप्रायश्चित्तत्वेन सूत्रे विनियुक्तः—"सारस्वतीं बार्हस्पत्यामिति च हुत्वा प्रयोजयेत्" इति ॥

[3]अथ तृतीयामाह—हे सरस्वति! नोऽस्मान् वस्योऽभि श्रेयः प्रति नेषि नय । मा पस्फरीर्मा हिंसीः । पयसा नदीरूपायास्तव जलेन नोऽस्मान् मा आ धक्सर्वतो मा धाक्षीः मा विनाशय । सख्या सखित्वेन वेश्या च गृहावस्थानेन च नोऽस्मान्प्रति जुषस्व । त्वत्तव प्रसादादरणानि रणरहितानि क्लेशकारणानि क्षेत्राणि मृत्युस्थानानि मा गन्म मा प्राप्नवाम । अयं च पादोऽन्यत्र ब्राह्मणेन व्याख्यातः—"मा त्वत्क्षेत्राण्यरणानि गन्मेत्याह मृत्योर्वै क्षेत्राण्यरणानि तेनैव मृत्योः क्षेत्राणि न गच्छति"* इति । तस्मिन्नेव ब्राह्मणे मन्त्रोऽप्ययं विनियुक्तः—"सरस्वत्यभि नो नेषि वस्य इति पुरोरुचं कुर्यात्"* इति । तत्र 'उक्थ्याग्रान्गृह्णाति'* इत्युपक्रान्तत्वात्तदीयेयं पुरोरुक् । तथा सूक्तेऽपि—"सारस्वतीं मेषीमालभेत"† इत्यस्य पशोर्हविषः पुरोनुवाक्यारूपेण प्रतीकमाम्नातम्—"सरस्वत्यभि नो नेषि" इति ॥

[4]अथ चतुर्थीमाह—अग्नौ हविः प्रस्तररूपेण होतव्यं बर्हिर्यदस्ति तदेतन्नमसा नमनेन विनयेन सह वृञ्जे वर्जयामि लुना-

* सं. ७-२-७. † सं. २-१-२.

**अभ्यक्षि सद्म सदने पृथिव्याः। अश्रायि यज्ञस्सूर्ये न चक्षुः। [5]इहार्वाञ्चमतिह्वये। इन्द्रं जैत्राय जेतवे। अस्माकमस्तु केवलः। [6]अर्वाञ्चमिन्द्रममुतो हवामहे। यो गोजिद्धनजिदश्वजिद्यः ॥२२॥**

मीत्यर्थः। 'आच्छेत्ता ते मा रिषम्'* इत्याद्युक्तिर्विनयः। घृतवती घृतसंपूर्णा सुवृक्तिः सुप्रदाना स्रुग्जुहूरयामि होमार्थमस्माभिरग्राहि। पृथिव्याः संबन्धिनि सदने देवयजने सद्म प्राग्वंशादिरूपं अभ्यक्षि अस्माभिरप्रापि। यज्ञोऽयमस्माभिरश्रायि। सूर्ये न सूर्येऽपि चक्षुरस्मदीयमश्रायि सूर्यावलोकनं कृतमित्यर्थः। सोऽयं मन्त्रः क्वचिद्याजमानजपे विनियोक्तव्यः॥

[5]अथ पञ्चमीमाह—इह कर्मणीन्द्रमर्वाञ्चमस्मदभिमुखमातिह्वये अन्यान्यजमानानतिलङ्घ्य प्रथममेवाह्वयामि। किमर्थं? जैत्राय जेतवे जेतव्यस्य जयार्थम्। स इन्द्रोऽस्माकं केवलोऽस्तु अस्मास्वेव पक्षपातवान्भवतु॥

[6]अथ षष्ठीमाह—अर्वाञ्चमस्मदभिमुखमिन्द्रममुतः स्वर्गादाह्वयामः। य इन्द्रो गोजित् शत्रुसंबन्धिनीर्गा जयेन संपादयति। यश्च तथैव धनजिदश्वजिच्च, तमिन्द्रं हवामहे इति पूर्वं त्रैवान्वयः। हे हरिवः! हरिनामकाभ्यामश्वाभ्यां युक्तेन्द्र! विह्वे विविधाह्वाने सत्यस्मदीयमिमं यज्ञं जुषस्व सेवस्व। अस्यानेन यज्ञेन त्वां मेदिनं स्निग्धशरीरं कुर्मः। एते ऋचौ कस्मिंश्चिज्जयहेतावैन्द्रे हविषि याज्यानुवाक्ये द्रष्टव्ये॥

* तै. सं. १-१-२.

इमं नो यज्ञं विहवे जुषस्व । अस्य कुर्मो हरिवो मेदिनं त्वा । [7]असंमृष्टो जायसे मातृवोश्शुचिः । मन्द्रः कविरुदतिष्ठो विवस्वतः । घृतेन त्वाऽवर्धयन्नग्न आहुत । धूमस्ते केतुरभवद्दिवि श्रितः । [8]अग्निरग्रे प्रथमो देवतानाम् । संयातानामुत्तमो विष्णुरासीत् । यजमानाय परिगृह्य देवान् । दी-

---

[7] अथ सप्तमीमाह—हे अग्ने! त्वमकृतसंमार्जन एव सन् मातृवोर्मात्रोररण्योः शुचिरेव जायसे । स्रुगादयो हि संमार्जनतः शुध्यन्ति । त्वं पुनरसंमृष्ट एव शुचिर्भवासि । मन्द्रो हर्षयुक्तः कविर्विद्वांस्त्वं विवस्वतः परिचरतो यजमानान्प्रत्युदतिष्ठः उत्थितोऽभूः । आहुतिभिराहुत! हे अग्ने! यजमानास्त्वां घृतेनावर्धयन् । ते तव धूमो दिवि श्रित आकाशे व्याप्तस्सन् केतुरभवत् अग्निमानयं प्रदेश इति ज्ञानस्य हेतुरभवत् । अयं च मन्त्रो मथनजन्याग्न्यभिमन्त्रणे कचिद्विनियोक्तव्यः ॥

[8] अथाष्टमीमाह—यजमानं प्रति संयातानां पौर्वापर्येणागच्छन्तीनां देवतानामग्निः प्रथमोऽग्रे पुरतो मार्गप्रदर्शको गच्छति । विष्णुरुत्तमः पश्चादागच्छति । एतदुक्तं भवति—"अनपक्रमणार्थं पङ्क्तिरूपेणागच्छतां देवानामग्निः प्रथमो विष्णुरुत्तमश्चरमः" इति । तावुभौ सर्वान्देवान् मुखतः पृष्ठतश्च यजमानार्थं परिगृह्य दीक्षादेवतया सह तावग्नाविष्णू युवां नोऽस्मदीयमिदं हविरुद्दिश्यागच्छतम् ॥

क्षयेद॒श्‍ ह॒विरागच्छतं नः ॥२३॥ [9]अ॒ग्निश्च॑ विष्णो॒ तप॑ उत्त॒मं म॒हः । दी॒क्षा॒पा॒लेभ्यो॒ वन॑त॒ꣳ हि श॒क्रा । विश्वै॑र्दे॒वैर्य॒ज्ञियै॑स्संविदा॒नौ । दी॒क्षाम॒स्मै य॒जमा॑नाय धत्तम् । [10]प्र तद्विष्णु॑स्स्तवते वी॒र्या॑य । मृ॒गो न भी॒मः कु॑च॒रो गि॑रि॒ष्ठाः । यस्यो॒रुषु॑ त्रि॒षु वि॒क्रम॑णेषु । अधि॑क्षि॒यन्ति॒ भुव॑नानि॒ विश्वा॑ । [11]नू

[9] अथ नवमीमाह—हे विष्णो! त्वं चाग्निश्चोभौ युवां दीक्षाख्यव्रतपालकेभ्यो देवेभ्यस्सकाशात् यजमानार्थं महः उत्तमं तपो वनतं याचतम् । हे शक्रा! इन्द्रसमानो युवां हि प्रसिद्धौ यज्ञयोग्यैः सर्वैर्देवैस्सह संविदानावैकमत्यं गतौ अस्मै यजमानाय दीक्षाख्यं संस्कारं संपादयतम् । एतच्चोभयं दीक्षणीयायामिष्टौ याज्यानुवाक्यारूपेण विनियोज्यम् ॥

[10] अथ दशमीमाह—तत्तस्मिन्कर्मणि यजमानानां वीर्यार्थं विष्णुः प्रस्तवते प्रकर्षेण स्तूयते । कुचरो भूमौ वर्तमानो भीमो भयंकरो मृगो न सिंहो यथोर्ध्वमुत्प्लुत्य गिरिष्ठाः पर्वतस्थो भवति, तथा यस्य विष्णोः पूर्वं वामनस्य पश्चात्त्रिविक्रमत्वं गच्छत उरुषु विस्तीर्णेषु त्रिषु विक्रमणेषु विश्वा भुवनानि सर्वे लोका अधिक्षियन्ति आधिक्येन निवसन्ति । स विष्णुः स्तूयत इति पूर्वत्रान्वयः ॥

[11] अथैकादशीमाह—यो यजमानः सनिष्यन् हविर्दास्यन्नुरुगायाय महाकीर्तये विष्णवे दाशद्ददाति । यश्च सम्राचा सत्य-

मर्तो दयते सनिष्यन् यः। त्रिष्णव उरुगायाय दाशत् ॥२४॥ प्र यस्सत्राचा मनसा यजाते। एतावन्तं नर्यमाविवासात्। [12]विचक्रमे पृथिवीमेष एताम्। क्षेत्राय विष्णुर्मनुषे दशस्यन्। ध्रुवासो अस्य कीरयो जनासः। उरुक्षितिꣳ सुजनिमा चकार। [13]त्रिर्देवः पृथिवीमेष एताम्। विचक्रमे श-

गामिना मनसा प्रयजाते प्रकर्षेण यजते। एतावन्तं पूर्वोक्तविक्रमत्रयसामर्थ्योपेतं नर्यं नरेभ्यो हितं विष्णुमाविवासात् स्तुत्यादिना सर्वतः परिचरति स मर्तो मनुष्यो नु क्षिप्रं दयते स्वात्मानं जगच्च रक्षति ॥

[12] अथ द्वादशीमाह—एष विष्णुः पृथिवीमेतां पृथिव्युपलक्षितमिदं लोकत्रयं विचक्रमे विशेषेण पादैराक्रान्तवान्। किं कुर्वन्, मनुषे मनुष्याणां क्षेत्राय निवासार्थं दशस्यन् प्रदातुमिच्छन्। अस्य विष्णोः कीरयो जनासः कीर्तिपरा जनाः ध्रुवासः स्थिरा भवन्ति। स विष्णुः पुनः सुजनिमा शोभनेन वामनरूपेण जन्मना युक्त उरुक्षितिं प्राणिनां निवासाय विस्तीर्णं स्थानं चकार ॥

[13] अथ त्रयोदशीमाह—एष विष्णुर्देवः शतर्चसं शतविधगतियुक्तामेतां पृथिवीं पृथिव्युपलक्षितलोकत्रयं महित्वा स्वमहिम्ना त्रिर्विचक्रमे त्रिवारं पादेनाक्रान्तवान्। तवसस्तवीयान् महतो महीयान् विष्णुः प्रास्तु प्रकृष्टो भवतु। स्थविरस्यात्यन्तं प्रवृद्धस्यास्य

तचैसं महित्वा । प्र विष्णुरस्तु तवसस्तवीयान् । त्वेषꣳ ह्यस्य स्थविरस्य नाम ॥२५॥ [14]होतारं चित्ररथमध्वरस्य । यज्ञस्य यज्ञस्य केतुꣳ रुशन्तम् । प्रत्यर्धिं देवस्य देवस्य मह्ना । श्रिया त्वाग्निमतिथिं जनानाम् । [15]आ नो विश्वाभिरूतिभिस्सजोषाः ।

विष्णोर्नाम त्रिविक्रमादिरूपं त्वेषं हि प्रदीप्तं प्रसिद्धमित्यर्थः । उक्तानां मन्त्राणां "वैष्णवं वामनमालभेत" * इत्येतस्य पशोः सूक्ते प्रतीकान्याम्नातानि, "प्र तद्विष्णुः, विचक्रमे त्रिर्देवः" † इति। "नू मर्तः" इति मन्त्रस्तु 'प्र तद्विष्णुः' इत्यनेन सह विकल्प्यते ॥

[14]अथ चतुर्दशीमाह—श्रिया स्वकीयया संपदा युक्तमग्निं त्विममग्निमेव यजामह इति शेषः । कीदृशमग्निं? होतारं देवानामाह्वातारं चित्ररथं विचित्रेण रथेन युक्तमध्वरस्य हिंसारहितस्य यज्ञस्य यज्ञस्य केतुं सर्वस्यापि यज्ञस्य ज्ञापकं रुशन्तं दीप्तिमन्तं मह्ना स्वकीयेन महिम्ना देवस्य देवस्य सर्वस्यापि देवस्य प्रत्यर्धिं प्रत्येकमर्धेन हविषा युक्तम् । अत एव सूत्रकार आह—"सर्वेषां हविषामुत्तरार्धात्सकृत्सकृत्स्विष्टकृतेऽवद्यति" इति । जनानां यजमानानामतिथिमतिथिवत्पूजनीयम् । अयं मन्त्र आतिथ्येष्टौ स्विष्टकृतः पुरोनुवाक्या । तथा चाश्वलायन आह—"होतारं चित्ररथमध्वरस्य, प्रत्ययमग्निर्भरतस्य शृण्व इति संयाज्ये" इति ॥

[15]अथ पञ्चदशीमाह—हे हर्यश्व ! हरिनामकाभ्यामश्वाभ्यामुपेतेन्द्र

* सं. २-१-१. † ब्रा. २-८-३.

ब्रह्म जुषाणो हर्यश्व याहि । वरीवृजत्स्थविरेभिः-स्सुशिप्र । अस्मे दधद्वृषणꣳ शुष्ममिन्द्र । [16]इन्द्रः-स्सुवर्षा जनयन्नहानि । जिगायोशिग्भिः पृतना अभिश्रीः ॥२६॥ प्रारोचयन्मनवे केतुमह्नाम् । अविन्दज्ज्योतिर्बृहते रणाय । [17]अश्विनाववसे निह्वये वाम् । आ नूनं यातꣳ सुकृताय विप्रा । प्रातः-

ब्रह्म जुषाणोऽस्मदीयस्तोत्रं सेवमानः सजोषा अस्माभिः समान प्रीतिस्सन् विश्वाभिरूतिभिः सर्वैरपि रक्षणप्रकारैः सह नोऽस्मान्प्रत्या याहि आगच्छ। किं कुर्वन्? हे सुशिप्र! शोभनहविर्युक्त! स्थविरेभिर्वृद्धैर्देवैः सह वरीवृजत् सर्वमशुभमत्यन्तं वर्जयन् । हे इन्द्र ! वृषणं कामवर्षणक्षमं शुष्मं बलमस्मे दधत् अस्मासु संपादयन्वर्तस्व ॥

[16]अथ षोडशीमाह--अयमिन्द्रः उशिग्भिर्विजयं कामयमानैर्देवैः सह पृतना वैरिसेना जिगाय जयं प्राप्तवान् । कीदृश इन्द्रः? सुवर्षाः स्वर्गप्रदः अभिश्रीरभिमतश्रीकः। किं कुर्वन्? अहानि जनयन् स्वर्भानुसंज्ञिनाऽसुरेण सूर्ये तमसा विद्धे सति तदसुरविनाशनेन प्रकाशभूतान्यहान्युत्पादयन् मनवे मनुष्यार्थमह्नां केतुं सूर्यं प्रारोचयत् प्रकर्षेण दीपितवान् । ततो बृहते रणाय महते रणाय क्रीडार्थं ज्योतिरविन्दत् सूर्यरश्मिरूपं प्रकाशं लब्धवान् । एते ऋचौ कस्मिंश्चिदैन्द्रे कर्मणि याज्यानुवाक्ये ॥

[17]अथ सप्तदशीमाह--हेअश्विनौ! वां युवामवसेऽस्मद्रक्षणार्थं निह्वये नितरामाह्वयामि । हे विप्रा! मेधाविनावश्विनौ! सुकृताय शोभ-

युक्तेन सुवृता रथेन । उपागच्छतमवसाऽऽगतं नः । [18]अविष्टं धीष्वश्विना न आसु । प्रजावद्रेतो अह्रयं नो अस्तु । आवां तोके तनये तूतुजानाः । सुरत्नासो देववीतिं गमेम ॥२७॥ [19]त्वꣳ सोम क्रतुभिस्सुक्रतुर्भूः । त्वं दक्षैस्सुदक्षो विश्ववेदाः । त्वं वृषा वृषत्वेभिर्महित्वा । द्युम्नेभिर्द्युम्न्यभवो

नकर्मसिद्ध्यर्थं नूनमायातमवश्यमागच्छतम् । प्रातर्युक्तेन प्रातः-कालेऽश्विभ्यां संयुक्तेन सुवृता शोभनवर्तनेन रथेनोपागच्छतं समीपे समागच्छतम् । समागमने कारणमुच्यते—अस्माकमवसा रक्षणेन अगतमागच्छतम् ॥

[18]अथाष्टादशीमाह—हे अश्विनौ ! आसु धीषु कर्मानुष्ठानबुद्धिषु नोऽस्मानविष्टमवतं रक्षतम् । नोऽस्माकं रेतः प्रजावदपत्ययुक्तं सत् अह्रयमलज्जाकरमस्तु । अपत्याभावे निषिक्तं रेतो लज्जाकरमेव स्यात् । आवां वयं तोके तनये पुत्रे पौत्रे च तूतुजानाः क्षिप्रं यतमानाः सुरत्नासः शोभनरत्नोपेता देववीतिं देवैः काम्यमानं यज्ञं गमेम प्राप्नुयाम । एते ऋचावाश्विने कर्मणि याज्यानुवाक्ये ॥

[19]अथैकोनविंशीमाह—हे सोम ! त्वं क्रतुभिरस्मदनुष्ठितैः कर्मभिः सुक्रतुर्भूः शोभनकर्मा भव । त्वं दक्षैरस्मदीयैर्बलैः सुदक्षः शोभनबलोपेतो विश्ववेदाः सर्वज्ञश्च भव । तथा त्वं वृषत्वेभिः सेचनयुक्तैरस्माभिर्वृषा सेचनयुक्तो महित्वा महिमोपेतश्च भव ।

नृचक्षाः । [20]अषाढं युत्सु पृतनासु पप्रिम् । सुवर्षामप्स्वां वृजनस्य गोपाम् । भरेषुजाꣳ सुक्षितिꣳ सुश्रवसम् । जयन्तं त्वामनु मदेम सोम । [21]भवा मित्रो न शेव्यो घृतासुतिः । विभूतद्युम्न एवया

द्युम्नेभिरस्मदीयैर्धनैर्द्युम्नी धनवान्भूत्वा नृचक्षा अभवो मनुष्येषु ख्यातः संपन्नः। अस्मदीयोत्कर्षमेव त्वदीयोत्कर्षत्वेन भावयेत्यर्थः ॥

[20]अथ विंशीमाह—हे सोम ! त्वामनु वयं मदेम हृष्यास्म। कीदृशं? युत्स्वषाढं युद्धेषु केनाप्यतिरस्कार्यं पृतनासु स्वकीयसेनासु पप्रिं पालकं पूरकं वा सुवर्षां स्वर्गप्रदं अप्स्वां जलप्रदं वृजनस्य गोपां बलस्य रक्षकं भरेषुजां सङ्ग्रामेषु रक्षणाय प्रादुर्भवन्तं सुक्षितिं शोभननिवासं सुश्रवसं शोभनकीर्तिं जयन्तं जयोपेतम् । एतयोः ऋचोः "सौम्यं बभ्रुं ज्योगामयावी"* इत्यस्य पशोः सूक्ते प्रतीकद्वयमाम्नातम्—"अषाढं युत्सु स्वꣳ सोम क्रतुभिः" † इति ॥

[21]अथैकविंशीमाह—हे विष्णो ! त्वं मित्रो न मित्र इव शेव्यः सुखहेतुर्भव । कीदृशस्त्वं? घृतासुतिर्घृतदानो विभूतद्युम्नः प्रभूतधनयुक्त एवया एव एतव्यो गन्तव्यदेशास्तत्र गन्ता सप्रथा उ कीर्तिसहितोऽपि । अथेत्यथशब्दार्थः । अनन्तरं हे विष्णो ! विदुषाविद्यष्टुमशक्तेन केवलविद्यायुक्तेनापि ते स्तोम ऋच्यः त्वदीयं स्तोत्रं संपादनीयम् । हविष्मतो हविर्युक्तस्य यष्टुं शक्तस्य यज्ञस्य राध्यो यज्ञेन त्वमाराधनीयः । द्रव्याभावादनुष्ठातुमशक्तस्य

* सं. २-१-२.

† ऋा. १८-१.

उरु सप्रथाः ॥२८॥ अधा ते विष्णो विदुषाचिदृध्यः । स्तोमो यज्ञस्य राध्यो हविष्मतः । [22]यः पूर्व्याय वेधसे नवीयसे । सुमज्जानये विष्णवे ददाशति । यो जातमस्य महतो महि ब्रवात् । सेदुश्रवो-

तज्जपेनैवानुष्ठानसंपूर्तिः । अत एवान्यत्राम्नायते—"यं यं क्रतुमधीते तेन तेनास्येष्टं भवति" * इति । स्मृतिरपि—

जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ इति ॥

[22]अथ द्वाविंशीमाह—यः पुमान्विष्णवे ददाशति हविर्ददाति । कीदृशाय विष्णवे ? पूर्व्याय जगतः पूर्वमेव भवाय वेधसे जगतो विधात्रे नवीयसे रामकृष्णाद्यवतारैरत्यन्तं नूतनाय सुमज्जानये सुष्ठु माद्यन्ती हृष्यन्ती लक्ष्म्याख्या जाया यस्यासौ सुमज्जानिस्तस्मै । यश्चान्यः पुरुषोऽस्य महतो विष्णोर्जातं रामकृष्णादिजन्मविशेषं महि ब्रवात् महत्त्वेन सर्वदा ब्रवीति । सेदुः स एवोभयविधः पुमान्, श्रवोभिः श्रवणीयैर्हविर्दानमन्त्रैः स्तोत्रविशेषैश्च युज्यंचित् सर्वदा स्वेन युक्तमपि कामक्रोधलोभरूपं शत्रुमभ्यसदभितो निरस्यति । अत एव स्मर्यते—

त्रिविधं नरकस्यैतत् द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ इति ॥

* आ. ३-१५.

वोभिर्युज्यंचिद्भ्यसत् । [23]तमु स्तोतारः पूर्व्यं यथाविद ऋतस्य । गर्भं हविषा पिपर्तन । आऽस्य जानन्तो नामचिद्विवक्तन । बृहत्ते विष्णो सुमतिं भजामहे ॥२१॥ [24]इमा धाना घृतस्नुवः । हरी इहोपवक्षतः । इन्द्रं सुखतमे रथे । [25]एष

[23] अथ त्रयोविंशीमाह—हे स्तोतारः! पुरुषाः! पूर्व्यं जगतः पूर्वमेवावस्थितं तम्नु तमेव विष्णुं यथाविद यथावज्जानीत । ज्ञात्वा चर्तस्य सत्यस्य देवस्य गर्भं गर्भवदन्तःस्थितं वेदप्रतिपाद्यमित्यर्थः । तादृशं विष्णुं हविषा पिपर्तन पालयत पूरयत वा । तत्राशक्तौ यूयमस्य विष्णोर्नामचित् केशवनारायणादीनि नामानि जानन्तः ,शास्त्राचार्यमुखादवगच्छन्त आविवक्तन समन्ताद्विशेषेण ब्रूत निरन्तरं जपतेत्यर्थः । हे विष्णो! ते सुमतिं त्वदीयामनुग्रहबुद्धिं बृहद्भजामहे निरन्तरं सेवामह इत्यर्थः । एतास्तिस्त्र ऋचो वैष्णवे कर्मण्युपहोमार्थाः ॥

[24] अथ चतुर्विंशीमाह—घृतस्नुवो घृतं क्षरन्त्य इमा धाना भर्जितयवरूपा अस्माभिरुपकल्पता इति शेषः । सुखतमेऽतिशयेन सुखप्रदे रथे समारूढं इन्द्रं हरी तदीयौ अश्वाविह धानायुक्ते कर्मण्युपवक्षतः समीपं प्रापयतः । अयं मन्त्रः प्रातस्सवन उच्चीयमानसूक्तेऽन्तर्भावनीयः । अत एव बह्वृचैः—“आ त्वा वहन्तु” इति सूक्तेऽन्तर्भाव्याम्नातः ॥

[25] अथ पञ्चविंशीमाह—द्वयो ऋचोर्व्यतिषक्तरूपोऽयं मन्त्रः । म-

ब्र॒ह्मा प्र ते॑ म॒हे । वि॒दथे॑ शꣳसि॒षꣳ हरी॑ । य ऋ॒त्वि॒यः॒ प्र ते॑ वन्वे । व॒नुषो॑ हर्य॒तं मद॑म् । इन्द्रो॒ नाम॑ घृ॒तं न यः । हरि॑भि॒श्चारु॒ सेच॑ते । श्रु॒तो ग॒ण

योगकाले हि तदुभयं व्यतिषज्य शंसनीयम् । अत एवात्र व्यतिषज्याम्नातः । अर्थस्तु विभज्यैवावबोद्धव्यः । तत्रैका द्विपदाऽनुष्टुप् । इतरा चतुष्पदा जगती । तत्र द्विपदायाः पाठस्तु— 'एष ब्रह्मा य ऋत्वियः । इन्द्रो नाम श्रुतो गणे' इति । तस्यायमर्थः—इन्द्रो नाम यो देवतागणे श्रुतः प्रसिद्धः । ऋत्विय ऋतावृतौ तत्तत्कर्मकाले तत्तत्कर्म कर्तुमाविर्भवति, एष एवंभूत इन्द्रः सदा ब्रह्मा प्रजापतिरेवेति । अयं द्विपदो मन्त्र एवमेवाच्छिद्रकाण्डे समाम्नातः* । जगत्याः पाठस्तु—'प्र ते महे विदथे शꣳसिषꣳ हरी । प्र ते वन्वे वनुषो हर्यतं मदम् । घृतं न यो हरिभिश्चारु सेचते । आ त्वा विशन्तु हरिवर्पसं गिरः' इति । हे इन्द्र! महे विदथे महति यज्ञे हरी त्वदीयावश्वौ प्रशंसिषं प्रकर्षेण स्तुतवानस्मि । हर्यतं हरणीयं मदं मदहेतुं सोमं वनुषः प्रार्थितवतः ते तव प्रवन्वे प्रकर्षेण ददामि । चारु घृतं न समीचीनं घृतमिव मद्दतं सोमं हरिभिः अश्वैर्युक्तोऽयमिन्द्रः सेचते समवैति संबन्ध्यानुभवतीत्यर्थः । हरिवर्पसं हरितवर्णवपुर्युक्तं च पूर्वोक्तगुणयुक्तं त्वा त्वां मदीयाः स्तुतिरूपा गिर आविशन्त्विति । एतयो ऋचोर्व्यतिषङ्गपाठः केवलमदृष्टार्थ एवोपहोमेष्वाम्नातः । अयं च व्यतिषक्तो मन्त्रो विहृतषोडशस्तोत्रेऽन्तर्भावनीयः ॥

आ त्वा॑ विशन्तु ॥ ३० ॥ हरि॑वर्पसं॒ गिरः॑ । [26]आ चर्षणि॒प्रा वृ॑ष॒भो जना॑नाम् । राजा॑ कृष्टी॒नां पु॑रु॒हू॒त इन्द्रः॑ । स्तु॒तश्श्र॑व॒स्यन्नव॒सोप॑म॒द्रिक् । यु॒क्त्वा हरी॒ वृष॒णा या॑ह्य॒र्वाङ् । [27]प्र यत्सिन्ध॑वः प्रस॒वं यदा॑य॒न् । आप॑स्समु॒द्रꣳ र॒थ्ये॑व जग्मुः । अत॑श्चि॒दिन्द्र॒स्सद॑सो॒ वरी॑यान् । यदी॒ꣳ सोमः॑ पृणति॑ दु॒-

[26]अथ षड्विंशीमाह—हे! इन्द्र! त्वं वृषणा सेचनसमर्थौ हरी अश्वौ युक्त्वा रथे संयोज्य अर्वाङ् अस्मदभिमुख आयाहि आगच्छ। कीदृशस्त्वम्? आ समन्तात् चर्षणिप्राः चर्षणीनां मनुष्याणां यजमानरूपाणां फलैः पूरयिता जनानां देवलोकस्थानां मध्ये वृषभः श्रेष्ठः कृष्टीनां मनुष्याणां सर्वेषां स्वामी पुरुहूतः पुरुषु बहुषु यज्ञेष्वाहूतः इन्द्रः परमैश्वर्ययुक्तः स्तुतो यागकाले स्तोत्रैः स्तुतः श्रवस्यन् श्रवोऽन्नं हविस्तदिच्छन् अवसाऽस्मदीयरक्षणेन निमित्तेनोपमद्रिक् मत्समीपं प्राप्नुवन् । अयं च मन्त्रः सौत्रामण्यामैन्द्रस्य पशोर्वपायाः पुरोनुवाक्या । अत एव तत्र प्रतीकमाम्नातम्—"आ चर्षणिप्रा विवेष यन्मा"* इति ॥

[27]अथ सप्तविंशीमाह—यद्यदा सिन्धवो नद्यः प्रसवामिन्द्रस्यानुज्ञां प्रकर्षेणायन्प्राप्नुवन् । द्वितीयो यच्छब्दस्तच्छब्दार्थे वर्तमान उत्तरत्रान्वेति । तत्तदा रथ्येव रथपङ्क्तिरिव नदीप्रवाहगताः आपः समुद्रं जग्मुः । यथा राजमार्गे रथपङ्क्तिः शीघ्रं ग्रामान्तरं प्राप्नोति तद्वन्नदीगतो भङ्गप्रवाहः सहसा समुद्रं प्राप्नोति । यद्य-

* ब्रा. २-६-९.

ग्घो अ॒ꣳशुः । [28]ह्वया॑मसि॒ त्वेन्द्र॑ याह्य॒र्वाङ् ॥ ३१
अरं॑ ते॒ सोम॑स्त॒नुवे॑ भवाति । शत॑क्रतो मा॒दय॑स्वा सु॒तेषु॑ । प्रास्माꣳ अ॑व॒ पृत॑नासु॒ प्र यु॒त्सु । [29]इन्द्रा॑य॒ सोमाः॑ प्र॒दिवो॒ विदा॑नाः । ऋ॒भुर्येभि॒र्वृष॑पर्वा॒ विहा॑याः । प्र॒य॒म्यमा॑णा॒न्प्रति॒ षू गृ॑भाय । इन्द्र॑

---

स्मात्कारणात् ई इममिन्द्रं दुग्धः अभिषुतः सोमः अंशुः सोमरसभागः पृणति पूरयति तद्वत् । अतश्चित् अत एव कारणादयमिन्द्रः सदमः सभागताद्देवसमूहात् वरीयान् अतिशयेन श्रेष्ठः ॥

[28]अथाष्टाविंशीमाह—हे! इन्द्र! त्वां ह्वयामसि अस्मिन्कर्मण्याह्वयामः । अर्वाङ् अभिमुखो याहि कर्मभूमिं गच्छ । ते तनुवे त्वदीयाय शरीराय सोमः अस्माभिर्दीयमानः अरं भवाति अलं संपूर्णो भवति । हे शतक्रतो! सुतेषु सोमेषु मादयस्व तं पीत्वा हृष्टो भव । पृतनासु परकीयसेनासु प्रकर्षेण अस्मानव रक्ष । युत्सु युद्धेषु च प्रकर्षेण रक्ष ॥

[29]अथैकोनत्रिंशीमाह—प्रदिव इति पुरातननामसु पठितः, प्रदिवः सोमाः पुरातनाः सोमा इन्द्राय विदाना इन्द्रार्थत्वेनैव विज्ञाताः । ऋभुः इन्द्रः येभिः यैस्सोमैः वृषपर्वा वृषभवत्पीवराङ्गो विहायाः विशेषेण कार्श्यं हित्वाऽवस्थितः प्रति प्रत्येकं प्रयम्यमाणान् प्रकर्षेणास्माभिर्दीयमानान्सोमान् सुष्ठु गृभाय गृहाण । हे इन्द्र! वृषधूतस्य वृषभवद्वीर्यवद्भिर्ग्रावभिरभिषुतस्य वृष्णः वीर्यवतस्सोमस्य रसं पिब ॥

पिब वृषधूतस्य वृष्णः । [30]अहेडमान उपयाहि यज्ञम् । तुभ्यं पवन्त इन्दवस्सुतासः । गावो न वज्रिन्त्स्वमोको अच्छ ॥ ३२ ॥ इन्द्रागहि प्रथमो यज्ञियानाम् । [3]या ते काकुत्सुकृता या वरिष्ठा । यया शश्वत्पिबसि मध्व ऊर्मिम् । तया पाहि प्र ते अध्वर्युरस्थात् । सं ते वज्रो वर्ततामिन्द्र

[30]अथ त्रिंशीमाह—हे इन्द्र! अहेडमानोऽक्रुध्यन्सन् अस्मदीयं यज्ञमुपयाहि सुतासः अभिषुता इन्दवः सोमाः तुभ्यं त्वदर्थं पवन्ते दशापवित्रेण शोधिता भवन्ति । हे वज्रिन्! इन्द्र! यज्ञियानां यज्ञार्हाणां देवानां मध्ये प्रथमस्सन् स्वमोको अच्छ स्वकीयं स्थानमभिलक्ष्य आगहि आगच्छ । तत्र दृष्टान्तः—गावो न यथा गावः स्वकीयां गोशालां प्रत्यागच्छन्ति तद्वत् ॥

[31]अथैकत्रिंशीमाह—हे इन्द्र! या ते काकुत् जिह्वा सुकृता प्रजापतिना सुष्ठु निर्मिता । अत एव या जिह्वा वरिष्ठाऽतिशयेन श्रेष्ठा । यया जिह्वया मध्वो मधुरस्य सोमस्योर्मिं तरङ्गं तरङ्गाकारं रसं शश्वत् निरन्तरं पिबसि । तया जिह्वया पाहि । अध्वर्युरयं ते तव यागार्थं प्रास्थात प्रस्थितः । हे इन्द्र! ते वज्रो गव्युः गा इच्छन् संवर्ततां सम्यक्प्रवर्तताम् । “प्र यस्मिन्वव:” इत्यादयः पञ्चेन्द्रलिङ्गका मन्त्रा माध्यंदिनसवने शुक्रामन्थिग्रहप्रचारात्पूर्वं प्रस्थितयाज्या द्रष्टव्याः ॥

गव्युः । [32]प्रातर्युजा विबोधय । अश्विना वेह गच्छतम् । अस्य सोमस्य पीतये । [33]प्रातर्यावाणा प्रथमा यजध्वम् । पुरा गृध्रादररुषः पिबाथः । प्रातर्हि यज्ञमश्विना दधाते । प्रशंसन्ति कवयः पूर्वभाजः । [34]प्रातर्यजध्वमश्विना हिनोत । न सायमस्ति देवया अजुष्टम् । उतान्यो अस्मद्यजते

[32]अथ द्वात्रिंशीमाह—हे होतः! प्रातर्युजा प्रातःकालभोजनीयावश्विनौ विबोधय मन्त्रविशेषेण प्रबुद्धौ कुरु । हे अश्विना इह कर्माणि अस्य सोमस्य पानाय युवां गच्छतम् । अयं मन्त्र आश्विनग्रहस्य पुरोनुवाक्या ॥

[33]अथ त्रयस्त्रिंशीमाह—हे ऋत्विजः! प्रातर्यावाणा प्रातस्सवनं गच्छन्तावश्विनौ प्रथमा प्रथममेव यजध्वम् । हे अश्विनौ गृध्रात् सोमयुक्तात् अररुषः अररुर्नामकादसुरात् पुरा पिबाथः इमं सोमरसं पिबतम् । हि यस्मात्कारणादेतावश्विनौ प्रातःकाले यज्ञं दधाते आश्विने शस्त्रे चमसगणे यज्ञमाश्विनौ धारयतः तस्मात्कारणात् पूर्वभाजः पूर्वमेव देवान्भजमानाः कवयो विद्वांस ऋत्विज एतावश्विनौ प्रशंसन्ति ॥

[34]अथ चतुस्त्रिंशीमाह—हे ऋत्विजः! प्रातःकाले यजध्वम् एतावश्विनौ हिनोत प्रीणयत । सायंकाले देवया देवार्थं यागो नास्ति यस्मात्सायंकाले हुतं अजुष्टमप्रियम् । उत अपिच अस्मदन्यः कश्चिद्यजमानो विचार्यो विशेषेण पूजायुक्तो यद्यपि यजते तथाऽपि पूर्वः

विचार्यः । पूर्वः पूर्वो यजमानो वनीयान् ॥२२॥
चाश्वजिद्यो गच्छतं नो दाशन्नामाभिश्रीर्गिमेम सप्रथा भजामहे त्विशन्तु याह्यर्वाङ्गच्छं पिबाथ-ष्षट्च ॥२॥

[1]नक्तं जाताऽस्योषधे । रामे कृष्णे असिक्नि च । इद२ रजनि रजय । किलासं पलितं च यत् ।

---

पूर्वो यजमानो वनीयान् अत्यन्तं संभजनीयः तस्मादहमेव सर्वेभ्यः पूर्वो यजामीत्यभिप्रायः । एते ऋचावाश्विने कर्मणि विकल्पिते याज्ये ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके
तृतीयोऽनुवाकः.

---

[1]चतुर्थानुवाके प्रथमामृचमाह––अथ पञ्चभिर्मन्त्रैः श्वेतकुष्ठरोगं विनाशयति––शरीरं रमणीयं करोतीति रामा । स्वयं कृष्णवर्णा । श्वैत्यविनाशनेनासितं कृष्णवर्णं तस्मिन्प्रदेशे संपादयतीत्यसिक्नी । तथाविधे हे नील्याख्यौषधे! त्वं नक्तं जाताऽसि । अत एवान्धकारवन्नीलवर्णा दृश्यसे । हे रजनि! स्वकीयेन वर्णेन रञ्जनक्षमे ओषधे इदं श्वेतं शरीरं रजय स्वकीयवर्णेन रञ्जितं कुरु । यत्किलासं श्वेतरोगग्रस्तमङ्गं यच्च पलितं रोमादिकं तदिदं रजयेति पूर्वत्रान्वयः । अत्र हरिद्रा रजनीति केचित् ॥

[2]कि॒लासं॑ च पलि॒तं च॑ । निरि॒तो ना॑शया॒ पृष॑त् ।
आ न॒स्स्वो अ॑श्नुतां॒ वर्णः॑ । परा॑ श्वे॒तानि॑ पातय ।
[3]असि॑तं ते नि॒लय॑नम् । आ॒स्थान॒मसि॑तं॒ तव॑ ॥३४
असि॑क्नियस्योषधे । निरि॒तो ना॑शया॒ पृष॑त् । [4]अ॒-
स्थि॒जस्य॑ कि॒लास॑स्य । त॒नू॒जस्य॒ च॒ यत्त्व॒चि ।

---

[2]अथ द्वितीयामाह—किलासं श्वित्ररोगाङ्कं पलितं चेत्येवं पृषत् यच्चित्ररूपं तत् इतश्शरीरान्निश्शेषेण नाशय । स्वो वर्णो देहस्य स्वकीयः पूर्वसिद्धो वर्णो नोऽस्मान् आसमन्तात् अश्नुतां व्याप्नोतु। श्वेतानि रोगरूपाणि परापातय विनाशय ॥

[3]अथ तृतीयामाह—हे ओषधे! ते तव निलयनं निश्शेषेण लयनं लयप्राप्तिस्थानमङ्गमसितं कृष्णं भवति । न केवलं देहावयवः किंतु तव यदास्थानं वसतिरूपं तदसितं कृष्णं भवति । आ समन्तात्तिष्ठत्यत्रेत्यास्थानं नीलिप्रक्षेपेण वस्त्रं कृष्णं भवतीति प्रसिद्धमेतत् । अतो हे ओषधे! त्वमासिक्न्यसि तद्व-त्प्रापिकाऽसि । अस्मत्पृषत् बहुविधं रूपमितोऽस्मदीयशरीरात् निश्शेषेण नाशय ॥

[4]अथ चतुर्थीमाह—अस्थिजन्यं यत्किलासं श्वित्रं तनूजं मांसजन्यं यत्किलासं त्वचि यत्किलासं वर्तते यच्च कृत्यया परकीयाभिचारेण कृतं संपादितं किलासं तस्य सर्वस्य संबन्धि श्वेतं लक्ष्म श्वेतवर्णलाञ्छनं ब्रह्मणा परमेश्वरेण अनुगृहीतोऽहं अनीनशं नाशितवानस्मि ॥

कृत्यया कृतस्य ब्रह्मणा । लक्ष्मं श्वेतमनीनशम् ।
[5]सरूपा नाम ते माता । सरूपो नाम ते पिता ।
सरूपाऽस्योषधे सा । सरूपमिदं कृधि ॥ ३५॥ [6]शु
नꣳ हुवेम मघवानमिन्द्रम् । अस्मिन्भरे नृतमं
वाजसातौ । शृण्वन्तमुग्रमूतये समत्सु । घ्नन्तं
वृत्राणि संजितं धनानाम् । [7]धूनुथ द्यां पर्वतान्दा-

---

[5]अथ पञ्चमीमाह—हे ओषधे! ते माता तव मातृस्थानीया भूमिः सरूपा नाम त्वया समानरूपैव कृष्णभूमिरित्यर्थः । ते पिता तव पितृस्थानीयो बीजविशेषः सरूपो नाम कृष्णवर्णतया समानरूपः । एताभ्यामुत्पन्ना सा त्वमपि सरूपाऽसि कृष्णवर्णतया तयोर्मातापित्रोः समानरूपाऽसि । तस्मादिदं श्वेतरूपरोगग्रस्तं शरीरं सरूपं कृधि त्वया समानरूपं कृष्णवर्णं कुरु । एतेषां पञ्चानां मन्त्राणां श्वेतरोगनिवारणौषध्यभिमन्त्रणे विनियोगो द्रष्टव्यः ॥

[6]अथ षष्ठीमाह—वाजसातौ अन्नप्रदे अस्मिन्भरे भरणीये सङ्ग्रामे इन्द्रं हुवेम आह्वयाम । कीदृशं? शुनं सुखरूपं मघवानं धनयुक्तं नृतमं पुरुषश्रेष्ठं शृण्वन्तं अस्मदाह्वानस्य श्रोतारं समत्सु युद्धेषु ऊतये अस्मद्रक्षार्थं उग्रं कोपयुक्तं वृत्राणि घ्नन्तं शत्रून्मारयन्तं धनानां संजितं सम्यक्संपादकम् । अयं मन्त्रो विजयार्थेन्द्रकर्मण्युपहोमार्थः ॥

[7]अथ सप्तमीमाह—हे पृश्निमातरः! पृश्निरूत्पन्ना मरुतः! तथा

शुषे वसु । नि वो वना जिहते यामनो भिया । कोपयथ पृथिवीं पृश्निमातरः । युधे यदुग्राः पृषतीरयुग्ध्वम् । [8]प्रवेपयन्ति पर्वतान् । विविञ्चन्ति वनस्पतीन् ॥ ३६ ॥ प्रोऽवारत मरुतो दुर्मदा इव । देवासस्सर्वया विशा । [9]पुरुत्रा हि सदृङ्ङसि ।

च ब्राह्मणम्—"पृश्नियै वै पयसो मरुतो जाताः"* इति । तादृशा यूयं यद्यदा युधे युद्धार्थमागतास्सन्तः पृषतीर्भवदीयाः अश्वा अयुग्ध्वं रथे योजितवन्तः तदानीमेव द्यां धूनुथ द्युलोकं कम्पयथ, तथा पर्वतान्धूनुथ । दाशुषे हविर्दत्तवते यजमानाय वसु धनं धूनुथ प्रयच्छथेत्यर्थः । वो युष्माकं यामनः गमनवेगात् वनानि सर्वाणि भिया भीत्यैव निजिहते न्यग्भूतानि पतन्ति । तथा पृथिवीं कोपयथ भूमिं क्षोभयथ ॥

[8]अथाष्टमीमाह—हे मरुतः ! भवन्तः पर्वतान् प्रवेपयन्ति कम्पयन्ति, तथा वनस्पतीन् विविञ्चन्ति विविधमुन्मीलयन्ति । प्रो प्रकर्षेण अवारत धावत । कीदृशा भवन्तः? सर्वया विशा प्रजया सह देवासो दीप्यमानाः । एते ऋचौ "पृश्नियै दुग्धे प्रैयङ्गवं चरुं निर्वपेत्"* इत्येतस्मिन्कर्मणि याज्यानुवाक्ये द्रष्टव्ये ॥

[9]अथ नवमीमाह—हे अग्ने! त्वं पुरुत्रा बहुषु स्थानेषु सदृङ्ङसि समानोऽसि स्थित्वाऽप्यलिप्तोऽसीत्यर्थः । तथा चाहुः—"श्मशानेष्वपि तेजस्वी पावकोऽस्मिन्न लिप्यते" इति । विशो

* सं. २-२-११.

विशो विश्वा अनु प्रभु । समत्सु त्वा हवामहे ।
[10]समत्स्वग्निमवंसे । वाजयन्तो हवामहे । वाजेषु चित्रराधसम् । [11]संगच्छध्वꣳ संवदध्वम् । सं वो मनाꣳसि जानताम् ॥ ३७ ॥ देवा भागं यथा पूर्वे । संजानाना उपासत । [12]समानो मन्त्रस्समितिस्समानी । समानं मनस्सह चित्तमेषाम् । समा-

---

विश्वा अनु सर्वाः प्रजा अनुसृत्य प्रभु प्रकर्षेण दाहपाकादिनोपकारको भवसि । समत्सु युद्धेषु त्वां हवामहे आह्वयामः ॥

[10]अथ दशमीमाह—वाजयन्तोऽन्नमिच्छन्तो वयं समत्सु युद्धेषु अवसे अस्माकं रक्षणाय अग्निं हवामहे आह्वयामः । कीदृशं? वाजेषु अन्नेषु विषयेषु चित्रराधसं आश्चर्यं यथा भवति तथा साधकम् । एतच्च मन्त्रद्वयं विजयार्थाग्नये कर्मणि द्रष्टव्यम् ॥

[11]अथैकादशीमाह—समानैस्सह विप्रियाः! हे पुरुषाः! यूयं संगच्छध्वं परस्परं संगता भवत । संवदध्वं संवादं कुरुत एको भोक्तुं कार्यमिव । वो युष्माकं मनांसि संजानतां परस्परं संमतिं जानन्तु । यथा पूर्वे देवा संजानानाः परस्परसंगतिं जानन्तो भागमुपासत स्वस्वभागमविघ्नेनानुभूतवन्तस्तद्वत् ॥

[12]अथ द्वादशीमाह—मन्त्रो मन्त्रालोचनं कार्यविचारः समानः एकरूपोऽस्तु । तथा समितिः समानी अन्योन्यसंगमोऽप्येकरूपोऽस्तु । मनः समानमेकविषयमस्तु । एषां चित्तं सहतिष्ठतु ।

नं केतौ अभि सꣳरभध्वम् । संज्ञानेन वो हुविषा यजामः । [13]समानी व आकूतिः । समाना हृदयानि वः । समानमस्तु वो मनः । यथा वस्सुसहाऽसति ॥ ३८ ॥ [14]संज्ञानं नस्स्वैः । संज्ञानमरणैः । संज्ञानमश्विना युवम् । इहास्मासु नियच्छतम् । [15]संज्ञानं मे बृहस्पतिः । संज्ञानꣳ सवि-

ऊहापोहस्यमन्तःकरणं मनः । वस्तुज्ञानावस्थितमन्तःकरणं चित्तम् । समानं केतो अभि सहवासस्थानमभिलक्ष्य संरभध्वं प्रयतध्वम् । वो युष्मकं विप्रतिपन्नानां देवानां संज्ञानेन संप्रतिपत्तिनिमित्तेन हविषा यजामः ॥

[13] अथ त्रयोदशीमाह—वो युष्माकं आकूतिस्समानी संकल्प एकरूपोऽस्तु । वो युष्माकं हृदयानि कार्यनिश्चायकान्यन्तःकरणानि समाना एकरूपाणि भवन्तु । वो युष्माकं मन ऊहापोहरूपं मननसामर्थ्यं च समानमेकरूपमस्तु । किं बहुना, वो युष्माकं सर्वं कार्यं सुसहा सुखेन सहावस्थितं यथा असति अतिशयेन प्रकारेण भवति तथाऽस्तु ॥

[14] अथ चतुर्दशीमाह—नोऽस्माकं स्वैः स्वकीयैः पुरुषैस्सह संज्ञानमैकमत्यमस्तु । अरणैर्गमनैरव्यवहारविशेषैः संज्ञानमैकमत्यमस्तु । हे अश्विनौ! युवामिह लोके अस्मासु सर्वेष्वपि संज्ञानमैकमत्यं नियच्छतं नियतं कुरुतम् ॥

[15] अथ पञ्चदशीमाह—बृहस्पतिर्देवो मे मदीयसंघस्य संज्ञानमैक-

ताऽकरत् । संज्ञानमश्विना युवम् । इह मह्यं नि- यच्छतम् । [16]उपच्छायामिव घृणेः । अगन्म शर्म ते वयम् ॥ ३१ ॥ अग्ने हिरण्यसंदृशः । [17]अदब्धेभि- स्सवितः पायुभिष्ट्वम् । शिवेभिरद्य परिपाहि नो गयम् । हिरण्यजिह्वस्सुविताय नव्यसे । रक्षा

मत्यं करोतु । सविता च संज्ञानमैकमत्यं करोतु । हे अश्विनौ! युवां मह्यं मदर्थं इह मदीये जने संज्ञानं नियच्छतम् । संगच्छध्वमि त्यादयः पञ्च मन्त्राः "यस्समानैर्मिथो विप्रियस्स्यात्तमेतया सं- ज्ञान्या याजयेत्"* इत्यस्मिन्कर्मणि द्रष्टव्याः ॥

[16]अथ षोडशीमाह—हे अग्ने! हिरण्यसंदृशः सुवर्णवत्सम्यग्दृ- श्यमानस्य ते तव शर्म शरणं गृहं उप समीपे वयमगन्म प्राप्ताः स्मः । तत्र दृष्टान्तः घृणेश्छायामिव । यथा लोके आदित्यस्य रश्मेश्छायाभूतां शालां प्राप्नुवन्ति तद्वत् । अयं मन्त्र आग्नेयकर्मणि द्रष्टव्यः ॥

[17]अथ सप्तदशीमाह—हे सवितः! त्वमदब्धेभिरहिंसकैः शिवेभिः शान्तैः पायुभिः पालनोपायैः अद्यास्मिन्कर्मणि नो गयं अमस्मदीयं गृहं परिपाहि सर्वतः पालय । हिरण्यजिह्वः स्वर्णसदृशजिह्वायुक्तस्सन् नव्यसे अत्यन्तं नूतनाय सुविताय शोभनगमनाय सम्यगनुष्ठानाय रक्ष विघ्नान्परिहर । अघशंसः नोऽस्मदीयमघं शंसन् निन्दां कुर्वन् यो वैरी वर्तते स नोऽस्माकं माकिरीशत बाधितुं समर्थो मा भूत् । अयं मन्त्रः सावित्रे कर्मणि द्रष्टव्यः ॥

* सं. ३-२-११.

माकिर्नो अघशंस ईशत । [18]मदेमदे हि नो ददुः । यूथा गवामृजुक्रतुः । संगृभाय पुरू शता । उभया हस्त्या वसु । शिशीहि राय आभर ॥४०॥ [19]शिप्रिन्वाजानां पते । शचीवस्तव दंसना । आ तू न इन्द्र भाजय । गोष्वश्वेषु शुभ्रषु । सहस्रेषु तुवीमघ । [20]यद्वेवा देव हेडनम् । देवासश्चकृमा

[18] अथाष्टादशीमाह—ऋजुक्रतुरकुटिलकर्मा अयमिन्द्रो नोऽस्माकं मदेमदे तदातदा हर्षनिमित्तं गवां यूथा ददुः गोसमूहान्प्रयच्छति । हे इन्द्र! उभया हस्त्या उभयोर्हस्तयोः पुरू शता बहूनि शतानि संगृभाय सम्यग्गृहीत्वा वसु धनं शिशीहि अस्मभ्यं प्रयच्छ। पुनरपि रायो धनानि आभर संपादय ॥

[19] अथैकोनविंशीमाह—शिप्रशब्दो हनुवाचकः । शोभनहनुयुक्तः शिप्री । वाजानां पतिरन्नपालकः। शचीवान् शक्तिमान् । तुवीमघो बहुलधनः। तादृश हे इन्द्र! तव दंसना त्वत्संबन्धीनि दंसनशब्दाभिधेये अस्मिन्कर्मण्यनुष्ठिते सति शुभ्रषु निर्मलेषु सहस्रेषु सहस्रसंख्याकेषु गोष्वश्वेषु च नोऽस्मान् आतु भाजय समन्तात्सदा भागिनः कुरु। एतच्च मन्त्रद्वयमैन्द्रे कर्मणि द्रष्टव्यम् ॥

[20] अथ विंशीमाह—हे देवासः! दीप्यमाना आदित्या देवाः! देवहेलनं देवावज्ञारूपं पापं यद्वयं चकृम यूयमादित्या ऋतस्य यज्ञस्य ऋतेन सत्येन शास्त्रीयेणास्मदनुष्ठानेन मां तस्मात्पापान्मुञ्चत मुक्तं कुरुत ॥

व॒यम् । आदि॑त्यास्तस्मा॒न्मा यू॒यम् । ऋ॒तस्यु॒र्तेन॑ मु॒ञ्चत । [2] ऋ॒तस्यु॒र्तेना॑दित्याः ॥ ४१ ॥ यज॑त्रा मु॒ञ्चते॒ह मा॑ । य॒ज्ञैर्वो॑ यज्ञवाहसः । आ॒शिक्ष॑न्तो॒ न शे॑किम । [22] मेद॑स्वता॒ यज॑मानाः । स्रु॒चाऽऽज्ये॑न॒ जु॒ह्व॑तः । अ॒का॒मा वो॑ विश्वे॑ दे॒वाः । शिक्ष॑न्तो॒ नोप॑शेकिम । [23] यदि॒ दिवा॒ यदि॒ नक्त॑म् । एनं॑ ए॒न॒स्यो॑ऽकरत् । भू॒तं मा॒ तस्मा॒द्भव्यं॑ च ॥ ४२ ॥ द्रु॒प॒दादि॑व मु-

[21] अथैकविंशीमाह—हे आदित्याः ! यजत्रा यष्टव्या यूयमिहास्मिँल्लोके ऋतस्यर्तेन सम्यगनुष्ठानेन मां पापादस्मान्मुञ्चत । हे यज्ञवाहसः ! यज्ञनिर्वाहका देवाः ! वो युष्मत्संबन्धिभिर्यज्ञैः शेकिम पापं नाशयितुं शक्ता भवेम । तत्र दृष्टान्तः—आशिक्षन्तो न यथा यज्ञसंबन्धिनीं सर्वतः शिक्षां कुर्वन्त आचार्याः शक्तास्तद्वत् ॥

[22] अथ द्वाविंशीमाह—हे विश्वे देवाः ! मेदस्वता सारयुक्तेनाज्येन पूर्णया स्रुचा जुह्वतः होमं कुर्वन्तोऽकामाः फलकामनारहिता यजमाना वयं वो युष्माकं प्रसादादुपशेकिम पापं नाशयितुं सर्वथा शक्ताः स्मः । शिक्षन्तो नेति दृष्टान्तः पूर्ववत् ॥

[23] अथ त्रयोविंशीमाह—एन इच्छतीत्येनस्यः पूर्वं पापप्रवृत्तोऽहं रात्रौ दिवसे वा एनोऽकरत् पापं कृतवानस्मि । कीदृशमेनः ? भूतं भव्यं च । किंचिदेनः पूर्वमेव निष्पन्नं अन्यत्तु कर्तुमुद्युक्तम् । तस्मात्सर्वस्मात्पापान्मामादित्यो मुञ्चतु । तत्र दृष्टान्तः—द्रुपदादिव

श्चतु । [24]द्रुपदादिवेन्मुमुचानः । स्विन्नस्स्नात्वी मलादिव । पूतं पवित्रेणेवाज्यम् । विश्वे मुञ्चन्तु मैनसः । [25]उद्वयं तमसस्परि । पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यम् । अगन्म ज्योतिरुत्तमम् ॥ ४३ ॥

तव क्राधि वनस्पतीश्चानतामसांति वयं भरादित्याश्च नव च ॥ ४ ॥

---

अपराधिनां पादे प्रतिमोचितं काष्ठं द्रुपदं यथा कृपालुः स्वामी अस्माद्बन्धनादपराधिनं मोचयति तद्वत् ॥

[24]अथ चतुर्विंशीमाह—विश्वे सर्वे देवाः मामेनसः पापान्मुञ्चन्तु मुक्तं कुर्वन्तु । तत्र दृष्टान्तत्रयम्—द्रुपदात्पादबन्धनरूपात् काष्ठात् मुमुचान इवेत् यथा तथेत्यर्थः । स्विन्नः स्वेदव्याप्तगात्रः स्नात्वी स्नानं कृत्वा यथा मलान्मुच्यते तद्वत् । पवित्रेणोत्पवनसाधनेन आज्यं यथा पूतं तद्वत् ॥

[25]अथ पञ्चविंशीमाह—तमसस्परि तमसः अन्धकारात् परि ऊर्ध्वं उत्तरमुत्कृष्टं ज्योतिः उत्पश्यन्त उत्कर्षेण पश्यन्तो वयं देवत्रा देवेषु मध्ये देवं द्योतमानं सूर्यरूपमुत्तमं ज्योतिः अगन्म प्राप्ताः स्मः । 'यद्देवा देवहेडनम्' इत्येताः षडृचः पापक्षयार्थे कर्मणि द्रष्टव्याः ॥

इति तैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके

चतुर्थोऽनुवाकः.

[1]वृषा सो अꣳशुः पवते हविष्मान्त्सोमः । इन्द्रस्य भाग ऋतयुश्शतायुः । स मा वृषाणं वृषभं कृणोतु । प्रियं विशाꣳ सर्ववीरꣳ सुवीरम् । [2]कस्य वृषा सुते सचा । नियुत्वान्वृषभो रणत् । वृत्रहा सोमपीतये । [3]यस्ते शृङ्ग वृषो नपात् । प्रणपात्कु-

[1]अथ पञ्चमेऽनुवाके प्रथमामृचमाह—सोमो वल्ल्यात्मकः पवते शुद्धो भवति । कीदृशः सोमः। वृषा कामानां वर्षयिता सः प्रसिद्धः अंशुः बहुभिरंशुभिर्युक्तः हविष्मान् हविषो निष्पादकः इन्द्रस्य भागो भक्षणीयः ऋतयुः यज्ञहेतुः शतायुः शतसंवत्सरस्यायुषः प्रदाता तादृशः सोमः मां यजमानं वक्ष्यमाणविशेषणोपेतं कृणोतु करोतु । कैर्विशेषणैरुपेतं? वृषाणं सेचकं वृषभं श्रेष्ठं विशां प्रजानां प्रियं प्रीतिहेतुं सर्ववीरं सर्वेषां मध्ये वीर्योपेतं सुवीरं शोभनैर्वीरैः पुत्रैर्युक्तम् ॥

[2]अथ द्वितीयामाह—कस्योदकस्य वृषा वर्षिता सुतेऽभिषुते सोमे सचा समवेतः नियुत्वान् नियुद्भिरश्वविशेषैर्युक्तः वृषभः श्रेष्ठः वृत्रहा वैरिघातकः इन्द्रः सोमपीतये सोमपानाय रणत् रमते ॥

[3]अथ तृतीयामाह—शृङ्गादिशब्दैस्त्रिभिः सोमः संबोध्यते । अथवा इन्द्रस्य संबोधनानि । शृङ्गवच्छ्रेष्ठकामाभिवर्षको नपात् नपातयिता अस्माकमविनाशहेतुरीदृश इन्द्रो योऽयं कुण्डपाय्यः एतन्नामकः सोमयागविशेषः प्रणपात् प्रकर्षेण नपातयिता तृप्तिहेतुरित्यर्थः । अस्मिन्क्रतौ ते मनः नितरां आ समन्तात् दध्रे धृतवान् ॥

ण्ड्रुपार्य्यः । न्यस्मिन्दध्र आ मनः ॥ ४४ ॥ [4]तꣳ सध्रीचीरूतयो वृष्णियानि । पौꣳस्यानि नियुतस्सश्चुरिन्द्रम् । समुद्रं न सिन्धव उक्थशुष्माः । उरुव्यचसं गिर आविशन्ति । [5]इन्द्राय गिरो अनिशितसर्गाः । अपः प्रैरयन्थ्सगरस्य बुध्नात् । यो अक्षेणेव चक्रिया शचीभिः । विष्वक्तस्तम्भ पृथि-

[4]अथ चतुर्थीमाह—सध्रीचीः सह प्रवर्तमानाः ऊतयः रक्षाहेतवः कर्मविशेषाः पौंस्यानि पुंसंबन्धीनि वृष्णियानि सेचनानि कामवर्षणानि वा नियुतोऽश्वाश्च तमिन्द्रं सश्चुः संबध्नन्ति । तत्र दृष्टान्तः—समुद्रं न सिन्धवः यथा समुद्रं नद्यः प्राप्नुवन्ति तद्वत् । अथवा वक्ष्यमाणार्थेऽयं दृष्टान्तः—उक्थशुष्माः उक्थैः शस्त्रैः शुष्माः प्रबला गिरोऽस्मदीयाः स्तुतिरूपा वाच उरुव्यचसमत्यन्ततृप्तियुक्तमिन्द्रमाविशन्ति ॥

[5]अथ पञ्चमीमाह—य इन्द्रः शचीभिः शक्तिभिः पृथिवीं विष्वक् तस्तम्भ सर्वतः स्तम्भितवान् । उत अपिच द्यां द्युलोकमपि विष्वक् तस्तम्भ । तत्र दृष्टान्तः—अक्षेणेव चक्रिया यथा रथस्याक्षेण चक्रिया चक्रद्वयं स्तम्भितं तद्वत् । तादृशायेन्द्रायास्माभिः प्रयुज्यमानाः स्तुतिरूपा गिरोऽनिशितसर्गा अतीक्ष्णस्वभावा अपः सगरस्य समुद्रसमानस्य मेघस्य बुध्नात् मूलात् प्रैरयन् । अस्मदीयाभिः स्तुतिभिः स्तूयमान इन्द्रो वृष्टिं प्रयच्छतीत्यर्थः । 'आपो वै शान्ताः'* इति श्रुतेरनुभवाच्चापामतीक्ष्णस्वभावत्वम् ॥

*सं. ५-४-४.

वीमुत द्याम् । [6]अक्षोदयच्छवसा क्षाम बुध्नम् । वार्णवातस्तविषीभिरिन्द्रः ॥ ४५ ॥ दृढान्यौघ्नादुशमान ओजः । अवाभिनत्ककुभः पर्वतानाम् । [7]आ नो अग्ने सुकेतुना । रयिं विश्वायुपोषसम् । मार्डीकं धेहि जीवसे । [8]त्वꣳ सोम महे भगम् । त्वं

[6]अथ षष्ठीमाह—अयमिन्द्रः शवसा स्वकीयेन बलेन क्षाम क्षीणं बुध्नं मेघमूलं अक्षोदयत् उदकपूरणं कृत्वा प्रेरितवान् । तत्र दृष्टान्तः—वार्णवातो वार्णवायुः जलं यथा प्रेरयति तद्वत् । ओजो बलं उशमानः कामयमानो दृढानि मेघमूलानि औघ्नात् हतवान्वज्रेण भिन्नवान् । पर्वतानां ककुभः शिखराणि महावृष्ट्या वज्रेण अवाभिनद्भिन्नान्यकरोत् । वृषा स इत्यादयः षण्मन्त्रा ऐन्द्रे सौमिके कर्मणि द्रष्टव्याः । 'तꣳ सध्रीचीः' इत्यस्य तु सौत्रामण्यामैन्द्रे पशावप्यस्ति विनियोगः । अत एव तत्र प्रतीकमाम्नातम् 'तꣳ सध्रीचीः'* इति ॥

[7]अथ सप्तमीमाह—हे अग्ने! सुकेतुना शोभनेन ज्ञानेन युक्तस्त्वं विश्वायुपोषसं विश्वस्यायुषः पोषणे क्षमं रयिं धनं मार्डीकं अतिशयेन सुखसाधनभूतं जीवसे अस्माकं जीवनाय आधेहि सर्वतः संपादय ॥

[8]अथाष्टमीमाह—हे सोम! त्वं महे महते वृद्धाय भगं सौभाग्यं दधासि संपादयसि । तथा त्वं ऋतायते यज्ञमिच्छते यूने

* ब्रा. २-६-१.

यूने ऋतायते । दक्षं दधासि जीवसे । [9]रथं युञ्जते मरुतश्शुभे सुगम् । सूरो न मित्रावरुणा गविष्टिषु ॥ ४६ ॥ रजांसि चित्रा वि चरन्ति तन्यवः । दिवस्संम्राजा पयसा न उक्षतम् । [10]वाचꣳ सु मित्रावरुणाविरावतीम् । पर्जन्यश्चित्रां वदति त्विषीमतीम् । अभ्रा वसत मरुतस्सु मायया ।

यौवनोपेताय यजमानाय जीवसे जीवनार्थं दक्षं समर्थं धनं दधासि संपादयसि । एते उभे ऋचौ चातुर्मास्यान्तर्गतमहापितृयज्ञे आज्यभागयोः पुरोनुवाक्ये । तथा च सूत्रकार आह—'जीववन्तावाज्यभागौ यजत्या नो अग्ने सुकेतुना' इति ॥

[9]अथ नवमीमाह—मरुतो देवाः शुभे कर्मणि सुगं शोभनं गमनसाधनं रथं युञ्जते अश्वैर्योजयन्ति । तत्र दृष्टान्तः—सूरो न यथा सूर्यो रथं युनक्ति तद्वत् । हे मित्रावरुणौ! गविष्टिषु भूमाविष्यमाणाः क्षेत्रादिसंपत्तयो गविष्टयः तासु निमित्तभूतासु चित्रा विचित्राणि रजांसि रञ्जनीयानि जलानि वितन्यवः विस्तारयन्तो मरुतो विविधं चरन्ति । तद्वद्युवामपि दिवः सकाशात्सम्राजा पयसा सम्यग्राजमानेन क्षेत्रोपकारिणा जलेन नोऽस्मान् उक्षतं सिञ्चतम् ॥

[10]अथ दशमीमाह—हे मित्रावरुणौ! अयं पर्जन्य इरावतीमन्नसाधनभूतां चित्रां बहुविधां त्विषीमतीं त्विड्भिर्विद्युद्भिर्युक्तां वाचं गर्जनध्वनिरूपां वदति करोतीत्यर्थः । अरुणां विद्युद्भिर्युक्तत्वेनारुणवर्णां अरेपसं रेपसा वृष्टिप्रतिबन्धकेन पापादिना रहितां द्यां

द्यां वर्षयतमरुणामरेपसम् । [11]अयुक्त सप्त शुन्ध्युवः । सूरो रथस्य नप्त्रियः । ताभिर्याति स्वयुक्तिभिः । [12]वीहिष्टेभिर्विहरन् यासि तन्तुम् ॥४७॥ अवव्ययन्नसितं देव वस्वः । दविध्वतो रश्मयः

मेघयुक्तां दिवं वर्षयतम् । हे मित्रावरुणौ! युवां वृष्टियुक्तां कुरुतम् । हे मरुतः! यूयमपि मायया धूमज्योतिरादिभिर्मेघनिष्पादिकया भवदीयया मायाशक्त्या अभ्रा विचित्राण्यभ्राणि सुवसत सुष्ठु वासयत संपादयतेत्यर्थः । एतच्च मन्त्रद्वयं वृष्टिहेतौ मैत्रावरुणकर्मणि विनियोक्तव्यम् ॥

[11]अथैकादशीमाह—सूरः सूर्यो रथस्य स्वकीयस्य नप्त्रियः अपातनहेतून्रथमविनाशयितॄन् शुन्ध्युवः शुद्धान् सप्तसंख्याकान् अयुक्त रथे योजितवान् । स्वयुक्तिभिः स्वेन योजिताभिस्सह याति प्रतिदिनं गच्छति ॥

[12]अथ द्वादशीमाह—हे देव! सूर्य! वहिष्ठेभिरतिशयेन वहनक्षमैरश्वैर्विहरन् तत्रतत्र क्रीडन् तन्तुं रश्मिविस्तारं यासि प्राप्नोषि। किं कुर्वन्? असितमन्धकारमवव्ययन् विनाशयन् । वस्वः वासयितारमाच्छादकमन्धकारं दविध्वतः दोधूयमानाः विनाशनसमर्थाः सूर्यस्य रश्मयोऽप्स्वन्तरन्तरिक्षमध्ये तमोऽन्धकारमवाधुर्विनाशितवन्तः । अप्शब्दोऽप्यन्तरिक्षनामसु पठितः । तमोविनाशने दृष्टान्तः—चर्मेव यथा दृष्टेरावरकं पटलरूपं चर्मापनयति तद्वत् । एतच्चोभयं सौर्ये कर्मणि द्रष्टव्यम् ॥

स्सूर्यस्य । चर्मेवावाधुस्तमो अप्स्वन्तः । [13]पर्जन्याय प्रगायत । दिवस्पुत्राय मीढुषे । स नो यवसमिच्छतु । [14]अच्छा वद तवसं गीर्भिराभिः । स्तुहि पर्जन्यं नमसा विवास । कनिक्रदद्वृषभो जीरदानुः । रेतो दधात्वोषधीषु गर्भम् ॥४८॥ [15]यो गर्भमोषधीनाम् । गवां कृणोत्यर्वताम् । पर्जन्यः

[13]अथ त्रयोदशीमाह—हे ऋत्विजः! पर्जन्याय पर्जन्यदेवार्थं प्रगायत प्रकर्षेण गानं कुरुत । कीदृशाय दिवस्पुत्राय स्वर्गलोकस्य पुत्रस्थानीयाय मीढुषे सेचनसमर्थाय । स च पर्जन्यो नोऽस्मदर्थं यवसं तृणसस्यादिकमिच्छतु वृष्टिद्वारेण संपादयत्वित्यर्थः ॥

[14]अथ चतुर्दशीमाह—हे पर्जन्यदेव! तवसमच्छास्मद्धितं बलमभिलक्ष्य वद गर्जनरूपं शब्दं कुरु । येन गर्जनेन वृष्टिद्वाराऽस्माकं बलं संपद्यते तथा गर्जनं कुरु । हे ऋत्विक्समूह! आभिर्गीर्भिर्वैदिकीभिः स्तुतिभिः पर्जन्यदेवं स्तुहि । नमसा विवास सर्वो जनो नमस्कारेण परिचर्यां चकार । कनिक्रदत् पुनःपुनर्गर्जन्वृषभो वर्षणक्षमो जीरदानुरस्मज्जीवनहेतुरयं पर्जन्यः ओषधीषु गर्भं रेतः गर्भकारणबीजं दधातु स्थापयतु ॥

[15]अथ पञ्चदशीमाह—यः पर्जन्य ओषधीनां गवामर्वतामश्वानां पुरुषीणां मनुष्यस्त्रीणां च गर्भं कृणोति करोति स पर्जन्योऽभीष्टं साधयत्विति शेषः ॥

पुरुषीणाम् । [16] तस्मा इदास्ये हविः । जुहोता मधुमत्तमम् । इडां नस्संयतं करत् । [17] तिस्रो यदग्ने शरदस्त्वामित् । शुचिं घृतेन शुचयस्सपर्यन् । नामानि चिद्दधिरे यज्ञियानि । असूदयन्त तनुव-

---

[16]अथ षोडशीमाह—यः पर्जन्यदेवः गर्भप्रदः तस्मा इत् तस्यैव पर्जन्यस्य देवस्य आस्ये मुखे हे ऋत्विजः! हविर्जुहोत । कीदृशं हविः? मधुमत्तममतिशयेन मधुरम् । स च पर्जन्योऽस्माकं संयतं सम्यङ्नियतमिडामन्नं करत् करोतु । पर्जन्यायेत्यादिमन्त्रचतुष्टयं पर्जन्यदेवताके कर्मणि द्रष्टव्यम् । अत एव सूत्रकारश्चातुर्मास्येष्वन्वारम्भणीयेष्टौ पर्जन्यचरुं विधाय तत्र पर्जन्यायेति मन्त्रद्वयं विनियुक्तवान् ॥

[17]अथ सप्तदशीमाह—हे अग्ने! यद्यस्मात्कारणात्तिस्रः शरदः त्रीन्संवत्सरान् शुचयः शुद्धा मरुतः शुचिं त्वामित् शुद्धात्मानं त्वामेव घृतेन सपर्यन् परिचरन् । तस्मात्कारणाद्यज्ञियानि यज्ञयोग्यानि नामानि चित् दधिरे नामान्यपि धृतवन्तः । तानि च मरुतां नामान्यन्यत्राऽऽम्नातानि 'ईदृङ्चान्यादृङ्च'* इत्यादीनि । ते च मरुतः सुजातास्तनुवः सुष्ठु समुत्पन्नाः स्वकीयास्तनूः असूदयन्त अन्तरिक्षे प्रेरितवन्तः । अयं मन्त्र आग्नेये कर्मणि द्रष्टव्यः ॥

[18]अथाष्टादशीमाह—शुनो वायुः सीर आदित्यः । हे शुनासीरौ! नोऽस्मदीयमिमं यज्ञं मिमिक्षतं घृतादिद्रव्येण सेक्तुमिच्छतम् ।

---

* तै. सं. १-८-१३.

स्सुजाताः ॥ ४१ ॥ [18]इन्द्रश्च नश्शुनासीरौ । इमं यज्ञं मिमिक्षतम् । गर्भं धत्तꣳ स्वस्तये । [19]ययोरिदं विश्वं भुवनमाविवेश । ययोरानन्दो निहितो महश्च । शुनासीरावृतुभिस्संविदानौ । इन्द्रवन्तौ हविरिदं जुषेथाम् । [20]आ घा ये अग्निमिन्धते । स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा ।

---

भवत्स्वामी योऽयमिन्द्रः सोपि सेक्तुमिच्छतु । तथा शुनासीरौ युवां स्वस्तये क्षेमाय गर्भं धत्तं संपादयतम् ॥

[19]अथैकोनविंशीमाह—ययोः शुनासीरयोरिदं विश्वं भुवनमाविवेश प्रविष्टमाश्रितमित्यर्थः । तथा ययोः शुनासीरयोरानन्दो निहितोऽवस्थितो महश्च तेजोऽप्याश्रितम् । तौ शुनासीरावृतुभिर्वसन्तादिदेवैस्सह संविदानौ ऐकमत्यं गताविन्द्रवन्ताविन्द्रेण युक्तौ युवामिदं हविर्जुषेथाम् । एतच्चोभयं शुनासीरीये कर्मणि द्रष्टव्यम् ॥

[20]अथ विंशीमाह—ये यजमाना ऋत्विज आ समन्तादग्निमिन्धते प्रज्वलयन्ति । घशब्दः पादपूरणार्थः प्रसिद्ध्यर्थो वा । प्रसिद्धा ऋत्विज इत्यर्थः । तथाऽऽनुषक् अनुषक्तं बर्हिर्ये स्तृणन्ति । तथा येषां यजमानादीनां युवा नित्यतरुणः इन्द्रः सखा सखिवत्सुलभो भवति, ते यजमानादयः कर्मानुतिष्ठन्त्विति शेषः । अनेन मन्त्रेण सुत्यादिने महारात्रे बुध्वा सदोऽभिमृशेत् । तथा च सूत्रकारेणोक्तम्—'आघा ये अग्निमिन्धत इति सदः' इति ॥

[21] अग्न इन्द्रश्च मेदिना । हथो वृत्राण्यप्रति । युवꣳ हि वृत्रहन्तमा । [22] याभ्याꣳ सुवरजयन्नग्र एव । यावातस्थतुर्भुवनस्य मध्ये । प्रचर्षणी वृषणा वज्रबाहू । अग्नीइन्द्रा वृत्रहणा हुवे वाम् ॥५०॥

मन इन्द्रो गविष्टिषु तन्तुं गर्भꣳ सुजातास्सखा सप्त च ॥५॥

[21]अथैकविंशीमाह—हे अग्ने! त्वं चेन्द्रश्च मेदिना मेदस्वन्तौ बलवन्तौ वृत्राणि शत्रूनप्रति प्रतिकूलत्वं यथा न भवति तथा हथो मारयथः । हि यस्मात्कारणाद्युवं युवामुभौ वृत्रहन्तमा अतिशयेन शत्रुघातिनौ ॥

[22]अथ द्वाविंशीमाह—याभ्यामिन्द्राग्निभ्यां अग्र एव इतः पूर्वमेव अनुगृहीता यजमानाः सुवरजयन् स्वर्गं जितवन्तः । यौ चेन्द्राग्नी भुवनस्य मध्ये सर्वत्र आतस्थतुः, आगत्य स्थितौ । ताविन्द्राग्नी वां युवां हुवे अस्मिन्कर्मण्याह्वयामि । कीदृशौ? प्रचर्षणी प्रकृष्टैश्चर्षणीभिर्मनुष्यैर्यागकर्तृभिर्युक्तौ वृषणा कामानां वर्षयितारौ वज्रबाहू हस्ते वज्रं धारयन्तौ वृत्रहणा वैरिघातिनौ । एतच्चोभयमैन्द्राग्ने कर्मणि द्रष्टव्यम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः.

[1]उत नः प्रिया प्रियासु। सप्तस्वसा सुजुष्टा। सरस्वती स्तोम्याऽभूत्। [2]इमा जुह्वाना युष्मदा नमोभिः। प्रति स्तोमꣳ सरस्वति जुषस्व। तव शर्मन्प्रियतमे दधानाः। उपस्थेयाम शरणं न वृक्षम्। [3]त्रीणि पदा विचक्रमे। विष्णुर्गोपा अदा-

[1]षष्ठेऽनुवाके प्रथमामृचमाह—इयं सरस्वती स्तोम्या स्तोत्रयोग्याऽभूत्। कीदृशी? प्रियासु देवतासु मध्येऽत्यन्तं प्रिया उत अपि च नोऽस्माकं विशेषतः प्रिया, सप्तसंख्याका ब्राह्मीमाहेश्वरीत्याद्या देवताः स्वसारो भगिन्यो यस्याः सा सप्तस्वसा। सुजुष्टा सुष्ठु सेविता॥

[2]अथ द्वितीयामाह—हे सरस्वति! युष्मत् युष्मान् त्वामित्यर्थः। इमे यजमाना नमोभिर्नमस्कारैस्सहाजुह्वानाः सर्वतो होममाह्वानं वा कुर्वन्तो वर्तन्ते। स्तोमं त्वदीयं स्तोत्रं प्रति प्रातिस्विकमसाधारणं जुषस्व सेवस्व। तव प्रियतमेऽतिप्रिये वृक्षवदुपकारके शर्मन् शरणे गृहे दधानाः हविर्धारयन्तः वयमुपस्थेयाम उपस्थानं करवाम। एतदुभयं सारस्वते कर्मणि द्रष्टव्यम्। तथा "सारस्वतीं मेषीमालभेत" * इत्यस्य पशोः सूत्रे प्रतीकमाम्नातम्—"इमा जुह्वाना यस्ते स्तनः" † इति॥

[3]अथ तृतीयामाह—गोपाः सर्वस्य जगतो रक्षकः अदाभ्यः केनाप्यतिरस्कार्यो विष्णुः कृत्स्नेऽपि जगति त्रीणि पदा विचक्रमे पदत्रयं निदधौ। किं कुर्वन्? ततस्तस्मात्पदत्रयात् धर्माणि धारयितव्यानि सर्वाणि वस्तूनि धारयन्॥

* सं. २-१-२. † ब्रा. २-८-२.

भ्यः । ततो धर्माणि धारयन् ॥५१॥ [4]तदस्य प्रियमभि पाथो अश्याम् । नरो यत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था । विष्णोः पदे परमे मध्व उत्सः । [5]क्रत्वा दा अस्तु श्रेष्ठः । अद्य त्वा वन्वन्त्सुरेक्णाः । मर्त आनाश सुवृक्तिम् । [6]इमा ब्रह्म ब्रह्मवाह । प्रिया त आ बर्हि-

[4]अथ चतुर्थीमाह—देवयवो देवानिच्छन्तो नरो यजमाना यत्र भागीरथीजले मदन्ति हृष्यन्ति । अस्य विष्णोः प्रियं तत्पाथो भागीरथीजलं अभ्यश्यां अभितो व्याप्तवान् । उरुक्रमस्य विस्तीर्णपादस्य विष्णोः परमे पदे तृतीये पादे बन्धुः संबद्धो मध्वो मधुर उत्सो भागीरथीप्रवाह इत्था हि एवंविधः । हिशब्दः सर्वलोकप्रसिद्धिद्योतनार्थः ॥

[5]अथ पञ्चमीमाह—क्रत्वा क्रतौ कर्मणि दा हविषो दाता श्रेष्ठः सर्वेषां मध्ये प्रशस्तः अस्तु भवतु। हे अग्ने? अद्यास्मिन्कर्मणि त्वां वन्वन् याचमानः सुरेक्णाः शोभनधनो मर्तो मनुष्यः सुवृक्तिं सुष्ठु दारिद्र्यवर्जनं आनाश आनशे व्याप्नोति । अयं मन्त्र आग्नेये कर्मणि द्रष्टव्यः ॥

[6]अथ षष्ठीमाह—ब्रह्माणि वेदान्वहतीति ब्रह्मवाहो वेदैरविनाभूतः सूर्यः । अत एवान्यत्राम्नातम्—" वेदैरशून्यस्त्रिभिरेति सूर्यः "* इति । तादृश! सूर! हे सूर्य! इमा ब्रह्म इमानि ब्रह्माणि वेदवाक्यानि कर्मण्यस्मिन्नुच्चार्यमाणानि ते प्रिया तव प्रियाणि । अतस्त्वं बर्हिरा-

* आ. ३-१२-९.

स्सींद। वीहि सूर पुरोडाशम् ॥५२॥ [7]उप नस्सूनवो गिरः। शृण्वन्त्वमृतस्य ये। सुमृडीका भवन्तु नः। [8]अद्या नो देव सवितः। प्रजावत्सावीस्सौभगम्। परा दुष्ष्वप्नियꣳ सुव। [9]विश्वानि देव सवितः। दुरितानि परासुव। यद्भद्रं तन्म आसुव। [10]शुचिमर्कैर्बृहस्पतिम् ॥५३॥ अध्वरेषु नम-

सीद यज्ञमागच्छ पुरोडाशं वीहि भक्षय। अयं मन्त्रः सौर्यकर्मणि द्रष्टव्यः ॥

[7]अथ सप्तमीमाह—अमृतस्य सूनवः क्षीरस्य पुत्रा ये मरुतः सन्ति। तथा च ब्राह्मणमाम्नातम्—"पृश्नियै वै पयसो मरुतो जाताः" * इति। हे मरुतः! नोऽस्मदीया गिरः स्तुतिरूपा वाच उपशृण्वन्तु। ततो नोऽस्माकं सुमृडीकाः सुखहेतवो भवन्तु। अयं मन्त्रः मारुते कर्मणि द्रष्टव्यः ॥

[8]अथाष्टमीमाह—हे सवितर्देव! अद्यास्मिन्कर्मणि नोऽस्माकं प्रजावत् पुत्रपौत्राद्युपेतं सौभगं सौभाग्यं सावीः अनुजानीहि। दुष्ष्वप्नियं दुस्स्वप्ननिमित्तं दोषं परासुव विनाशय ॥

[9]अथ नवमीमाह—हे सवितर्देव! विश्वानि दुरितानि परासुव विनाशय। यद्भद्रं कल्याणमस्ति तन्मे मम आसुव सर्वतोऽनुजानीहि। एतदुभयं सावित्रे कर्मणि द्रष्टव्यम् ॥

[10]अथ दशमीमाह—हे ऋत्विजः! शुचिं शुद्धं बृहस्पतिमध्वरेषु यागेषु अर्कैरर्चनैस्सह नमस्यत नमस्कुरुत। तस्य बृहस्पतेः प्रसादादह-

* ब्रा. २-२-११.

स्यत । अनाम्योज आचके । [11]याऽधारयन्त देवा सुदक्षा दक्षपितारा । असुर्याय प्रमहसा । [12]स इ-त्क्षेति सुधित ओकसि स्वे । तस्मा इडा पिन्वते विश्वदानीं । तस्मै विशस्स्वयमेवानमन्ति । य-स्मिन्ब्रह्मा राजनि पूर्व एति । [13]सकूतिमिन्द्र स-

मनामि कस्याप्यवशं ओजो बलमाचके सर्वतः प्राप्तवानि । अयं मन्त्रो बार्हस्पत्ये कर्मणि द्रष्टव्यः ॥

[11]अथैकादशीमाह—देवा सर्वेऽपीन्द्रादयो देवाः सुदक्षा सुष्ठु दक्षौ कुशलौ दक्षपितारा दक्षस्य कर्मणः पालकौ यौ मित्रावरुणौ प्रमहसा प्रकृष्टेन तेजसा असुर्याय असुरसंबन्धिने विनाशाय अधार यन्त चित्ते धृतवन्तो मित्रावरुणावेवासुरान्विनाशयत इत्येवं निश्चित-वन्तः । अयं मन्त्रो मैत्रावरुणशास्त्रेऽन्तर्भावनीयः ॥

[12]अथ द्वादशीमाह—यस्मिन् राजनीन्द्रे ब्रह्मा बृहस्पतिः पूर्व एति पुरतो गच्छति स इत् स एवेन्द्रो राजा स्वे स्वकीये ओकसि स्थाने सुधितः सुखं प्राप्तस्सन् क्षेति सीदति । तस्मै राज्ञे इडा धेनुर्विश्वदानी सर्वदा पिन्वते प्रीतिं जनयति । तस्मै राज्ञे विशः प्रजाः स्वयमेव आ-नमन्ति । अत्र राजशब्देनेन्द्रो मनुष्यो वा विवक्षितव्यः । अयं मन्त्रो बार्हस्पत्ये कर्मणि द्रष्टव्यः ॥

[13]अथ त्रयोदशीमाह—हे इन्द्र ! कनात्काभां कनकवद्भासमानां रूपवतीं कन्यां नोऽस्मदर्थमाभर आनय । कीदृशीं सकूतिं कूतिराकूतिः संकल्पस्तेन सहितां अस्मास्वनुरक्तामित्यर्थः । सच्युतिं च्युतिः क्षरणं

च्युतिम् । सच्युतिं जघनच्युतिम् ॥५४॥ कना-
त्काभां न आभर । प्रयफस्यन्निव सक्थ्यौ । [14]वि
न इन्द्र मृधो जहि । कनीखुनदिव सापयन् । अ-
भि नस्सुष्टुतिं नय । [15]प्रजापतिस्स्त्रियां यशः ।
मुष्कयोरदधात्सपम् । कामस्य तृप्तिमानन्दम् । त-

---

वीर्यस्यन्दनं तेन सहिताम् । अनुरागातिशेयन हि सहसा वीर्यं स्यन्दति। एतदेव पुनः सच्युतिमित्यनूद्य जघनच्युतिमित्यनेन व्याख्यायते । आहरणे दृष्टान्तः—सक्थ्यौ प्रयफ्स्यन्निव यथाऽत्यन्तं कामुक ऊरुद्वयं प्रति यब्धुमुद्युक्तोऽत्यन्तादरेण स्त्रियमाहरति तद्वत् ॥

[14]अथ चतुर्दशीमाह—हे इन्द्र! मृधः अस्मद्विवाहप्रतिबन्धकान् शत्रून् विजहि विविधं मारय । कनीखुनदिव सापयन् यथा पूर्वं भूमौ निक्षिप्तं द्रव्यमतिशयेन खनित्वा स पुरुषः स्वपुत्रं प्रत्यानीय संयोजयति तद्वत्त्वमपि कन्यारत्नमस्मासु संयोजयन् नोऽस्मदीयां सुष्टुतिं शोभनां कीर्तिं अभि सर्वतः नय प्रापय । एतच्च मन्त्रद्वयं कन्यालाभार्थे कर्मणि विनियोज्यम् ॥

[15]अथ पञ्चदशीमाह—योऽयं प्रजापतीर्जगतः स्रष्टा स्त्रियां यशः भार्यायां गर्भरूपेण यशसः कारणं यद्वीर्यं तत् मुष्कयोरण्डयोः सपं सम्बन्धं अदधात् स्थापितवान् । तस्यैव स्थापितस्य विशेषणानि—कामस्य तृप्तिं तृप्तिकारणम् । तस्मिन् गलिते सत्येव योषिन्मे भूयादिति कामो निवर्तते तन्निवृत्तिरेव तृप्तिः । अत आनन्दं सुखकारणम् । हेऽग्ने इह विवाहे कर्मणि मां तस्य वीर्यस्य सुखं भाजय प्रापय ॥

स्याग्ने भाजयेह मा। [16]मोदः प्रमोद आनन्दः॥ मुष्कयोर्निहितस्सर्पः। सृत्वेव कामस्य तृप्याणि। दक्षिणानां प्रतिग्रहे। [17]मनसश्चित्तमाकूतिम्। वाचस्सत्यमशीमहि। पशूनाᳪ रूपमन्नस्य। यशश्श्रीश्श्रयतां मयि। [18]यथाऽहमस्या अतृपᳪ स्त्रियै

[16] अथ षोडशीमाह—मोदादयस्त्रयस्तारतम्येनावस्थिताः सुखावान्तरविशेषाः। वार्ताजन्यः सुखविशेषो मोदः। दर्शनजन्यः प्रमोदः। भोगजन्य आनन्दः। तेषां सर्वेषां सपः समवायहेतुः मुष्कयोर्निहितः स्थापितः। दक्षिणानां प्रतिग्रहे सति कामस्य सृत्वेव कामितार्थं प्राप्येव तृप्याणि तृप्तो भवानि। अयमर्थः—ऋत्विजां दक्षिणाकाले कन्याऽपि दीयते। अत एवापस्तम्बधर्मेषु स्मर्यते—"दैवे यज्ञतन्त्रे ऋत्विजे प्रतिपादयेत्" इति। दैवे विवाहे चिकीर्षिते सति यज्ञप्रयोगमध्ये ऋत्विजे कन्यां समर्पयेत्। आश्वलायनोऽपि दक्षिणारूपायाः कन्याया अभिमर्शनं विधत्ते—"अभिमृशेदप्राणि कन्यां च" इति। तस्माद्दक्षिणानां प्रतिग्रहे सति कन्यां प्राप्तस्य यादृशी तृप्तिस्तादृशी तृप्तिर्भवतीति॥

[17] अथ सप्तदशीमाह—मनसः संबन्धि चित्तं विज्ञानमाकूतिं संकल्पं वाचः संबन्धि सत्यवदनं च अशीमहि प्राप्नुयाम। तथा पशूनां गवादीनां रूपमनेकविधं स्वरूपं अन्नस्य संबन्धि यशः कीर्तिं च अशीमहि। मयि श्रीर्धनसमृद्धिः श्रयतां सेवताम्॥

[18] अथाष्टादशीमाह—अस्यै अस्यां स्त्रियां विवाहेन लब्धायां

पुमान् । यथा स्त्री तृप्यति पुंसि प्रिये प्रिया । एवं भगस्य तृप्याणि ॥ ५६ ॥ यज्ञस्य काम्यः प्रियः । [19]ददामीत्यग्निर्वदति । तथेति वायुराह तत् । हन्तेति सत्यं चन्द्रमाः । आदित्यस्सत्यमोमिति । [20]आपस्तत्सत्यमाभरन् । यशो यज्ञस्य दक्षिणाम् ।

---

स्त्रियां पुमानहं यथाऽतृपं येन प्रकारेण तृप्तोऽस्मि, यथा च प्रिया स्त्री प्रिये पुंसि तृप्यति, एवमहं भगस्य तृप्याणि सौभाग्येन तृप्तो भवानि । कीदृशोऽहं? यज्ञस्य काम्यः यज्ञो हि स्वानुष्ठानाय मां कामयते । अत एव यज्ञस्याहं प्रियः ॥

[19] अथैकोनविंशीमाह—एतां कन्यामहं ददामीत्येवमग्निर्ब्रूते । तत्तथाऽस्त्विति वायुरप्याह । चन्द्रमास्तु तत्सत्यं हन्त ममायं हर्ष इत्याह । आदित्यः सत्यमोमिति अवश्यमङ्गीकरोमीति ब्रूते ॥

[20] अथ विंशीमाह—यज्ञस्य दक्षिणां यज्ञसंबन्धिदक्षिणारूपं यशः यशसः कारणं तत्कन्यारूपं वस्तु आपः सत्यमाभरन् अब्देवता अवश्यमानयन् । तस्मादसौ पुत्रोत्पादनरूपो मे कामः समृध्यतां समृद्धो भवतु । प्रजापतिरित्यादिमन्त्रषट्कस्य कन्याप्रतिग्रहे विनियोगमाह बोधायनः—“अथ यदि दक्षिणाभिस्सह दत्ता स्यात्तत्र वरान्प्रहिणुयात्तां प्रतिगृह्णीयात्प्रजापतिस्स्त्रियां यश इत्येताभिष्षाड्भिरनुष्टुप्छन्दसम्” इति । आपस्तम्बमतानुसारिणस्तु वध्वाः शिरसि तण्डुलप्रक्षेपे विनियोगमाहुः ॥

असौ मे कामस्समृद्ध्यताम् । [21]न हि स्पशमविदन्नन्यमस्मात् । वैश्वानरात्पुर एतारमग्नेः ॥५७॥ अथैममन्थन्नमृतममूराः । वैश्वानरं क्षैत्रजित्याय देवाः । [22]येषामिमे पूर्वे अर्मास आसन् । अयूपास्सद्म विभृता पुरूणि । वैश्वानर त्वया ते नुत्ताः । पृथिवीमन्यामभितस्थुर्जनासः । [23]पृथिवीं मातरं महीम् । अन्तरिक्षमुपब्रुवे । बृहतीमूतये दिवम् ।

[21]अथैकविंशीमाह—वैश्वानरनामकादस्मादग्नेरन्यं देवं स्पशं रक्षसां बाधकं पुर एतारं देवानां पुरतो गन्तारं न ह्यविदन् देवाः सर्वथा नालभन्त । अथानन्तरममूरा अमूढा देवाः क्षेत्रजित्याय कर्मानुष्ठानाङ्गक्षेत्रजयाय तन्मार्गजयाय वा अमृतं केनाप्यतिरस्कृतं ई वैश्वानरमिमं वैश्वानराख्यमग्निममन्थन् अरण्योर्मथितवन्तः ॥

[22]अथ द्वाविंशीमाह—येषां जनानां यजमानानां अयूपा निमोहरहिता इमे वैश्वानरस्य मन्थितारो देवाः पूर्वे अर्मासः पूर्वभाविनो गन्तार आसन् । पुरूणि सद्म बहूनि यज्ञगृहाणि च येषां यजमानानां विभृतानि विशेषेण संपादितानि, ते जनासो जना यजमाना हे वैश्वानर! त्वया नुत्ताः प्रेरितास्सन्तः अन्यां कांचिद्यज्ञयोग्यां पृथिवीमभितस्थुः अभिगम्यावस्थिताः । एतश्चोभयं वैश्वानरदेवत्ये कर्मणि द्रष्टव्यम् ॥

[23]अथ त्रयोविंशीमाह—इमां पृथिवीं महीं मातरं मातृसमानामहमुपब्रुवे । यथा माता पालयति तथा त्वं पालयेति ब्रुवे प्रार्थये ।

[24]विश्वं बिभर्ति पृथिवी ॥५८॥ अन्तरिक्षं विपप्रथे । दुहे द्यौर्बृहती पयः । [25]न ता नशन्ति न दभाति तस्करः । नैना अमित्रो व्यथिरादधर्षति । देवाश्श्च याभिर्यजते ददाति च । ज्योगित्ताभिस्सचते गोपतिस्सह । [26]न ता अर्वा रेणुककाटो-

अन्तरिक्षमप्यवकाशदानाय प्रार्थये । बृहतीं प्रौढां दिवमपि ऊतये वृष्टिप्रदानेन रक्षणाय प्रार्थये ॥

[24]अथ चतुर्विंशीमाह—इयं पृथिवी विश्वं सर्वं जगद्बिभर्ति धारयति पोषयति च । अन्तरिक्षमप्यवकाशप्रदानाय विपप्रथे विस्तीर्णमभूत् । बृहती द्यौः पयो दुहे जलं दोग्धि । एतच्च मन्त्रद्वयं लोकेष्टौ द्रष्टव्यम् । तथाचाश्वलायन आह—“लोकेष्टिः पृथिव्यन्तरिक्षं द्यौरिति देवताः पृथिवीं मातरम्” इति ॥

[25]अथ पञ्चविंशीमाह—याभिर्गोभिर्देवानुद्दिश्य यजते च यागमपि करोति, ददाति च गवां दानमपि करोति, ता गावो न नशन्ति नैव नाशं प्राप्नुवन्ति । तस्करश्चोरोऽपि ता गा न दभाति न हिनस्ति । व्यथिर्व्यथाहेतुः अमित्रः शत्रुरप्येना गा नादधर्षति नैव धृष्टो भवति ताडयितुं प्रगल्भो न भवति । ताभिर्गोभिस्सह गोपतिर्गवां स्वामी ज्योगित् चिरमेव सचते स्वर्गे समवेतो भवति ॥

[26]अत षड्विंशीमाह—रेणुककाटः रेणोर्भूधूलेः ककाट उत्थापकः तीव्रगतियुक्त इत्यर्थः । अर्वा तादृशोऽश्वः ताः गा नाश्नुते न व्याप्नोति, अश्वादपि शीघ्रगतय इत्यर्थः । अत एव ता अभि एतादृशीर्गा अभि-

अश्नुते। न सꣳस्कृतत्रमुपयन्ति ता अभि। उरुगायमभयं तस्य ता अनु। गावो मर्त्यस्य विचरन्ति यज्वनः ॥५१॥ [27]रात्री व्यख्यदायती। पुरुत्रा देव्यक्षभिः। विश्वा अधि श्रियोऽधित। [28]उप ते गा इवाकरम्। वृणीष्व दुहितर्दिवः। रात्री

लक्ष्य संस्कृतत्रं संस्कारेण युक्तं रक्षार्थं दण्डं नोपयन्ति गोपाला हस्ते दण्डं न स्वीकुर्वन्ति। शक्त्याधिक्येनाश्वादपि शीघ्रं गच्छन्तीनां गवां ताडनार्थो दण्डो नापेक्षितः। यज्वनो यागशीलस्य तस्य मर्त्यस्य मनुष्यस्य ता गाव उरुगायं विस्तीर्णगतियोग्यं भयरहितं स्थानं प्राप्य विचरन्ति विस्रम्भेण चरन्ति। एतच्च मन्त्रद्वयं 'ब्रह्मण ऋषभम्' इति विहितस्य पशोरुपहोमार्थे गोसूक्तेऽन्तर्भूतम्। अतएव तत्र प्रतीकद्वयमाम्नातम्—"न ता नशन्ति, न ता अर्वा"* इति ॥

[27]अथ सप्तविंशीमाह—पुरुत्रा पुरुषु बहुषु दिवसेष्वायती पुनः-पुनरागच्छन्ती रात्री देवी राज्यभिमानिनी देवता अक्षभिः सर्वेषां प्राणिनां चक्षुर्भिः व्यख्यत् विख्याताऽभूत्। अन्धकारं ज्योत्स्नां वा दृष्ट्वा रात्रिरियमिति निश्चीयते। सा च देवी विश्वाः श्रियः सर्वाः संपदोऽधिष्ठाय अधित ॥

[28]अथाष्टाविंशीमाह—दिवो दुहितः द्युलोकदेवतायाः पुत्रि! हे रात्रि! गा इव गोभिरुपलक्षितान् गोमहिषादीन् सर्वानपि पशून् ते उपाकरं तव समीपे कृतवानस्मि। अतो वृणीष्व रक्षार्थं सर्वानपि

* मो. २८८.

स्तो॒मं न जि॒ग्युषीं । २९दे॒वीं वाच॑मजनयन्त दे॒वाः। तां वि॒श्वरू॑पाः प॒शवो॑ वदन्ति । सा नो॑ म॒न्द्रेष॒मू॒र्जं दुहा॑ना । धे॒नुर्वाग॒स्मानुप॑ सुष्टु॒तैतु ॥ ६० ॥
३०यद्वाग्वद॒न्त्यविचेत॒नानि॑ । रा॒ष्ट्री दे॒वानां॑ निष॒सा॒द॑ म॒न्द्रा । चत॑स्र॒ ऊर्जं॑ दुदु॒हे॒ पयाꣳ॑सि । क्व॑ स्वि-

गवादीन् स्वीकुरु । रात्रौ हि पशवः शालासु रक्ष्यन्ते । इयं रात्री देवी स्तोमं न अस्माभिः कृतं स्तोत्रमपि जिग्युषी जितवती वशीकृतवती । एतच्च मन्त्रद्वयमरिष्टदर्शनेषु होमेषु विनियोक्तव्यम् । तथा च बह्वृचा आरण्यकाण्डे संहितोपनिषदि प्रत्यक्षाणि स्वप्नगतानि चारिष्टान्युपन्यस्यानन्तरमिदमामनन्ति "स यद्येतेषां किंचित्पश्येत् । उपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रिसूक्तेन प्रत्यृचं हुत्वा" इति ॥

[29]अथैकोनत्रिंशीमाह—देवास्सर्वे वाचं देवीमजनयन्त । तां वाचं विश्वरूपाः द्विपाच्चतुष्पात्तदवान्तरभेदेन बहुविधाः पशवः स्वस्वभाषारूपेण वदन्ति । सा वाग्रूपा धेनुः नः अस्मदर्थमिषमन्नं ऊर्जं क्षीरादिरसं दुहाना संपादयन्ती सुष्टुता अस्माभिः सुष्ठु वैदिकैः स्तोत्रैः स्तुता मन्द्रा हृष्टा सती अस्मान्प्रत्यागच्छतु ॥

[30]अथ त्रिंशीमाह—यद्वाक् या वाग्देवता अविचेतनानि अचेतनसदृशान्मूकान्प्राणिनो वदन्तीं अभिवदनक्षमान्कुर्वती । देवानां सर्वेषां राष्ट्री राष्ट्रपदा मन्द्रा हृष्टा सती निषसाद अस्मदीये कर्मण्युपविष्टा । यस्या वाग्देव्याः प्रसादात् चतस्रो दिग्देवता

वस्याः परमं जगाम । [31]गौरी मिमाय सलिलानि तक्षती । एकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी । सहस्राक्षरा परमे व्योमन् । [32]तस्याꣳ समुद्रा अधि वि क्षरन्ति । तेन

ऊर्जं क्षीरादिरसद्रव्यं पयांसि जलानि च दुदुहे दुहन्ति संपादयन्ति । अस्या वाग्देव्याः परमं पदं मनुष्यः क स्वित् जगाम कुत्र वा प्राप्तवान् तदीयस्थानं प्राप्तुं न कोऽपि क्षम इत्यर्थः । इदं च मन्त्रद्वयं "वाचे वेहतम्" इति विहिते पशौ विनियोक्तव्यम् । अत एव तदीये स्तोत्रे प्रतीकद्वयमाम्नातम्—"देवीं वाचमजनयन्त, यद्वाग्वदन्ती"* इति ॥

[31]अथैकत्रिंशीमाह—परमे व्योम्नि ब्रह्मणि प्रतिष्ठिता गौरी गौरवर्णा वाग्देवी सृष्ट्युपक्रमे सलिलसदृशानि वर्णपदवाक्यानि तक्षती सृजन्ती मिमाय शब्दमकरोत् । कथम्? प्रथमं प्रणवात्मनैकपदी ब्रह्मणो मुखान्निर्गता । अनन्तरं व्याहृतिरूपेण सावित्रीरूपेण च द्विपदी । ततो वेदचतुष्टयरूपेण चतुष्पदी । ततो वेदाङ्गैः षड्भिः पुराणधर्मशास्त्राभ्यां चाष्टापदी । ततो मीमांसान्यायसांख्ययोगपाञ्चरात्रपाशुपतायुर्वेदधनुर्वेदगान्धर्वैर्नवपदी । ततोऽनन्तैर्वाक्यसंदर्भैः सहस्राक्षरा अनन्तविधा बभूवुषी संपन्ना ॥

[32]अथ द्वात्रिंशीमाह—तस्यां वाग्देवतायामधिश्रिताः समुद्राः समुद्रसमाना वेदाः विक्षरन्ति विविधं प्रवर्तन्ते । तेन प्रवर्तनेन

* ऋ. १ ८-८.

जीवन्ति प्रदिशश्चतस्रः ॥६१॥ ततः क्षरत्यक्षरम्। तद्विश्वमुपजीवति। [33]इन्द्रा सूरा जनयन्विश्वकर्मा। मरुत्वाꣳ अस्तु गणवान्थ्सजातवान्। अस्य स्नुषा श्वशुरस्य प्रशिष्टिम्। सपत्ना वाचं मनसा उपासताम्। [34]इन्द्रस्सूरो अतरद्रजाꣳसि। स्नुषा स-

चतस्रः प्रदिशः चतुर्विधाः प्राच्यादिदिगवस्थिताः प्राणिनो जीवन्ति वेदोक्तमनुष्ठायैहिकमामुष्मिकं च प्राप्नुवन्ति। ततो वेदादेवाक्षरं प्रणवात्मकं प्रवर्तते। तदेतदक्षरं विश्वमुपजीवति सर्वे जनाः प्रणवानुष्ठानेन स्वापेक्षितं फलं प्राप्नुवन्ति। एतच्च मन्त्रद्वयं "वाचे वेहतम्' इत्यत्रैवोपहोमार्थं द्रष्टव्यम् ॥

[33]अथ त्रयस्त्रिंशीमाह—इन्द्रा परमैश्वर्ययुक्तः सूरा सूर्यो विश्वकर्मा सर्वव्यापारयुक्तो विश्वं जनयन् मरुत्वान् मरुद्भिर्युक्तः गणवान् वसुरुद्रादित्यगणैस्सहितः सजातवान् सजातैः स्वेन समानजन्मभिः सर्वैः सहितश्च सन् यजमानस्यानुग्राहकोऽस्तु। ततश्चास्य यजमानस्य श्वशुरस्थानीयस्य सपत्नाः शत्रवः स्नुषा स्नुषावन्निलीयमानास्सन्तः प्रशिष्टिं प्रशासनरूपां वाचं मनसोपासतां मनःपूर्वं सेवन्ताम् ॥

[34]अथ चतुस्त्रिंशीमाह—इन्द्रः परमैश्वर्ययुक्तः सूरः सूर्यो रजांसि रञ्जकानि प्राणिजातानि अतरत् तीर्णवान् वशीकृतवानित्यर्थः। तत्प्रसादाद्यजमानस्य सपत्नाः शत्रवः स्नुषावत्स्वाधीनाः सन्तु। अयं तु यजमानः श्वशुरोऽस्तु श्वशुरवत्स्वामी भवतु। स्वामि-

पत्नाश्वशुरोऽयमस्तु । अयꣳ शत्रूञ्जयतु जर्हृषाणः । अयं वाजं जयतु वाजसातौ । [35]अग्निः क्षत्रभृदनिभृष्टमोजः । सहस्रियो दीप्यतामप्रयुच्छन् । विभ्राजमानस्समिधान उग्रः । आऽन्तरिक्षमरुहदगन्द्याम् ॥ ६२ ॥

धारयन्पुरोडाशं बृहस्पतिं जघनच्युतिमानन्दो भगस्य तृप्याण्यग्नेः पृथिवी यज्वन एतु प्रदिशश्चतस्रो वाजसातौ चत्वारि च ॥ ६ ॥

त्वादेवायं यजमानो जर्हृषाणोऽत्यन्तं हृष्यन् शत्रून् जयतु । पुनरप्ययं यजमानो 'वाजसातौ स्वकीयेभ्योऽन्नदाने निमित्ते सति वाजं नयतु वैरिसंबन्ध्यन्नं वशं करोतु । एते ऋचौ स्नुषाश्वशुरीयायामिष्टौ याज्यानुवाक्ये ॥

[35]अथ पञ्चत्रिंशीमाह—अयमग्निः क्षत्रभृत् बलं धारयन् अनिभृष्टमोजः केनाप्यतिरस्कृतं बलं अस्मभ्यं प्रयच्छन्निति शेषः । सहस्रियः देवसहस्रेण संमितः अप्रयुच्छन् प्रमादमकुर्वन् दीप्यताम् । विभ्राजमानः विशेषेण दीप्यमानः समिधानः समिद्भिर्युक्त उग्रः तीव्रस्सन् अन्तरिक्षमाऽरुहत् आरोढुमर्हति । ततो द्यामगन् दिवं गच्छतु । अयं मन्त्र आग्नेये कर्मणि द्रष्टव्यः ॥

इति तैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे
चतुर्थप्रपाठके षष्ठोऽनुवाकः.

[1]वृषाऽस्यंशुर्वृषभाय गृह्यसे । वृषाऽयमुग्रो नृचक्षसे । दिव्यः कर्मण्यो हितो बृहन्नाम । वृषभस्य या ककुत् । [2]विषूवान् विष्णो भवतु । अयं यो मामको वृषा । अथो इन्द्र इव देवेभ्यः । वि

[1]सप्तमे प्रथमामृचमाह—अंशुर्लतात्मकः सोमस्त्वं वृषाऽसि वीर्यवानसि । स त्वं वृषभाय श्रेष्ठायेन्द्रायाभिषवार्थं गृह्यसे । अयमुपांशुसवनाख्य उग्रः कठिनो ग्रावा वृषा वीर्यवान्भूत्वा नृचक्षसे नृणां द्रष्ट्रे तस्मा इन्द्राय कर्मण्योऽभिषवकर्मणि कुशलो हितोऽभिषवार्थमुपरवे निहितः । स च दिव्यो द्योतनात्मको बृहच्छब्दः तस्य पाषाणस्य नाम । अत एवान्यत्राम्नातः—“बृहन्नसि बृहद्ग्रावा”* इति । वृषभस्य श्रेष्ठस्य हिमवदादिपर्वतस्य या ककुत् ककुत्सदृशं शृङ्गं यदस्ति तद्रूपोऽयं पाषाणः । अत एव सर्वानां ग्राव्णामभिमन्त्रणमन्त्र एवमाम्नातः—“पर्वतानां ककुभः प्रयुतः”‡ इति ॥

[2]अथ द्वितीया—हे विष्णो ! व्याप्त ! सोम ! अयं यजमानो विषूवान् श्रेष्ठो भवतु । यो यजमानो मामको मदीयो वृषा यागद्वारेण फलाभिवर्षणहेतुः सोऽयमिति पूर्वत्रान्वयः । अपि च यथैवेन्द्रो देवेभ्यः कार्याणि विविच्य ब्रवीति तथाऽयं यजमानो जनेभ्यो विविच्य ब्रवीतु । अयं मन्त्रः कचित्कर्मणि यजमानाभिमन्त्रणार्थः ॥

* सं. १-१-२. † मूलव. ‡ ब्रा. ३-७-९.

ब्रवीतु जनेभ्यः। [3]आयुष्मन्तं वर्चस्वन्तम्। अथो अधिपतिं विशाम् ॥ ६ ३ ॥ अस्याः पृथिव्या अध्यक्षम्। इममिन्द्र वृषभं कृणु। [4]यस्सुशृङ्गस्सुवृषभः। कल्याणो द्रोण आहितः। कार्षीवलप्रगाणेन। वृषभेण यजामहे। [5]वृषभेण यजमानाः। अक्रूरेणेव सर्पिषा। मृधश्च सर्वा इन्द्रेण। पृतना-

[3]अथ तृतीया—हे इन्द्र इमं यजमानं वृषभं कृणु श्रेष्ठं कुरु। वृषभत्वमेव प्रपञ्चयते—आयुष्मन्तं दीर्घेणायुषा युक्तं वर्चस्वन्तं अधिकेन बलेन युक्तं अपि च विशां प्रजानामधिपतिं अस्याः पृथिव्या अध्यक्षं स्वामिनम्। अयं मन्त्र आशीर्वादरूपे कर्मणि द्रष्टव्यः ॥

[4]अथ चतुर्थी—योऽयमिन्द्रार्थमालभ्यमानः पशुः सोऽयं सुशृङ्गः शोभनशृङ्गोपेतः सुवृषभः सुष्ठु सेचनसमर्थः कल्याणः रमणीयः द्रोणे मुद्गमाषादिभक्षपरिपूर्णे काष्ठपात्रे आहितो भक्षणाय नित्यं स्थापितः कार्षीवलप्रगाणेन कृषीवलैः कृतं कार्षीवलं तादृशं प्रगाणं प्रशंसनं यस्यासौ कार्षीवलप्रगाणः तादृशेन तेन वृषभेण यजामहे इन्द्रं पूजयामः ॥

[5]अथ पञ्चमी—यथाऽक्रूरेण स्वादुतमेन सर्पिषा यागः क्रियते तथैव वृषभेणानेन यजमाना वयमिन्द्रेणानुगृहीतास्सन्तो मृधश्च शत्रूनपि सर्वाः पृतनाश्च परकीयसेना अपि जयामसि वशीकुर्मः ॥

श्च जयामसि ॥ ६४ ॥ [6]यस्यायमृषभो हविः । इन्द्राय परिणीयते । जयाति शत्रुमायन्तम् । अथो हन्ति पृतन्यतः । [7]नृणामहं प्रणीरसत् । अग्र उद्भिन्दतामसत् । [8]इन्द्र शुष्मं तनुवा मेरयस्व । नीचा विश्वा अभितिष्ठाभिमातीः । नि शृणीह्याबाधं यो नो अस्ति । उरुं नो लोकं कृणुहि जीर-

[6]अथ षष्ठी—यस्य यजमानस्यायमृषभो हविर्भूत्वेन्द्रार्थं परितो नीयते, स यजमानः आयन्तमागच्छतं शत्रुं जयति । अपि च पृतन्यतोऽस्मद्विरोधिनीं सेनामिच्छतः पुरुषान्सर्वानपि हन्ति ॥

[7]अथ सप्तमी—अयं वृषभयाजी नृणां मनुष्याणां प्रणीरसत् प्रकर्षेण नेता भवतु । अह अपि च उद्भिन्दतां विरोधिजनोद्भेदनं कुर्वतां पुरुषाणां मध्येऽयमग्रेऽसत् प्रथमप्रवृत्तो भवतु । "यस्तिग्मशृङ्गः" इत्यादयश्चत्वारो मन्त्राः "ऐन्द्रमृषभमालभेत"* इत्येतस्मिन्पशावुपहोमार्थाः ॥

[8]अथाष्टमी—हे इन्द्र! तनुवा अस्मच्छरीरेषु शुष्मं बलं मेरयस्व प्रेरय । विश्वा अभिमातीः पाप्मनो नीचैः कृत्वा अभितिष्ठ अभितोऽवस्थितं कुरु । योऽयं नोऽस्माकमपरैः संपादित आबाधोऽस्ति तमाबाधं निशृणीहि नितरां शीर्णं कुरु । हे जीरदानो! जीवनहेतो! इन्द्र! नोऽस्माकमुरुं विस्तीर्णं लोकं कृणुहि कुरुष्व ॥

* तै. सं. २-१-४.

दानो ॥६५॥ [9]प्रेह्यभिप्रेहि प्रभरा सहस्व । मा विवेनो वि शृणुष्वा जनेषु । उदीडितो वृषभ तिष्ठ शुष्मैः । इन्द्र शत्रून्पुरो अस्माकं युध्य । [10]अग्ने जेता त्वं जय। शत्रून्थ्सहस ओजसा। वि शत्रून् विमृधो नुद । [11]एतं ते स्तोमं तुविजात विप्रः । रथं न धीरस्स्वपा अतक्षम् । यदीदग्ने प्रति त्वं

[9]अथ नवमी—हे इन्द्र! प्रेहि विजयार्थं गच्छ। गमनकालेऽप्यभिप्रेहि शत्रोरभिमुखो गच्छ । गत्वा च प्रभर मुख्यानां प्रहारं कुरु। सहस्व इतरानभिभव । किंचिदपि शत्रुं मा विवेनः अयमेको रक्षणीय इति विशेषेणादरं मा कुरु । ततो जनेषु महतीं मदीयां स्तुतिं शृणुष्व । हे वृषभ! ईडितः स्तुतस्सन् पुनरपि शुष्मैर्बलैः सह शत्रून् हन्तुमुत्तिष्ठ, हे इन्द्र! अस्माकं शत्रून्पुरत एव युध्य संप्रहर। एतच्चोभयं विजयार्थमैन्द्रे कर्मणि द्रष्टव्यम् ॥

[10]अथ दशमी—हे अग्ने! जेता जयशीलस्त्वं शत्रूञ्जय। तथौजसा बलेन सहसे अभिभव। शत्रून्विनुद विशेषेण निराकुरु। मृधोऽन्यानपि बाधकान्विनुद ॥

[11]अथैकादशी—तुविजात! प्रभूतजन्मन्! हे अग्ने! ते तवैतं स्तोमं स्तोत्रं विप्रः यजमानोऽहमतक्षं तक्षणवत्संपादनमकार्षम् । तत्र दृष्टान्तः—धीरो बुद्धिमान् स्वपाः शोभनकर्मा शिल्पी रथं न यथा रथं तक्षति तद्वत्। हे अग्ने! देव! यदीत् यदिदं स्तोत्रं

देव॒ हर्यौः ॥ ६६ ॥ सुवर्वतीर॒प एना जयेम । [12]यो घृतेना॒भिमानितः । इन्द्र॒ जैत्राय जज्ञिषे । स न॒स्संकासु पारय । पृत॒ना॒साह्येषु च । [13]इन्द्रो जिगाय पृथि॒वीम् । अन्तरिक्ष॒ꣳ सुवर्म॒हत् । वृ॒त्रहा पुरु॒चेतनः । [14]इन्द्रो जिगाय सह॑सा सहाꣳसि । इन्द्रो जिगाय॒ पृतनानि॒ विश्वा ॥ ६७ ॥ इन्द्रो जा॒तो वि

त्वं प्रतिहर्याः आध्रियेथाः तर्हि वयं सुवर्वतीः सुवःकामयुता अपः एना एतेन स्तोत्रेण जयेम । एतदुभयमाग्नेये कर्मणि द्रष्टव्यम् ।

[12]अथ द्वादशी—हे इन्द्र ! यस्त्वं घृतेनाभिमानितः अभितः पूजितस्सन् जैत्राय शत्रुजयाय जज्ञिषे जायसे जयसमर्थ इत्यर्थः। स त्वं संकासु परकीयसेनासु नोऽस्मान् पारय पालय । तथा पृतनासाह्येषु च सेनानामभिभवेष्वपि समर्थान्कुर्विति शेषः ॥

[13]अथ त्रयोदशी—पुरुचेतनः बहुविधज्ञानयुक्तः वृत्रहा शत्रुघातक इन्द्रः पृथिवीमन्तरिक्षं महान्तं स्वर्गं च जिगाय वशी कृतवान् ॥

[14]अथ चतुर्दशी—अयमिन्द्रः सहसा स्वकीयबलेन सहांसि परकीयबलानि जिगाय जितवान् । अयमिन्द्रो विश्वा पृतनानि सर्वाणि सैन्यानि जिगाय । अयमिन्द्रो जातमात्र एव पुरः परकीयाणि पुराणि विरुरोज विशेषेण भग्नानि कृतवान् । स इन्द्रो नोऽस्माकं परस्पा अतिशयेन पालयिता सन् वरिवः कृणोतु धनं करोतु । इदं मन्त्रद्वयमैन्द्रे कर्मणि द्रष्टव्यम् ॥

पुरो रुरोज। स नः परस्पा वरिवः कृणोतु। [15]अयं क्रतुरगृभीतः। विश्वजिदुद्भिदित्सोमः। ऋषिर्विप्रः काव्येन। [16]वायुरग्रेगा यज्ञप्रीः। साकं गन्मनसा यज्ञम्। शिवो नियुद्भिश्शिवाभिः। [17]वायो शुक्रो अयामि ते। मध्वो अग्रं दिविष्टिषु ॥६८॥ आया-

[15]अथ पञ्चदशी—क्रतुर्नाम कश्चित् ऋषिः विप्रो ब्राह्मणः काव्यनाम्ना साम्ना निष्पन्नं स्तोत्रं काव्यं तेन स्तोत्रेण अयमृषिः विश्वजित् सर्वस्य विश्वस्य जेता उद्भिदित् सर्वस्य विरोधिन उद्भेदक एव सन् सोमः सोमसदृशः सर्वस्योपकारकः। स चागृभीतः केनाप्यनभिभूतः। अस्य मन्त्रस्य क्वचिज्जपे विनियोगो द्रष्टव्यः॥

[16]अथ षोडशी—अयं वायुरग्रेगाः प्रथमगामी यज्ञप्रीः यज्ञेन प्रीयमाणः शिवाभिः शान्ताभिः नियुद्भिः नियुन्नामिकाभिः स्वकीयाभिर्वडवाभिः साकं शिवः स्वयमपि शान्तस्सन् मनसा गन् ध्यानमात्रेण यज्ञं गच्छतु॥

[17]अथ सप्तदशी—हे वायो! शुक्रो निर्मलः मध्वो मधुरः सोमरसो योऽस्ति, तमग्रं श्रेष्ठं दिविष्टिषु दिवि वासेच्छा येषां देवानां ते दिविष्टयस्तेषु मध्ये ते त्वदर्थं अयामि स्थं प्राप्नोमि। ततो हे देव! नियुत्वता त्वदीययाऽश्वजात्या सह स्वारूढः सुष्ठु रथमारूढः सोमपीतये सोमपानार्थमायाहि। एतदुभयं वायव्ये कर्मणि द्रष्टव्यम्। वायुरग्रेगा इत्यादयस्तु मन्त्रास्तेऽप्यन्तर्भूताः॥

हि सोमपीतये । स्वारुहो देव नियुत्वता । [18]इम-
मिन्द्र वर्धय क्षत्रियाणाम् । अयं विशां विश्पति-
रस्तु राजा । अस्मा इन्द्र महि वर्चाꣳसि धेहि ।
अवर्चसं कृणुहि शत्रुमस्य । [19]इममाभज ग्रामे
अश्वेषु गोषु । निरमुं भज योऽमित्रो अस्य । व-
र्ष्मन्क्षत्रस्य ककुभि श्रयस्व । ततो न उग्रो वि-

[18]अथाष्टादशी—हे इन्द्र! क्षत्रियाणां मध्ये इमं पुरोवर्तिनं राजानं वर्धय । अयं राजा विशां प्रजानां मध्ये विश्पतिरतिशयेन प्रजापालकोऽस्तु । विशां मध्ये या उत्तमा विशस्तासामपि पालकोऽस्त्वित्यर्थः । हे इन्द्र! अस्मै राज्ञे महिवर्चांसि महान्ति बलानि धेहि संपादय । अस्य शत्रुमवर्चसं कृणुहि बलहीनं कुरु ॥

[19]अथैकोनविंशी—हे इन्द्र! इमं राजानं सर्वस्मिन् ग्रामेऽश्वेषु गोषु च आभज सर्वतोभागिनं कुरु । अस्य राज्ञोऽमित्रः शत्रुर्योऽस्त्यमुं निर्भज भागरहितं कुरु । क्षत्रस्य क्षत्रियजातेः वर्ष्मन् शरीरे ककुभि उत्तमाङ्गे श्रयस्व इन्द्रस्य प्रसादाश्रितो भव सर्वाऽपि क्षत्रियजातिस्त्वां नमस्करोत्वित्यर्थः । अथवैनं राजानं श्रयस्व स्थापय । तत ऊर्ध्वं नोऽस्माकमुग्रस्त्वं वसूनि परकीयाणि धनानि विभज विशेषेण संपादय परेषु कुपितस्तदीयं धनमस्मभ्यं प्रयच्छेत्यर्थः ॥

भंजा वसूनि ॥ ६ ॥ [20]अस्मे द्यावापृथिवी भूरि वामम् । संदुहाथां घर्मदुघेव धेनुः । अयꣳ राजा प्रिय इन्द्रस्य भूयात् । प्रियो गवामोषधीनामुतापाम् । [21]युनज्मि त उत्तरावन्तमिन्द्रम् । येन जयासि न पराजयासै । स त्वाऽकरेकवृषभꣳ स्वानाम् । अथो राजन्नुत्तमं मानवानाम् । [22]उत्तरस्त्वमधरे ते सपत्नाः । एकवृषा इन्द्रसखा जिगीवान् ॥

[20]अथ विंशी—मदर्थं या पयो दुग्धे सा घर्मदुघा तादृशी धेनुरिव हे द्यावापृथिव्यौ! अस्मै अस्मदर्थं संदुहाथामपेक्षितस्य कामस्य युवां दोहनं कुरुतम् । अयं च राजा युवयोः प्रसादादिन्द्रस्य प्रियो भूयात् । तथा गवामोषधीनामपां च प्रियो भूयात् । ताः सर्वा अस्मिन् रमन्तामित्यर्थः ॥

[21]अथैकविंशी—उत्तर उत्कृष्टो ज्ञानैश्वर्यादिर्येस्येन्द्रस्य सोऽयमुत्तरावान् । तादृशमिन्द्रं हे राजन्! ते त्वदर्थं युनज्मि त्वया सह संयोजयामि । येनेन्द्रेण जयासि सर्वदा त्वं जेष्यासि न पराजयासै कदाचिदपि पराजयं न प्राप्स्यासि । स इन्द्रः त्वां स्वानां ज्ञातीनां मध्ये एकवृषभमेकमेव श्रेष्ठं अकः करोतु । अथो अपि च हे राजन्! मानवाना त्वामुत्तमं करोतु ॥

[22]अथ द्वाविंशी—हे राजन्! त्वमुत्तर उत्कृष्टो भव । ते सपत्नाः शत्रवोऽधरे निकृष्टाः सन्तु । त्वमेकवृषा एक एव श्रेष्ठः इन्द्रसखा इन्द्रस्य सख्यं प्राप्तो जिगीवान् सर्वदा जयं प्राप्तो

विश्वा आशाः पृतनास्संजयञ्जयन् । अभितिष्ठ शत्रूयतस्सहस्व । [23]तुभ्यं भरन्ति क्षितयो यविष्ठ । बलिमग्ने अन्तित ओत दूरात् । आ भन्दिष्ठस्य सुमतिं चिकिद्धि । बृहत्ते अग्ने महि शर्म भद्रम् । [24]यो देह्यो अनमयद्वधस्नैः । यो अर्यपत्नीरुषसश्चकार । स निरुध्या नहुषो यह्वो अग्निः।

विश्वा आशाः सर्वा अपि दिशः संजयन् सम्यग्वशीकुर्वन् विश्वाः पृतनाश्च जयन् अभितिष्ठ अभिक्रम्य स्थिरो भव । शत्रूयतः शात्रवमिच्छतो मनुष्यान् सहस्व अभिभव । इममिन्द्र वर्धयेत्यादिमन्त्रपञ्चकमाशीर्वादरूपं राजनि पुरोहितेन प्रयोक्तव्यम् ॥

[23]अथ त्रयोविंशी—हे यविष्ठ! युवतम अग्ने! क्षितयो भूमिष्ठाः सर्वे मनुष्या अन्तितः समीपदेशात् ओत उत दूरदेशाच्च बलिं पूजामाभरन्ति आनीय प्रयच्छन्ति । भन्दिष्ठस्य अतिशयेन स्तोतुर्मम सुमतिं शोभनमतिं आचिकिद्धि सर्वतोऽनुगृहाण । हे अग्ने! ते तव शर्म शरणं बृहत् महि अधिकं कर्मभिः पूज्यं भद्रं कल्याणम् ॥

[24]अथ चतुर्विंशी—योऽग्निर्देह्यो देहिनीः प्रजाः वधस्नैः वधबन्धनैश्च । स्ना वेष्टन इति धातोरुत्पन्नत्वाद्बन्धनमुच्यते । अनमयत् स्ववशीकृतवान् । यश्चाग्निरुषसो देवीरर्यपत्नीः सूर्यभार्याश्चकार सोऽग्निः यह्वो महान् नहुषो बन्धको भूत्वा विशः प्रजाः निरुध्य बलिहृतश्चक्रे । बलिहरणं नाम देवेभ्यो हविर्दानम् । सहोभिः स्वकीयैर्बलैस्तथा चक्रे । एतच्चोमयं दिवश्येनीष्टिषु—

विशांश्चक्रे बलिहृतस्सहोभिः ॥ ७१ ॥ [25]प्र सद्यो अग्ने अत्येष्यन्यान् । आविर्यस्मै चारुतरो बभूथ । ईडेन्यो वपुष्यो विभावा । प्रियो विशामतिथिर्मानुषीणाम् । [26]ब्रह्म ज्येष्ठा वीर्या संभृतानि । ब्रह्माग्रे ज्येष्ठं दिवमाततान । ऋतस्य ब्रह्म प्रथमोत

"अग्नये बलिमते चरुम्"* इत्यत्र याज्यानुवाक्ये । तथा च तत्र प्रतीकद्वयमाम्नातम्—"तुभ्यं भरन्ति, यो देह्यः"† इति ॥

[25]अथ पञ्चविंशी—हे अग्ने! यस्मै यजमानाय त्वं चारुतरः प्रियतर आविर्बभूथ प्रत्यक्षदृष्टोऽभूः । तस्य यजमानस्यार्थे सद्यस्तदानीमेवान्यान् सर्वान्यजमानान् प्रकर्षेणात्येषि अतिक्रमिष्यसि । चारुतरत्वमेव स्पष्टीक्रियते—ईडेन्यः सर्वैः स्तुत्यो वपुष्यः उज्ज्वलरूपो विभावा दीप्यमानो मानुषीणां विशां प्रजानां प्रियोऽतिथिः । सोऽयं मन्त्र आग्नेये कर्मणि द्रष्टव्यः ॥

[26]षड्विंशी—हे ज्येष्ठाः! वृद्धतमाः! प्रजापतिप्रभृतयः! शृणुत यानि वीर्याणि ज्ञानैश्वर्यादीनि युष्मासु संभृतानि संपादितानि सर्वाणि ब्रह्मैव । अत एव स्मर्यते—

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥ इति ।

किंच—ज्येष्ठं लोके वृद्धतमं ब्रह्म अग्रे प्रथममादिकाले दिवमाततान द्युलोकं विस्तारयति स्म । किं बहुना यदृतं सत्यं सर्वकारणकारणं वस्तु तस्यापि ब्रह्म प्रथमं जज्ञे प्रादुरभूत् ।

* ब्रा. ३-१२-२, † ब्रा. ३-१२-१,

जज्ञे । तेनार्हति ब्रह्मणा स्पर्धितुं कः । [7] ब्रह्म स्रुचो घृतवतीः । ब्रह्मणा स्वरवो मिताः ॥ ७२ ॥ ब्रह्म यज्ञस्य तन्तवः । ऋत्विजो ये हविष्कृतः ।
[28] शृङ्गाणीवेच्छृङ्गिणाꣳ संददृश्रिरे । चषालवन्तस्स्वरवः पृथिव्याम् । ते देवासस्स्वरवस्तस्थिवाꣳ-

स्वस्य स्वयमेव आविर्भूय स्वप्रकाशत्वेन भासत इत्यर्थः । तेनैवंभूतेन ब्रह्मणा कोऽन्यः पुमान् स्पर्धितुं शक्नोति ॥

[27]अथ सप्तविंशी—घृतवतीः घृतसंपूर्णाः स्रुचोऽपि ब्रह्मैव । मिताः यूपे प्रक्षिप्ताः स्वरवः शकलविशेषा अपि ब्रह्मैव । यज्ञस्य तन्तवो विस्तारा अपि ब्रह्मैव । हविष्कृतो हविस्संपादकाः ये ऋत्विजः सन्ति तेऽपि ब्रह्मैव । एतच्चोभयं 'ब्रह्मण ऋषभम्' इति विहिते पशौ द्रष्टव्यम् ॥

[28]अथाष्टाविंशी—चषाला यूपाग्रवर्तिनः कटकाः स्वरवो यूपरशनास्वासञ्जिताः शकलाः । चषालैः स्वरुभिश्च युक्ता यूपाः पृथिव्यां वेद्यां संददृश्रिरे सम्यग्दृष्टाः । तत्र दृष्टान्तः—शृङ्गिणां वृषभाणां शृङ्गाणीवेत् शृङ्गाणि यथा दृश्यन्ते तथैवेत्यर्थः । स्वरुमन्तस्ते यूपास्तस्थिवांसो देवासः स्थैर्येणावस्थिता देवा एव । अत एव "स वा एष सर्वदेवत्यो यद्यूपः"* इत्याम्नातम् । अतो यजमानसखिभ्यो देवरूपेभ्यो यूपेभ्यो नमोऽस्तु । हे यूपाः! सद्मात् अस्मत्सदनात् माऽवगात माऽपगच्छत । एतस्य मन्त्रस्य विनियोगं सूत्रकार आह—"यूपं यजमान उपतिष्ठते नमस्सखिभ्यः" इति ॥

* सं. ६-३-४.

सः । नमस्सखिभ्यस्सन्नान्माऽवगात । [29]अभिभूरग्निरतरद्रजाᳪंसि । स्पृधो विहत्य पृतना अभिश्रीः । जुषाणो म आहुतिं मा महिष्ट । हत्वा सपत्नान् वरिवस्करन्नः । [30]ईशानं त्वा भुवनानामभिश्रियम् । स्तौम्यग्न उरुकृतᳪं सुवीरम् । हविर्जुषाणस्सपत्नाᳪं अभिभूरसि । जहि शत्रूᳪंरप मृधो नुदस्व ॥ ७३ ॥

विशां जयामसि जीरदानो हर्या विश्वा दिविष्टिषु वसूनि जिगीवान्थ्सहोभिर्मिता नैश्वत्यारिं च॥

[29]अथैकोनत्रिंशी—अभिभूरभिभवनशीलोऽयमग्निः रजांसि रञ्जनात्मकान् लोकान् अतरत् अत्यक्रामत् । स्पृधो बाधिकाः पृतनाः शत्रुसेना विहत्य तत एवाभिगतश्रीः सोऽयं जुषाणः प्रियमाणो मे मम आहुतिं मा महिष्ट अवध्यातु । अस्मत्सपत्नान् हत्वा वरिवः तदीयं धनं नोऽस्माकं करोतु ॥

[30]अथ त्रिंशी—हे अग्ने! त्वां स्तौमि । कीदृशं? भुवनानामीशानमभिगतश्रियमुरुकृतं प्रभूतकर्मकारिणं सुवीरं शोभनापत्यहेतुम् । हे अग्ने! त्वं हविर्जुषाणः सपत्नान् शत्रूनभिभवितुं समर्थोऽसि । अतः शत्रूञ्जहि मृधो बाधकानपनुदस्व । एतदुभयमाग्नेये कर्मणि द्रष्टव्यम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे
चतुर्थप्रपाठके सप्तमोऽनुवाकः.

[1]स प्रत्नवन्नवीयसा। अग्ने द्युम्नेन संयता। बृहत्ततन्थ भानुना। [2]नवं नु स्तोममग्नये। दिवः श्येनाय जीजनम्। वसोः कुविद्वनाति नः। [3]स्वारुहा यस्य श्रियो दृशे। रयिर्वीरवतो यथा। अग्ने

[1]अष्टमेऽनुवाके सर्वमप्याग्रयणसूक्तम्। तद्विनियोगं सूत्रकार आह—'सप्रत्नवदिति द्वे धाय्ये चतस्र आज्यभागयोर्देश हविषां द्वे स्विष्टकृतः' इति॥ तत्र प्रथमामृचमाह—हे अग्ने! स त्वं प्रत्नवत् प्रत्नेन पुराणेन भानुनेव नवीयसाऽत्यन्तं नवतरेण द्युम्नेन दीप्तेन संयता समुह्य गृहीतेन भानुना तेजसेदानीं बृहन्महदन्तरिक्षं ततन्थ तव यागानुरूपं नवतरं तेजः प्रसारयेत्यर्थः॥

[2]अथ द्वितीया—दिवो द्युलोकात् श्येनाय श्येनवत्क्षिप्रमाग च्छतेऽग्नये नवं स्तोममभिनवं स्तोत्रं नु क्षिप्रं जीजनं उत्पादितवानस्मि। वसोर्धनस्य कुवित् प्रभूतं भागं नोऽस्माकं वनाति ददाति। एते उभे धाय्ये॥

[3]अथ तृतीया—यज्ञस्याग्रे उपक्रमे सर्वं कर्तव्यं चेततः चेतयमानस्य यस्याग्नेः श्रियः स्वारुहाः स्वस्मादेव प्ररूढा अपराधीना इत्यर्थः। दृशे दर्शनीयाः भवन्ति। वीरवतः पुत्रवतः पुरुषस्य रयिर्धनं दर्शनीयं यथा भवति तद्वत् सोऽग्निः श्रीमानिति भावः॥

यज्ञस्य चेतंतः । [4]अदाभ्यः पुरएता ॥७४॥ अ-
ग्निर्विशां मानुंषीणाम् । तूर्णी रथस्सदा नवः । [5]न-
व२ सोमाय वाजिने । आज्यं पयसोऽजनि । जु-
ष्ट२ शुचितमं वसु । [6]नव२ सोम जुषस्व नः ।
पीयूषस्येह तृप्णुहि । यस्ते भाग ऋतावयम् ।
[7]नवस्य सोम ते वयम् । आ सुमतिं वृणीमहे ॥

[4]अथ चतुर्थी—मानुषीणां विशां देवपरिचारभूतानामग्निः पुरत एता अग्रेसरः केनचिदप्यदाभ्यो हिंसितुमशक्यः तूर्णिः तरणहेतुः । "सर्वं ह्येष तरति"* इति ब्राह्मणम् । रथी रथस्वामी, अत एव "रथीरध्वराणाम्"† इत्याम्नातम् । सदा सर्वदा नवोऽभिनवः ॥

[5]अथ पञ्चमी—वाजिनेऽन्नवते सोमाय नवं नूतनमाज्यं पयसः अजनि उत्पन्नं, तच्च जुष्टं प्रियं शुचितममत्यन्तं शुद्धं वसु श्रेष्ठम् ॥

[6]अथ षष्ठी—हे सोम! नवमिदमाज्यं जुषस्व । नोऽस्मदीयस्य पीयूषस्यामृतसमानस्य आज्यस्य भागेनेह कर्मणि तृप्णुहि तृप्तो भव । यस्तवास्मिन्नृतौ कालविशेषे देवैः कल्पितो भागः सोऽयमाज्यरूपः । एताश्चतस्र आज्यभागयोः ॥

[7]अथ सप्तमी—हे सोम! नवस्य नूतनमूर्तियुक्तस्य ते तव सुमतिमनुग्रहबुद्धिं वयं आ समन्तात् वृणीमहे । स त्वमस्मभ्यं सहस्रिणः सहस्रसंख्यस्य धनस्य भोगं रास्व देहि ॥

* ब्रा. २-५-९. † ब्रा. ३-५-३.

स नो रास्व सहस्रिणः । [8]नव२ हविर्जुषस्व नः । ऋतुभिस्सोम भूतमम् । तदङ्ग प्रतिहर्य नः । राजन्त्सोम स्वस्तये । [9]नव२ स्तोमं नव२ हविः । इन्द्राग्निभ्यां निवेदय । तज्जुषेता२ सचेतसा । [10]शुचिं नु स्तोमं नवजातमद्य । इन्द्राग्नी वृत्रहणा जुषेथाम् ॥ ७६ ॥ उभा हि वा२ सुहवा जोहवीमि ।

[8]अथाष्टमी—हे सोम! ऋतुभिः कालैः भूतमं अतिशयेन निष्पन्नं सुपक्वं नवं नूतनं श्यामाकरूपं नोऽस्मदीयं हविर्जुषस्व । अङ्गशब्दः प्रियसंबोधनवाची । अङ्ग! सोम! राजन्! नः अस्माकं स्वस्तये तद्धविः प्रतिहर्य श्रद्धस्व । एते उभे सौम्यस्य श्यामाकहविषो याज्यापुरोनुवाक्ये ॥

[9]अथ नवमी—नवं स्तोत्रं नवं हविश्च इन्द्राग्निभ्यामध्वर्यो! निवेदय । तद्धविः सचेतसा समानचेतसौ इन्द्राग्नी जुषेतां सेवेताम् ॥

[10]अथ दशमी—वृत्रहणौ शत्रुघातिनौ हे इन्द्राग्नी! अद्य अस्मिन्कर्मणि नवजातं अभिनवत्वेनोत्पन्नं शुचिं नु स्तोमं शुद्धमेव स्तोत्रं जुषेथा, हि यस्मादहं सुहवा सुखेनाह्वातुं शक्यौ वामुभा युवामुभौ जोहवीमि पुनःपुनराह्वयामि । ता तौ तथाविधौ युवां उशते कामयमानाय यजमानाय वाजमन्नं सद्यो येष्ठा तस्मिन्नेव क्षणे संपादयतम् । एते उभे ऐन्द्राग्नस्य द्वादशकपालस्य याज्यानुवाक्ये ॥

ता वाजꣳ स॒द्य उ॑श॒ते धेष्ठा॑ । अ॒ग्निरिन्द्रो॒ नव॑स्य न॑: । अ॒स्य ह॒व्यस्य॑ तृप्यताम् । इ॒ह दे॒वौ स॑ह॒स्रिणौ॑ । [12]य॒ज्ञं न॒ आ हि गच्छ॑ताम् । वसु॑मन्तꣳ सुव॒र्वि॑दम् । अ॒स्य ह॒व्यस्य॑ तृप्यताम् । अ॒ग्निरिन्द्रो॒ नव॑स्य नः । [13]विश्वा॒न्दे॒वाꣳस्तर्पयत ॥७७॥ ह॒वि॒षो॑ऽस्य नव॑स्य नः । सु॒व॒र्वि॑दो॒ हि जं॑ज्ञि॒रे । [14]एदं

[11]अथैकादशी—अग्निश्चेन्द्रश्च नोस्मदीयस्य नवस्य नूतनस्यास्य हव्यस्य भागेन तृप्यतां, इह कर्मणि तौ देवौ द्योतमानौ सहस्रिणौ सहस्रसंख्याकधनप्रदौ स्ताम् ॥

[12]अथ द्वादशी—अग्निश्चेन्द्रश्चोभौ नोऽस्मदीयस्य नवस्यास्य हव्यस्य तृप्यतां, तदर्थं नोऽस्मदीयं यज्ञं आ हि गच्छतां सर्वथैवागच्छताम् । कीदृशं यज्ञं? वसुमन्तं बहुधनप्रदं सुवर्विदं स्वर्गलाभसाधनम् । अत्र यद्विकल्पितं 'हविरैन्द्राग्नं द्वादशकपालमाग्नेन्द्रं वा' इत्यत्रैन्द्राग्नस्य पूर्वे ऋचौ, आग्नेन्द्रस्य त्वेते उभे याज्यानुवाक्ये ॥

[13]अथ त्रयोदशी—हे ऋत्विजः! नोऽस्मदीयस्य नवस्यास्य हविषो भागेन विश्वान्देवांस्तर्पयत, यस्मात्ते विश्वे देवाः सुवर्विदो जज्ञिरे स्वर्गलाभहेतवो जाताः ॥

[14]अथ चतुर्दशी—इदं बर्हिः मुष्टरीम सुष्ठु स्तीर्णं सर्वतोऽभूत् । नवेन हविषा युक्तो यजमानस्यायं यज्ञो भागो विश्वैर्दे-

बर्हिस्सुष्टरीमा नवेन। अयं यज्ञो यजमानस्य भागः। अयं बभूव भुवनस्य गर्भः। विश्वे देवा इदमद्यागमिष्ठाः। [15]इमे नु द्यावापृथिवी समीची। तन्वाने यज्ञं पुरुपेशसं धिया। आऽस्मै पृणीतां भुवनानि विश्वा। प्रजां पुष्टिममृतं नवेन॥
[16]इमे धेनू अमृतं ये दुहाते। पयस्वत्युत्तरामेतु पुष्टिः। इमं यज्ञं जुषमाणे नवेन। समीची द्यावा-

---

वैर्भजनीयः। सोऽयं यज्ञो भुवनस्य भूतजातस्य गर्भो रक्षकत्वेनान्तरवस्थितो बभूव। हे विश्वे देवाः! अद्यास्मिन्कर्मणीदमास्तीर्णं बर्हिः प्रति आगमिष्ठाः आगच्छत। एते उभे वैश्वदेवस्य हविषो याज्यानुवाक्ये॥

[15]अथ पञ्चदशी—इमे नु इमे एव द्यावापृथिव्यौ समीची परस्परेण संगते सत्यौ पुरुपेशसं बहुरूपं यज्ञं धिया स्वबुद्ध्या तन्वाने विस्तारयन्त्यौ अस्मै यजमानाय विश्वा भुवनानि सर्वाणि भूतजातानि आपृणीतां सर्वतः पालयेतां तथा प्रजां पुष्टिममृतमन्नं च नवेन हविषा स्वीकृतेन तत्सर्वं संपादयेताम्॥

[16]अथ षोडशी—ये द्यावापृथिव्यौ अमृतं वृष्ट्यन्नरूपं दुहाते, इमे द्यावापृथिव्यौ सर्वेषां प्राणिनां धेनुस्थानीये। पुष्टिर्धनसमृद्धिरुत्तरामुत्तरोत्तरातिशयावस्थां एतु आगच्छतु। कीदृशी पुष्टिः? पयस्वती प्रभूतवृष्ट्युदकयुक्ता, नवेन नूतनेन हविषेमं यज्ञं जु-

पृथिवी घृताचीं । [17]यविंष्ठो हव्यवाहनः। चित्रभा-
नुर्घृतासुतिः । नवंजातो विरोचसे । अग्ने तत्ते म-
हित्वनम् । [18]त्वमंग्ने देवताभ्यः । भागे देव न मी-
यसे ॥७१॥ स एना विद्वान् यक्ष्यसि । नवं स्तो-
मं जुषस्व नः । [19]अग्निः प्रथमः प्राश्नातु । स हि

षमाणे सेवमाने समीची परस्परानुकूले द्यावापृथिव्यौ घृताची घृतमुदकं क्षरन्त्यौ भवेताम्। एते उभे ऋचौ 'द्यावापृथिव्यमेककपालम्'* इत्यस्य याज्यानुवाक्ये ॥

[17]अथ सप्तदशी—हे अग्ने! त्वं यविष्ठो युवतमो हव्यवाहनो हविषो वोढा चित्रभानुः घृताशनो नवजातः प्रतिक्षणं नूतन-ज्वालारूपेणोत्पन्नो विरोचसे विशेषेण दीप्यसे। तन्महित्वनं तदेतन्माहात्म्यं ते तवैव, न त्वन्यस्यास्ति ॥

[18]अथाष्टादशी—हे अग्ने! देव! त्वं देवताभ्यः सर्वाभ्यो भागे त्वयोह्यमानेऽपि न मीयसे न हिंस्यसे यथा तव भ्रातरो देवेभ्यो हव्यं वहन्तो मृता न तथा त्वमित्यर्थः। स त्वमेनाः देवताः विद्वान् यक्ष्यसि यज। नः अस्मदीयं नवं स्तोमं स्तोत्रं जुषस्व। एते उभे स्विष्टकृतः संयाज्ये ॥

[19]अथैकोनविंशी—अयमग्निरिमं हविश्शेषं मत्तः प्रथमभावी सन् प्राश्नातु। स ह्यग्निः यथेदं हविः संभूतं यथा चोपभोज्यं तथा वेद जानाति। अस्मभ्यं विश्वचर्षणिः विश्वस्य द्रष्टाऽग्निः

* सं. २-६-२.

वेद॒ यथा॑ ह॒विः । शि॒वा अ॒स्मभ्य॒मोष॑धीः । कृ॒णो-
तु॒ वि॒श्वच॑र्षणिः । [20]भ॒द्रान्न॒श्श्रेय॒स्सम॑नैष्ट देवाः ।
त्वया॑ऽव॒सेन॒ सम॑शीमहि त्वा । स नो॑ म॒योभूः
पि॒तो आवि॑शस्व । शं तो॒काय॑ त॒नुवे॑ स्यो॒नः ।
[21]ए॒तमु॒ त्यं मधु॑ना॒ संयु॑तं॒ यव॑म् । सर॑स्वत्या॒ अ-

ओषधी शिवाः सुखकराः कृणोतु करोतु । अयं मन्त्रः श्यामाकचरुहविषः प्राशने विनियुक्तः ॥

[20]अथ विंशी—हे देवाः! नोऽस्माकं भद्रात् वर्तमानाच्छ्रेयसोऽप्यधिकं श्रेयः समनैष्ट सम्यगानयत । हे पितो! अन्न! त्वयाऽवसेन त्वद्रूपेण रक्षकेण पाथेयेन त्वां समशीमहि सम्यगश्नुवीमहि संवत्सरपर्यन्तं त्वयैव जीवाम इत्यर्थः । स त्वं नोऽस्माकं मयोभूः सुखं भावयन् आविशस्व उदरं प्रविश, तोकाय पुत्राय तनुवे शरीराय च शंभव शान्तो भव । अयं मन्त्रो व्रीह्याग्रयणस्य शेषभक्षणे विनियोज्यः ॥

[21]अथैकविंशी—अधिमनौ युगादिभूते मनौ प्रजापतौ राजनि सति तस्मिन्काले कृषिकाः सरस्वत्याः नद्याः मधुरेण जलेन संयुतं एतमु इदानीं पुरतो दृश्यमानमेव यवं त्यं यवधान्यविशेषमचर्कृषुः* क्षेत्रेषूप्तवन्तः योऽयं यव इदानीं दृश्यते तस्य यवस्य कृषिमादिकाले प्रारब्धवन्त इत्यर्थः । के कर्षकाः कश्च तत्स्वामीति तदुभयमुच्यते—इन्द्रः शतक्रतुः शतसंख्याकैरश्वमेधैर्लब्धपदो यः सोऽयं सीरपतिः हलस्वाम्यासीत् । सुदानवः सुष्ठु

* चर्कृषुः.

धिमनावंचर्कृषुः* । इन्द्र आसीत्सीरंपतिश्शतक्रंतुः । कीनाशा आसन्मरुतंस्सुदानंवः ॥ ८० ॥

पुरएता वृंणीमहे जुषेथां तर्पयतामृतं नवेन मीयसे स्योनश्श्वत्वारिं च ॥ ८ ॥

जुष्टश्चक्षुंषो जुष्टीं नरो नक्तं जाता वृषास उत नो वृषाऽस्यश्शुस्स पत्नवदृष्टौ ॥ ८ ॥

जुष्टो मन्युर्भगो जुष्टीं नरो हरिंवर्पसं गिरश्शिप्रिन्वाजानामुत नो यद्वाग्वदन्ती विश्वा आशा अशीतिः ॥ ८० ॥

हरिः ॐ

दातारो मरुतः कीनाशाः कृषिकर्मकरा आसन् । अयं मन्त्रो यवाग्रयणस्य शेषभक्षणे विनियोज्यः ॥

इति श्रीमद्वीरबुक्कणसाम्राज्य धुरंधर श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय तैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः

चतुर्थः प्रपाठकः समाप्तः.

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

---

* चर्कृषुः.

# अथ द्वितीयाष्टके पञ्चमप्रपाठकारम्भः.

---

[1]प्राणो रक्षति विश्वमेजत्। इर्यो भूत्वा बहुधा बहूनि। स इत्सर्वं व्यानशे। [2]यो देवो देवेषु विभूरन्तः। आवृदूदात्क्षेत्रियध्वगद्वृषा। तमित्प्राणं

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥ १॥
चतुर्थ उपहोमार्था मन्त्रा बहव ईरिताः।
प्रपाठके पञ्चमेऽस्मिंस्तच्छेष उपवर्ण्यते॥ २॥

[1]तत्र प्रथमानुवाके प्रथमामृचमाह—योऽयं मुखनासिकावर्ती प्राणवायुः सोऽयं बहुधा भूत्वा प्राणापानादिवृत्तिभेदेनानेकप्रकारो भूत्वा बहूनि जीवजातानि प्रति इर्यः प्रेरकस्सन् एजत् कम्पमानं जङ्गमरूपं जगद्रक्षति स इत् स एव प्राणः सर्वं जगत् व्यानशे व्याप्तवान्॥

[2]अथ द्वितीयामाह—दीव्यन्तीति देवाः प्राणचक्षुःश्रोत्रादयः तेषु देवेषु मध्ये यो मुख्यो देवः प्राणः श्वासकर्ता सोऽयमन्तरावृदूदात् पुनःपुनरन्तर्बहिश्चावर्तमानत्वात् विभूः कृत्स्नदेहव्यापी क्षेत्री क्षेत्रं शरीरं तस्य स्वामी वृषा श्रेष्ठः। तस्य दृष्टान्तः—अध्वगत् यथा लोकेऽध्वगोऽनालस्यगमनं करोत्येवमयं प्राणः प्रतिक्षणमुच्छ्वासनिश्वासौ करोति तमित् तमिव प्राणं म-

मन॒सोप॑शिक्षत । अग्रं॑ दे॒वाना॑मि॒दम॑त्तु नो ह॒विः । [3]मन॑सश्चि॒त्तेदम् । भू॒तं भव्यं॑ च गुप्यते । तद्धि दे॒वेष्व॑ग्रि॒यम् ॥ १ ॥ [4]आ न॑ एतु पुर॒श्च॒रम् । स॒ह दे॒वैरि॒मꣳ हव॑म् । मन॒श्श्रेय॑सि श्रेयसि । कर्म॑न् य॒ज्ञ-

---

नसोपशिक्षत भक्तिपुरस्सरमुपचरत । स प्राणो देवानां मध्येऽग्रं प्रथमं नोऽस्मदीयमिदं हविरत्तु भक्षयतु । यदुक्तमैतरेयब्राह्मणे—"चक्षुः श्रोत्रं मनो वाक्प्राणस्ता एताः पञ्च देवता इमं विश्लिष्टाः पुरुषम्" इति । तदेतन्मन्त्रद्वयं प्राणदेवताविषयं द्रष्टव्यम् ॥

[3]अथ तृतीयामाह—यदिदं मनः अन्तःकरणमस्ति तस्य चित्ता चित्तेन वृत्तिविशेषेणेदं दृश्यमानं भूतं भव्यं चातीतमनागतं च सर्वं गुप्यते रक्ष्यते । यत्पूर्वं निष्पन्नं पुत्रभृत्यादिचेतनं धनधान्याद्यचेतनं यच्चेतःपरं संपादनीयं चेतनमचेतनं च तत्सर्वं मनसैव परिरक्ष्यते । तद्रक्षोपायानां मनसा चिन्त्यमानत्वात् । हि यस्मात्कारणात् तन्मनो देवेषु दीप्यमानेष्विन्द्रियेषु अग्रियं श्रेष्ठं तस्मात्तेन रक्षणमुचितम् ॥

[4]अथ चतुर्थीमाह—तन्मनो देवैर्दीप्यमानैरन्यैरिन्द्रियैः सह पुरश्चरं स्वयमग्रगामि भूत्वा नोऽस्मदीयमिमं हवमाह्वानं प्रत्येतु आभिमुख्यं प्राप्नोतु । किं कुर्वन्? श्रेयसिश्रेयसि कर्मन् तस्मिंस्तस्मिन्प्रशस्ते कर्मणि यज्ञपतिं दधत् यजमानं स्थापयतु सर्वेषु पुण्यकर्मसु प्रवर्तयत्वित्यर्थः । तदेतन्मन्त्रद्वयं मनोदेवताविषयं द्रष्टव्यम् ॥

पतिं दधत् । ⁵जुषतां मे वागिदꣳ हविः । विराड्देवी पुरोहिता । हव्यवाडनपायिनी । ⁶यया रूपाणि बहुधा वदन्ति । पेशाꣳसि देवाः परमे जनित्रे । सा नो विराडनपस्फुरन्ती ॥ २ ॥ वाग्देवी जुषतामि-

⁵अथ पञ्चमीमाह—इदं पुरोवर्ति मे हविः वाग्देवी सेवताम् । कीदृशी? विराट् विविधं राजत इति विराड्विराजमाना देवी देवताविग्रहा पुरोहिता प्रथमतः प्रवृत्ता । यद्यपि पुरश्चरत्वं मनस उक्तं, तथाऽपि कायव्यापारापेक्षया पूर्वभावित्वं प्रथमप्रवृत्तिर्वचसो युक्ता । अत एव व्यवहारक्रमोऽन्यत्राम्नातः—"यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति"* इति । हव्यवाट्, वाचा हि मन्त्रमुच्चार्य हविर्दीयते तस्माद्वागियं हविर्वहतीत्युपचर्यते । अनपायिनी सर्वेष्वपि व्यवहारेष्वनुगता । न हि वागिन्द्रियमन्तरेणातीतानागतविषयो व्यवहारः संभवति ॥

⁶अथ षष्ठीमाह—यान्येतानि देवतिर्यङ्मनुष्यादिरूपाणि यानि च नीलपीतशुक्लकृष्णादिरूपाणि तानि सर्वाणि यया वाचा मनुष्या बहुधा वदन्ति, इदं समीचीनमिदमसमीचीनमित्येतादृशं बहुधा वदन्ति । तथा—परमे जनित्रे उत्तमे जन्मनि वर्तमाना देवाश्च पेशांसि रमणीयानि रूपाणि यया वाचा वदन्ति । सा वाग्देवी नोऽस्मदीयमिदं हविर्जुषताम् । कीदृशी वाक्? अर्थप्रकाशकत्वेन विविधं राजत इति विराट् । अपस्फुरणमर्थाभिधाने

*सं. ६-१-७, आ. १-२१.

द॒४ ह॒विः । [7]चक्षु॑र्दे॒वाना॒ं ज्योति॑र॒मृत॑े न्यंक्तम् । अ॒स्य वि॒ज्ञाना॑य बहु॒धा निधी॑यते। तस्य॑ सु॒म्नम॑शी-महि । मा नो॑ हासीद्विचक्ष॒णम् । [8]आयु॑रि॒न्नः प्र-तीर्य॑ताम् । अन॑न्धा॒श्चक्षु॑षा व॒यम् । जी॒वा ज्योति-

कुण्ठीभावः तद्राहित्यादनगस्फुरन्ती । तदिदं मन्त्रद्वयं वाग्देवता विषयं द्रष्टव्यम् ॥

[7]अथ सप्तमीमाह—देवानां दीव्यमानानामिन्द्रियाणां मध्ये चक्षुरिन्द्रियं ज्योतिः विस्पष्टभासकं, तच्चामृते मरणरहिते आदित्यस्वरूपे न्यक्तं निलीनम् । अत एव बह्वृचा आमनन्ति—"आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" इति । तदिदं चक्षुः अस्य सर्वस्य नीलपीतादिरूपजातस्य बहुधा विज्ञानाय नानाविधज्ञान सिद्धये निधीयते प्रजापतिना व्यवस्थाप्यते । तस्य चक्षुरिन्द्रियस्य सुम्नं सुखं तेन चक्षुरिन्द्रियेण रूपप्रकाशने सति यत्सुखं जायते तत्सर्वमशीमहि अश्नुवीमहि प्राप्नुयाम । विचक्षणं विशेषेण प्रकाशकं, तच्चक्षुरिन्द्रियं नोऽस्मान् मा हासीत् कदाचिदपि मा परित्यजतु ॥

[8]अथाष्टमीमाह—चक्षुर्देवताप्रसादेन नोऽस्मदीयमायुरित् प्रतीर्यतां सर्वथा वर्धताम् । अनेन चक्षुषा युक्ता वयं जीवाः काप्यनन्धाः सन्तो रूपाभिव्यक्तवृत्तिलक्षणं ज्योतिः अशीमहि प्राप्नुयाम । उत अपि च सुवः स्वर्गस्थितममृतं ज्योतिः विनाशरहितमादित्यप्रकाशं अशीमहि चक्षुषा पश्येम । तदिदं मन्त्रद्वयं चक्षुर्देवताविषयं द्रष्टव्यम् ॥

रशीमहि । सुवर्ज्योतिरुतामृतम् । [9]श्रोत्रेण भद्रमुत शृण्वन्ति सत्यम् । श्रोत्रेण वाचं बहुधोद्यमानाम् । श्रोत्रेण मोदश्च महश्च श्रूयते । श्रोत्रेण सर्वा दिश आशृणोमि । [10]येन प्राच्या उत दक्षिणा । प्रतीच्यै दिशश्शृण्वन्त्युत्तरात् । तदिच्छ्रोत्रं बहुधोद्यमानम् । अरान्न नेमिः परि सर्वं बभूव ॥

अग्निप्रियमनपस्फुरन्ती सत्यꣳ सप्त च ॥१॥

[9]अथ नवमीमाह—यद्भद्रं कल्याणं यच्च सत्यं वचनं तत्सर्वं श्रोत्रेणैव सर्वे शृण्वन्ति । येयं वाक् प्राणिभिर्बहुधोच्यते तां सर्वां वाचमनेन श्रोत्रेन्द्रियेण सर्वो जनः शृणोति । किं च—योऽयं मोदो हर्षविषयो वृत्तान्तो यच्च महः पूजाविषयो वृत्तान्तः स सर्वोऽपि श्रोत्रेणैव श्रूयते । किंच–सर्वा दिशो योऽयं सर्वदिग्विषयो वृत्तान्तः तमप्यहं श्रोत्रेण सर्वत आशृणोमि ॥

[10]अथ दशमीमाह—येन श्रोत्रेण प्राच्यादिदिग्भ्य आगतं शब्दं शृण्वन्ति, तदेव श्रोत्रं बहुधोद्यमानं उच्यमानं शब्दजातं सर्वं परिबभूव परिगृह्य वर्तते रथनेमिरिव सर्वान् अरान् । चक्रस्य बहिर्वलयो नेमिः तदन्तर्वर्तिनोऽवयवाः कालसंज्ञा अराः । एतच्च मन्त्रद्वयं श्रोत्रविषयं द्रष्टव्यम् । एतेषां दशानां मन्त्राणां जातकर्मणि विनियोगं बोधायन आह—"अथैनं दधि मधु घृतमिति समुदाहृत्य हिरण्येन प्राशयति प्राणो रक्षति विश्वमेजदित्यनुवाकेन प्रत्यृचम्" इति ॥

इति तैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके पञ्चमप्रपाठके प्रथमोऽनुवाकः.

[1]उदेहि वाजिन्यो अंस्युप्स्वन्तः । इदꣳ राष्ट्रमाविश सूनृतावत् । यो रोहितो विश्वमिदं जजान । स नो राष्ट्रेषु सुधितान्दधातु । [2]रोहꣳ रोहꣳरोहित आरुरोह । प्रजाभिर्वृद्धिं जनुषामुपस्थम् । ताभिस्सꣳरब्धो अविदत्षडुर्वीः । गातुं प्रपश्यं-

[1] द्वितीयेऽनुवाके प्रथमामृचमाह—हे वाजिन्! अश्वमेधे कर्मणि प्रयुज्यमान! हे अश्व! उदेहि जलमध्यादुद्गच्छ । अत्राश्वमेधे भारद्वाजसूत्रम्—"अश्वमपोऽवगाह्य स्नापयित्वा समुह्य ततो ह्यस्तारमनुदकमुदानयति उदेहि वाजिन्नित्यष्टाभिः" इति । अतोऽत्राश्वमेधगतमश्वं संबोध्योच्यते योऽयमश्वोऽप्स्वन्तर्वर्तते स त्वमुदेहि, उद्गत्य च सूनृतावत् प्रीतियुक्तमिदं राष्ट्रमाविश । इहास्यतामिह भुज्यतामित्येवंरूपा वाणी सूनृता । अस्य चाश्वस्य प्रजापतिजन्यत्वेन तद्रूपत्वमुपचर्य प्रशस्यते—योऽश्वः स्वकारणभूतप्रजापतिरूपेण रजोगुणयुक्तत्वाद्रोहितस्सन् इदं विश्वं जजान उत्पादयामास, स प्रजापतिरूपोऽश्वो नोऽस्मानेतेषु राष्ट्रेषु सुधितान् सुखयुक्तान्कृत्वा स्थापयतु ॥

[2] अथ द्वितीयामाह—हे रोहित! रोहिद्वर्ण! प्रजापतिस्वरूपाश्व! रोहं रोहं भौमं भोगं स्वर्गभोगं आरुरोह आरोहणं कुरु । काभिः? प्रजाभिस्सह । कमिव? वृद्धिमिच्छता प्रजानां संबन्धि उपस्थं प्रत्यारोहणमिव । ताभिः प्रजाभिः सह संरब्ध उत्साहयुक्तस्सन् षडुर्वीः अविदत् ज्ञातवानासि । उर्वीर्गातुं गन्तुं प्रपश्यन्निह राष्ट्रं आहाः आहृतवानसि । तव प्रेक्षणवशाद्राष्ट्रस्था जनाः संनिहिता इत्यर्थः ॥

न्निह राष्ट्रमाहार्षीः । [3]आहार्षीद्राष्ट्रमिह रोहितः । मृधो व्यास्थदभयं नो अस्तु ॥ ४ ॥ अस्मभ्यं द्यावापृथिवी शक्करीभिः । राष्ट्रं दुहाथामिह रेवतीभिः । [4]विमममर्श रोहितो विश्वरूपः । समाचक्राणः प्ररुहो रुहश्च । दिवं गत्वाय महता महिम्ना । वि नो राष्ट्रमुनत्तु पयसा स्वेन । [5]यास्ते वि-

[3]अथ तृतीयामाह—रोहितस्त्वं राष्ट्रमिह आहार्षीत् आहृतवानसि व्यास्थत् व्यास्थात् विरोधिनिष्पाद्यात् मृधो युद्धात् अश्वाभिन्नप्रजापते! तव प्रसादान्नोऽभयमस्तु । अश्वाभिन्नप्रजापते! तव प्रसादात् द्यावापृथिवी द्यावापृथिव्यौ शक्करीभिः शक्करीछन्दोयुक्ताभि रेवतीभिः सामाभिमानिनीभिर्देवताभिस्सह अस्मभ्यमस्मदर्थं राष्ट्रं दुहाथां पूरितवत्यौ ॥

[4]अथ चतुर्थीमाह—स रोहितः प्रजापतिः विममर्श परामर्शं कृतवाननेनेदं कर्म कृतमयमस्य फलस्य योग्य इति परामर्शः । कीदृशः प्रजापतिः? विश्वरूपः सर्वजगदाकारेण वर्तमानः, तथा समाचक्राणः सम्यग्ग्रस्यमानान् फलविशेषान्कुर्वाणः । ते च फलविशेषाः प्ररुहो रुहश्चेति शब्दद्वयेन निर्दिश्यन्ते । प्रकर्षेण रुह्यन्ते प्राप्यन्त इति प्ररुहः स्वर्गभोगाः । रुहो मानुषा भोगाः । तदुभयं कुर्वाणः स प्रजापतिर्दिवं गत्वाय स्वर्गं प्राप्य महता महिम्ना स्वकीयेनात्याधिक्येन माहात्म्येन नोऽस्मदर्थमिदं राष्ट्रं स्वेन पयसा स्वकीयेन वृष्टिजलेन व्युनत्तु विशेषेण क्लेदयतु ॥

[5]अथ पञ्चमीमाह—हे रोहित! प्रजापते! त्वदीयेन तपसा या विशः प्रजाः संबभूवुः । तथा ह्यन्यत्राम्नायते—"स तपोऽतप्यत । स

शस्तपसा संबभूवुः । गायत्रं वत्समनु तास्त आगुः । तास्त्वा विशन्तु महसा स्वेन । सं माता पुत्रो अभ्यैतु रोहितः ॥५॥ यूयमुग्रा मरुतः पृश्निमातरः । इन्द्रेण सयुजा प्रमृणीथ शत्रून् । आ वो

तपस्तप्त्वा । इदꣳ सर्वमसृजत "* इति । ते त्वदीयास्ताः प्रजा गायत्रं वत्समन्वागुः । "एष वै गायत्रियै वत्सो यदाग्रयणः"† इति श्रुत्यन्तरात् । आग्रयणग्रहो गायत्र्याख्यधेनोर्वत्सस्थानीयः । तमाग्रयणाख्यं वत्समश्वमेधस्य मध्यमेऽहन्यनुष्ठितवन्तः । ताः प्रजाः स्वेन महसा स्वकीयेनानुष्ठितेन महिमाख्यग्रहेण त्वां विशन्तु । किं बहुना—माता सर्वभूतानां सम्यङ्निर्माता पुत्रवद्रक्षको रोहितोऽश्वरूपः प्रजापतिः अभ्येतु अस्मानभिलक्ष्यागच्छतु ॥

अथ षष्ठीमाह—हे मरुतः! यूयं सयुजा युष्माभिस्सहावस्थितेनेन्द्रेण साकमस्मदीयान् शत्रून् प्रमृणीथ निराकुरुत । रोहितः प्रजापतिरूपोऽयमश्वो वो युष्मानाऽशृणोत् शत्रुक्षयकारिण एते इति भवदीयां कीर्तिं सर्वदा शृणोति । कीदृशा मरुतः? उग्राः शत्रुविषये कोपयुक्ताः । पृश्निर्माता तेषां ते पृश्निमातरः । "पृश्नेः पुत्रा उपमासः"‡ इति हि मन्त्रान्तरम् । "पृश्नियै वै पयसो मरुतो जाताः"§ इति च ब्राह्मणम् । अभिद्यवः अभितो द्योतमानाः त्रिसप्तासः त्रिविधाः सप्त संख्या येषां ते त्रिसप्तासः । "सप्तगणा वै मरुतः"§ इति ब्राह्मणाम्नानात् । सप्तगणाः** सप्त-

* तै. उ. २-६. † सं. ६-४-११. ‡ ब्रा. २-८-५.
§ सं. २-२-११. ** ग. मरुद्गणाः.

रोहितो अशृणोदभिद्यवः । त्रिसंप्तासो मरुत-
स्स्वादुसंमुदः । [7]रोहितो द्यावापृथिवी जजान । त-
स्मिꣳस्तन्तुं परमेष्ठी ततान । तस्मिञ्छिश्रिये अ-

संख्याकाः । तत्र 'धुनिश्च ध्वान्तश्च'* इत्यारण्यकानुवाकोक्तो गणो मध्यमः । तस्मात्पूर्ववर्तिनः 'ईदृङ्च'† इत्यादिनोक्तास्त्रयो गणाः । 'ऋतश्च सत्यश्च'† इत्यादिनोक्ता उत्तरभाविनस्त्रयो गणास्तत्रैकस्मिन्गणत्रये तिस्रः सप्तसंख्या विद्यन्ते तस्मात्ते त्रिसप्तास इत्युच्यन्ते । स्वादुना हविषा सम्यङ्मोदन्त इति स्वादुसंमुदः । अत्र मरुत इति संबुद्ध्यन्तं पदं द्विराम्नातम्, तच्च वाक्यद्वये योजनीयम् । हे मरुतः! शत्रून्प्रमृणीथ । हे मरुतः! युष्मान् रोहितोऽशृणोदिति योजना ॥

[7]अथ सप्तमीमाह—योऽयं रोहितोऽश्वरूपः प्रजापतिः स एव पुरा द्यावापृथिव्यावुत्पादितवान् । तस्मिन् रोहितेऽश्वे परमेष्ठी प्रजापतिः तन्तुं अश्वमेधतन्तुपरम्परां ततान विस्तारितवान् । एक एव पद्यते गच्छतीत्येकपात् । तथा च मन्त्रान्तरम्—"सूर्य एकाकी चरति"‡ इति । स च मनुष्यवत्सृष्टिमध्ये पुनःपुनर्जन्मरहितत्वादजः तादृशः सूर्योऽपि तस्मिन् रोहितेऽश्वे शिश्रिये आश्रितवान् । रोहिताश्वस्य प्रजापतिद्वारा जगत्सृष्टिकर्तृत्वात्सूर्यस्य तदाश्रितत्वं युक्तम् । स च रोहितः प्रजापतिः स्वकीयेन बलेन द्यावापृथिव्यौ अदृंहत् दृढीचकार ॥

* आ. ४-२४.     † सं. ४-६-५.     ‡ सं. ७-४-१८.

ज एकपात् । अदृꣳहद्द्यावापृथिवी बलेन। [8]रोहितो द्यावापृथिवी अदृꣳहत् । तेन सुवस्स्तभितं तेन नाकः ॥६॥ सो अन्तरिक्षे रजसो विमानः । तेन देवास्सुवरन्वविन्दन् । [9]सुशेवं त्वा भानवो दीदिवाꣳसम् । समग्रासो जुह्वो जातवेदः । उक्षन्ति त्वा वाजिनमाघृतेन । सꣳसमग्ने युवसे भोजना-

[8]अथाष्टमीमाह—रोहितः प्रजापतिः द्यावापृथिव्यौ दृढीकृतवान् । तेन रोहितेन सुवः स्तभितं स्वर्गलोको यथाऽधो न पतति तथा स्तम्भितः । तथा नाकनामा स्वर्गविशेषोऽपि तेन स्तम्भितः । स एव रोहितोऽन्तरिक्षे रजसो रञ्जकस्य ज्योतिर्गणस्योदकस्य वा विमानो विशेषेण निर्माता । तेन रोहितेन देवा इन्द्रादयोऽपि सुवरन्वविन्दन् स्वर्गं लब्धवन्तः । एवमेतैरष्टभिर्मन्त्रैरश्वमेधगतस्याश्वस्य जलमध्यादुद्गमनं कुर्यात् ॥

[9]अथ नवमीमाह—हे जातवेदः! जुह्वो जुह्वाद्याः स्रुचः समग्रासः घृतपूर्णाः सत्यः स्वनिष्ठेन घृतेन त्वामुक्षन्ति । कीदृश्यो जुह्वाद्याः? भानवो घृतपूर्णत्वाद्भासमानाः । कीदृशं त्वां? सुशेवं सुखेन सेवितुं शक्यं दीदिवांसं अत्यन्तं दीप्यमानं वाजिनं वेगवन्तम् । अत्र त्वेति पदं द्वितीयान्तं द्विराम्नातम् । तत्रैकं प्रथमान्तत्वेनोपरि नेतव्यम् । हे अग्ने! त्वं भोजनानि भोक्तुं योग्यान्यस्मदीयहवींषि संसं अत्यन्तसम्यक्त्वेन युवसे मिश्रयसि स्वीकरोषीत्यर्थः ॥

नि । [10]अग्ने शर्ध महते सौभगाय । तव द्युम्नान्युत्तमानि सन्तु । सं जास्पत्यꣳ सुयममाकृणुष्व । शत्रूयतामभितिष्ठा महाꣳसि ॥७॥

अस्त्वेतु रोहितो नाको महाꣳसि ॥२॥

[1]पुनर्न इन्द्रो मघवा ददातु । धनानि शक्रो धन्यस्सुराधाः । अर्वाचीनं कृणुतां याचितो मनः ।

---

[10]अथ दशमीमाह—हे अग्ने ! अस्माकं महते सौभगाय सौभाग्याय शर्ध उत्सहस्व । तव संबन्धीनि द्युम्नानि उत्तमानि मणिमुक्तादीनि धनान्यस्माकं सन्तु । जास्पत्यं जायापतिभावं सुयमं सुष्ठु नियतं समाकृणुष्व सम्यक् संपादय । शत्रूयतां शात्रवमिच्छतां पुरुषाणां महांसि तेजांसि अभितिष्ठ अभित आक्रामस्व । इदं मन्त्रद्वयमाग्नेये कर्मणि द्रष्टव्यम् । तत्रोत्तरस्य विवाहकर्मण्यपि विनियोगं बोधायन आह—"अथ तथोपविश्यान्वारब्धायामुपयमनीर्जुहोत्यग्ने शर्ध महते सौभगाय" इति ॥

इति तैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः.

---

[1]तृतीयानुवाके प्रथमामृचमाह—अस्मदीयानि धनानि यानि नष्टानि तानि सर्वाणि पुनरपि नोऽस्मभ्यमिन्द्रो ददातु । कीदृश इन्द्रः ? मघवा धनवान् शक्रः शक्तियुक्तः धन्यो धनदानार्हः

श्रुष्टी नो॑ अ॒स्य ह॒विषो॑ जुषा॒णः । [2]यानि॑ नो जि॒नन्धना॑नि । ज॒हर्थ॑ शूर म॒न्युना॑ । इन्द्रानु॑विन्द न॒स्तानि॑ । अ॒नेन॑ ह॒विषा॒ पुनः॑ । [3]इन्द्र॒ आशा॑भ्य॒ः परि॑ । सर्वा॒भ्योऽभ॑यं करत् ॥ ८ ॥ जेता॒ शत्रू॑न् वि॒चर्ष॑णिः । [4]आकू॑त्यै त्वा॒ कामा॑य त्वा स॒मृधे॑ त्वा ।

सुराधाः शोभनान्नयुक्तः । तादृशोऽयमिन्द्रो याचितोऽस्माभिः प्रार्थितस्सन् स्वकीयं मनोऽर्वाचीनं कृणुतामस्मदभिमुखं करोतु । नोऽस्मदीयस्यास्य हविषो भागं श्रुष्टी जुषाणः शीघ्रं सेवमानः स इन्द्रोऽस्मदभीष्टं करोतु ॥

[2]अथ द्वितीयामाह—हे शूरेन्द्र ! त्वं विहितस्याननुष्ठानान्निषिद्धसेवनाद्वा पापयुक्तान् नः अस्मान् जिनन् शिक्षार्थं हिंसन् मन्युनाऽस्मासु क्रोधेन यान्यस्मदीयानि धनानि जहर्थ अपहृतवानसि । अनेनास्मदीयेन हविषा तुष्टस्सन् पुनरपि नोऽस्माकं तानि धनान्यनुविन्द अनुग्रहेण लम्भस्व देहीत्यर्थः । एतदुभयं नष्टधनस्य पुनःप्राप्त्यर्थे कस्मिंश्चिदैन्द्रे कर्मणि द्रष्टव्यम् ॥

[3]अथ तृतीयामाह—विचर्षणिः विविच्य द्रष्टा शत्रूणां जेतेन्द्रः सर्वाभ्यो दिग्भ्यः परितो वर्तमानाभ्योऽस्माकमभयं करत् करोतु । अयं मन्त्रः पूर्वत्रैवोपहोमार्थः ॥

[4]अथ चतुर्थीमाह—हे इन्द्र ! आकूत्यादिसिद्ध्यर्थं त्वां पुरो दधे पुरस्कृत्य सेवे । आकूतिः संकल्पः कामो भोगः समृत् समृद्धिः अमृतत्वं अपमृत्युराहित्यं, जीवनं अन्नादिसंपत्तिः ॥

पुरो दधे अमृतत्वाय जीवसे । [5]आकूतिमस्यावसे । काममस्य समृद्ध्यै । इन्द्रस्य युञ्जते धियः । [6]आकूतिं देवीं मनसः पुरो दधे । यज्ञस्य माता सुहवा मे अस्तु । यदिच्छामि मनसा सकामः । विदेयमेनद्धृदये निविष्टम् ॥ १ ॥ [7]सेदग्निरग्नीँ रत्येत्यन्यान् । यत्र वाजी तनयो वीडुपाणिः । सह-

[5]अथ पञ्चमीमाह—लोके बुद्धिमन्तः कर्तारः अवसे रक्षणार्थं समृद्ध्यै धनादिसमृद्ध्यर्थं च अस्येन्द्रस्य अकूतिं संकल्पं काममिच्छां धियः बुद्धिविशेषांश्च युञ्जते आश्रयन्ति । न त्विन्द्रनैरपेक्ष्येण स्वतन्त्रानाकूत्यदीन्लभन्ते ॥

[6]अथ षष्ठीमाह—अहमाकूतिं संकल्पाभिमानिनीं देवीं कार्येषु कुर्वाणस्य मनसः पुरो दधे संकल्पपूर्वमेव सर्वं कार्यं मदीयेन मनसा क्रियत इत्यर्थः । सेयमाकूतिर्यज्ञस्य मातृस्थानीया सती मे मम सुहवा सुखेनाह्वातुं शक्याऽस्तु । सकामः कामसहितोऽहं मदीयेन मनसा यत्कार्यं कर्तुमिच्छमि मदीये हृदये निविष्टमेनत् तत्कार्यं विदेयं लभेयम् । अस्य मन्त्रत्रयस्य कर्मणामादौ संकल्पे विनियोगं बोधायन आह—“आकूत्यावेदनं करोति आकूत्यै त्वा कामाय त्वा समृधे त्वा” इति ॥

[7]अथ सप्तमीमाह—यत्र यस्मिन्नग्नौ यजमानेनोपचरिते सति तनयः पुत्रो वाजी अन्नवान् वीडुपाणिः यागदानादिषु दृढहस्तः सहस्रपाथाः सहस्रसंख्याकेनान्नेन युक्तस्सन् अक्षरा अक्षरेणाप्यविनाशेन जीवनेन

स्वेपाथा अक्षरा समेति ।[8]आशानां त्वाऽऽशापालेभ्यः । चतुर्भ्यो अमृतेभ्यः । इदं भूतस्याध्यक्षेभ्यः। विधेम हविषा वयम् ।[9]विश्वा आशा मधुना स२ सृजामि । अनमीवा आप ओषधयो भवन्तु । अयं यजमानो मृधो व्यस्यताम् ॥ १० ॥ अगृभीताः

समेति संगच्छते । सेदग्निः स एवोपचरितोऽग्निः अन्यानितरयजमानसंबन्धानग्नीन् अत्येति अतिक्रामति । सोऽयं मन्त्रः प्रायणीयेष्टौ स्विष्टकृतः पुरोनुवाक्या ॥

[8]अथाष्टमीमाह—हे पशो ! त्वां आशानां दिशां मध्ये आशापालेभ्यो विशिष्टानां दिशां पालेभ्यः चतुर्भ्य इन्द्रयमवरुणसोमेभ्योऽमृतेभ्यो देवेभ्यः समर्पयामीति शेषः । भूतस्य अस्मिन्कर्मणि प्राप्तस्य पशोरध्यक्षेभ्यः स्वामिभ्यो देवेभ्यो वयं हविषेदं विधेम शीघ्रमेव परिचरेम ॥

[9]अथ नवमीमाह—विश्वा आशाः सर्वा दिशोऽहं मधुना मधुरेण वृष्ट्युदकेन संसृजामि संयोजयामि । तेन आप ओषधयश्चानमीवा रोगरहिता भवन्तु । अयं च यजमानो मृधः शत्रून् व्यस्यतां निरस्यतु । सर्वे पशवः अगृभीता व्याघ्रतस्करादिभिरस्वीकृताः सन्तु । इदं मन्त्रद्वयं पशौ संज्ञप्यमाने यजमानेन जप्यम् । तथा दिवश्श्येनीसंज्ञिकास्विष्टिषु "अशायै चरुम्"* इत्यस्य याज्यानुवाक्ये । तथा च तयोः प्रतीकद्वयमाम्नातम्—"आशानां त्वा विश्वा आशाः" † इति ॥

* ब्रा. ३-१२-२. † ब्रा. ३-१२-१.

पशवस्सन्तु सर्वे । [10]अग्निस्सोमो वरुणो मित्र इन्द्रः। बृहस्पतिस्सविता यस्सहस्री । पूषा नो गोभिरवसा सरस्वती । त्वष्टा रूपाणि समनक्तु यज्ञैः । [11]त्वष्टा रूपाणि दधती सरस्वती । पूषा भगꣳ सविता नो ददातु । बृहस्पतिर्ददिन्द्रस्सहस्रम् । मित्रो दाता वरुणस्सोमो अग्निः ॥ ११ ॥

करन्निविष्टमस्यतां नव च ॥ ३ ॥

[10]अथ दशमीमाह—अग्न्यादयः त्वष्टृदेवपर्यन्ता ये दश देवाः सन्ति तेषां मध्ये एकैक एव नोऽस्माकमवसा रक्षणाय गोभिः समनक्तु संयोजयतु । यज्ञैश्च समनक्तु । त्वाष्टा देवो रूपाणि पुत्रपौत्रादिशरीराण्यपि समनक्तु । यः सहस्रीति सवितृविशेषणं, यः सहस्रसंख्याकरश्मियुक्तः सोऽयं सवितेति योज्यम् ॥

[11]अथैकादशीमाह—अयं त्वष्टा रूपाणि पुत्रादिशरीराणि ददातु । सरस्वती दधती धारयित्री भूयात् । पूषा सविता बृहस्पतिश्च प्रत्येकं नोऽस्मभ्यं भगं सौभाग्यं ददातु । इन्द्रः सहस्रं सहस्रसंख्याकं गोधनादिकं ददत् ददातु । मित्रवरुणसोमाग्निष्वेकैकः सहस्रस्य दाता भवतु । एतच्च मन्त्रद्वयं मित्रविन्दायामिष्टौ याज्यानुवाक्ये । तथा चाश्वलायनः—“मित्रविन्दा महावैराजी” इत्यादिनोदाजहार ॥

इति तैत्तरीयब्रह्माणभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः.

[1]आ नो॑ भर॒ भग॑मिन्द्र द्यु॒मन्त॑म् । नि ते॑ दे॒ष्णस्य॑ धीमहि प्ररे॒के । उ॒र्व इ॑व पप्रथे॒ कामो॑ अ॒स्मे । तमापृ॑णा वसुपते॒ वसू॑नाम् । [2]इ॒मं काम॑ मन्दया॒ गोभि॒रश्वैः॑ । च॒न्द्रव॑ता॒ राध॑सा प॒प्रथ॑श्च । सु॒व॒र्यवो॑ म॒तिभि॒स्तुभ्य॒ं विप्राः॑ । इन्द्रा॑य॒ वाहः॑ कु॒शि॒कासो॑ अक्रन् । [3]इन्द्र॑स्य॒ नु वी॒र्या॑णि॒ प्रवो॑चम् । यानि॑ च॒कार॑ प्रथ॒मानि॑ व॒ज्री ॥ १२ ॥ अह॒न्नहि॒मन्व॒-

[1]चतुर्थानुवाके प्रथमामृचमाह—हे इन्द्र ! द्युमन्तं दीप्यमानं भगं धनादिसौभाग्यं नोऽस्मभ्यमाभर संपादय । ते तव देष्णस्य दानस्य प्ररेके अतिशये सति अतिरिक्तं धनं यागार्थं तुभ्यं निधीमहि । उर्व इव वाडवाग्निरिवास्माकं कामः पप्रथे प्रथितोऽभूत् । वसूनां वसुपते ! बहुधनस्वामिन् ! तं काममापृण सर्वतः पूरय ॥

[2]अथ द्वितीयामाह—हे इन्द्र ! इममस्माकं कामं गोभिरश्वैः त्वया दत्तैः मन्दय हर्षहेतुं कुरु । चन्द्रवता हिरण्यवता राधसा रत्नादिधनेन च कामं पप्रथः प्रथय । सुवर्यवः स्वर्गमिच्छन्तो विप्रा ये मेधाविनः कुशिकासः कुशिकास्तु विश्वामित्रस्य पुत्रा मतिभिः स्तोत्रैः तुभ्यमिन्द्राय वाहोऽक्रन् वाहमकुर्वन् तदीया स्तुतिरेव त्वदागमनहेतुत्वाद्वाहनमित्यर्थः । एतच्चोभयमैन्द्रे कर्माणि द्रष्टव्यम् ॥

[3]अथ तृतीयामाह—वज्री वज्रहस्त इन्द्रः प्रथमानि यानि वीर्याणि शौर्याणि चकार, इन्द्रस्य संबन्धीनि तानि वीर्याणि नु क्षिप्रं प्रवोचं प्रवक्ष्यामि । प्रथमं तावत् अहिं वृत्राख्यमसुरमहन् हतवान् ।

पस्ततर्द । प्र वक्षणा अभिनत्पर्वतानाम् । [4]अहन्न‍हिं पर्वते शिश्रियाणम् । त्वष्टाऽस्मै वज्रं स्वर्यं ततक्ष । वाश्रा इव धेनवस्स्यन्दमानाः । अञ्जस्समुद्रमवजग्मुरापः । [5]वृषायमाणोऽवृणीत सोमम् । त्रिकद्रुकेष्वपिबत्सुतस्य । आ सायकं मघवा दत्त

अनु तदनन्तरं अपस्ततर्द मेघस्थितं जलं मेघभेदेन पृथिव्यां व्यापितवान् । अथ पर्वतानां वक्षणा पक्षान् प्राभिनत् प्रकर्षेण भिन्नवान् ॥

[4]अथ चतुर्थीमाह—पर्वते पर्वतसमाने मेघे शिश्रियाणं आश्रितमहिं जलनिरोधकमाहिनामानमसुरं अहन् हतवान् । त्वष्टा देवोऽस्मा इन्द्राय स्वर्यं स्वर्गाय हितं वज्रं ततक्ष तीक्ष्णीकृतवान् । ततो वज्रेण वृष्टिनिरोधके शत्रौ हते सति स्यन्दमाना आपः समुद्रं समुद्रसमानं भूप्रदेशं अञ्जः समञ्जसं यथा भवति तथा अवजग्मुः प्राप्ताः । अपां दृष्टान्तः—वाश्रा धेनव इव यथा वत्समाकारयितुं शब्दं कुर्वत्यो धेनवो दुहन्ति तद्वत् ॥

[5]अथ पञ्चमीमाह—वृषायमाणो घासं जिघत्सुर्वृषभ इव बलवान् देवानां पानार्थमिन्द्रः सोममवृणीत । ततः त्रिकद्रुकेषु 'ज्योतिर्गौरायुः'* इत्येतेषु त्रिकद्रुकनामकेषु यज्ञेषु सुतस्य अभिषुतस्य सोमस्य रसं अयमिन्द्रोऽपिबत् । तथा मघवा इन्द्रः सायकं बाणवत्तीक्ष्णं वज्रमादत्त स्वीकृतवान् । आदाय च अहीनामसुराणां मध्ये प्रथमजां प्रथमोत्पन्नमेनं वृत्रमहन् हतवान् ॥

*सं. ७-३-११.

वज्रम्। अहन्नेनं प्रथमजामहीनाम् ॥ १३॥ [6]यदि-न्द्राहन्प्रथमजामहीनाम् । आन्मायिनाममिनाः प्रोत मायाः । आत्सूर्यं जनयन्द्यामुषासम् । तादीक्ना शत्रून्न किलाविवित्से । [7]अहन्वृत्रं वृत्रतरं व्यंसम् । इन्द्रो वज्रेण महता वधेन । स्कन्धांसीव कुलिशेना विवृक्णा । अहिश्शयत उपपृ-

[6]अथ षष्ठीमाह—हे इन्द्र! यद्यदा त्वमहीनां प्रथमजां हतवानसि आत् अनन्तरं मायिनां मायायुक्तानामसुराणां माया उत सर्वा अपि मायाः प्रामिनाः प्रकर्षेण शितवानसि । आत् अनन्तरं सूर्यं जनयन् स्वर्भानुसंज्ञकेनासुरेण प्रयुक्ते तमसि मग्नं सूर्यं प्रादुर्भावयन्, तथोषासं द्यां जनयन् उषःकालं दीप्तं कुर्वन्वर्तसे। तादीक्ना तादृशान् शत्रून् कदाचिदपि त्वं नाविवित्से किल सर्वथा न लभसे॥

[7]अथ सप्तमीमाह—अयमिन्द्रो महता प्रौढेन वधेन वधसाधनभूतेनानेन वज्रेण वृत्रमहन् वृत्रनामकमसुरं हतवान्। कीदृशं वृत्रं? वृत्रतरं अतिशयेन लोकत्रयावारकम्। "स इमान्लोकानवृणोत्"* इति ब्राह्मणम्। व्यंसं छेदनेनांसरहितम्। ततोऽयमहिर्वृत्राख्यासुर इन्द्रेण हतस्सन् पृथिव्यां उपपृक् उपसंपृक्तः पतितोऽशयिष्ट। तत्र दृष्टान्तः—कुलिशेन कुठारेण विवृक्णा विशेषतश्छिन्नानि स्कन्धांसीव वृक्षस्य स्कन्धा यथा भूमौ निपतन्ति तद्वत्॥

* सं. २-५-२.

कर्पृथिव्याम् । [8]अयोध्येव दुर्मद आ हि जुह्वे । महावीरं तुविबाधमृजीषम् ॥ १४ ॥ नातारीरस्य समृतिं वधानाम् । सं रुजानाः पिपिष इन्द्रशत्रुः । [9]विश्वो विहाया अरतिः । वसुर्दधे हस्ते दक्षिणे ।

[8]अथाष्टमीमाह—दुर्मदो मदान्धो वृत्र इन्द्रमाजुह्वे हि युद्धार्थमाहुतवान्किल । तत्र दृष्टान्तः—अयोध्येव यथा लोके योद्धुमशक्तो वृथैव वाचा युद्धार्थं गर्जनं करोति तद्वत् । कीदृशमिन्द्रं ? महावीरं शूरेषु मध्येऽत्यन्तमेव शूरम् । विबाधं बाधरहितम् । ऋजीषं सोमसंबन्धिनम् । ऋजीषस्यापि भक्षकत्वादृजीषरूपम । तादृशस्यैवेन्द्रस्य शत्रुर्वृत्र अस्येन्द्रस्य वधानां समृतिं संगमं नातारीः न प्राप्तवान् इन्द्रं हन्तुं न शक्त इत्यर्थः । प्रत्युत रुजानाः भङ्गं प्राप्नुवतीः स्वकीया एव सेनाः संपिपिषे सम्यक्पिष्टवान् वज्रेण हतो भूमौ पतन् सन् समीपवर्तिनः सर्वान् शूरांश्चूर्णीकृतवानित्यर्थः । "इन्द्रस्य नु वीर्याणि" इत्यारभ्य षण्मन्त्रा निष्केवल्यशस्त्रेऽन्तर्भावनीयाः ॥

[9]अथ नवमीमाह—अयमग्निः विश्वो विश्वात्मको विहाया विशिष्टगतियुक्तः अरतिः उपरतिरहितः । हविर्वहनाय पुनःपुनरागमने नास्त्यस्योपरतिः । वसुः निवासहेतुः तादृशोऽयमग्निर्ब्राह्मणस्य दक्षिणे हस्ते दधे धृत आसीत् । अत एव तत्र होम आम्नातः—"ब्राह्मणस्य दक्षिणे हस्ते होतव्यम्"* इति । तरणिः

*ब्रा. १-७-२.

तरणिर्न शिश्रथत् । श्रवस्यया न शिश्रथत् । विश्वस्मा इदिषुध्यसे । देवत्रा हव्यमूहिषे । विश्वस्मा इत्सुकृते वारमृण्वति । अग्निर्द्वारा व्यृण्वति ॥ [10]उदुज्जिहानो अभिकाममीरयन् । प्रपृञ्चन्विश्वा भुवनानि पूर्वथा । आ केतुना सुषमिद्धो यजिष्ठः । कामं नो अग्ने अभिहर्य दिग्भ्यः । [11]जुषाणो ह-

दुःखेभ्यस्तारयिता न शिश्रथत् शिथिलो न भवति । तत्र हेतुः— श्रवस्यया हविर्लक्षणान्नेच्छया न शिश्रथत् पुनःपुनरभिवृद्ध एवाभून्न तु शिथिलः । विश्वस्मा इत् सर्वस्मै जगत एव सर्वजगद्रक्षणार्थं इषुध्यस ईश्वरो भवसि । इषुध ऐश्वर्य इति धातुः । देवत्रा सर्वेषु देवेषु हव्यमूहिषे अस्मदीयं हव्यं वहसि । विश्वस्मा इत्सुकृते सर्वस्मा अपि पुण्यकृते तदर्थं वारमृण्वति वार्यन्ते प्रवेशार्थिनः प्राणिनो यत्र तत्सुवर्गस्य द्वारं वारमित्युच्यते, तदपावृणोति । तदेव स्पष्टीक्रियते—अयमग्निः द्वारा स्वर्गद्वारं व्यृण्वति विवृतं करोति । अत्यष्टित्वादियमष्टपदी ॥

[10]अथ दशमीमाह—हे अग्ने! दिग्भ्यः सकाशात् नः अस्मदीयं कामं अभीष्टमर्थं अभिहर्य संपादय । किं कुर्वन्? उदुज्जिहानः अत्यन्तमूर्ध्वमुद्गच्छन् काममभीष्टमर्थमभिमतं ईरयन् प्रेरयन् । विश्वा भुवनानि पूर्वथा यथापूर्वं केतुना स्वकीयेन धूमेन प्रपृञ्चन् प्रकर्षेण संयोजयन् । कीदृशोऽग्निः? सुषमिद्धः अत्यन्तदीप्तः यजिष्ठोऽतिशयेन यष्टा ॥

[11]अथैकादशीमाह—हे अग्ने! हव्यं जुषाणोऽस्मदीयं हविः

व्यममृतेषु दूढ्यः । आ नो रयिं बहुला गोमतीमिषम् । निधेहि यक्षदमृतेषु भूषन् । [12]अश्विना यज्ञमागतम् । दाशुषः पुरुदंससा । पूषा रक्षतु नो रयिम् ॥ १६ ॥ [13]इमं यज्ञमश्विना वर्धयन्ता । इमौ रयिं यजमानाय धत्तम् । इमौ पशून्रक्षतां

सेवमानस्त्वं अमृतेषु देवेषु दूढ्यो यागरहितात्पुरुषात् आनीय नोऽस्माकं रयिं धनं बहुलामतिप्रभूतां गोमतीं गोभिर्युक्तां इषमन्नं निधेहि नितरां संपादय । यो दुर्बुद्धिः पुमान् देवेषु भक्तिं न करोति तदीयं धनमाहृत्यास्मभ्यं देहीत्यर्थः । यस्तु यजमानोऽमृतेषु देवेषु मध्ये भूषन् स्वात्मानमलंकुर्वन् देवत्वमात्मन इच्छन्नित्यर्थः । स यजमानः त्वद्दत्तेन धनादिना यक्षत् यागं करिष्यति । तदेतन्मन्त्रत्रयमाग्नेये कर्मणि द्रष्टव्यम् ॥

[12]अथ द्वादशीमाह—हे अश्विनौ! युवां पुरुदंससा भूरिकर्माणौ सन्तौ दाशुषो हविर्दत्तवतो यजमानस्य यज्ञमागतं आगच्छतम् । पूषा च नोऽस्मदर्थं रयिं रक्षतु ॥

[13]अथ त्रयोदशीमाह—हे अश्विनौ! इममस्मदीयं यज्ञं वर्धयन्ता वृद्धिं प्रापयन्ताविमौ युवां यजमानाय रयिं धनं धत्तं संपादयतम् । इमौ युवां नः अस्मदीयान् पशून् विश्वतः रक्षतां सर्वतो भयात् पालयतम् । अयं पूषा अप्रयुच्छन् प्रमादमकुर्वन् नोऽस्मदीयं सदं सदः स्थानं पातु । एतच्चोभयम्—"अश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति"* इत्यस्य याज्यानुवाक्ये ॥

* सं. १-८-१९.

विश्वतो नः । पूषा नः पातु सदमप्रयुच्छन् । [14]प्र ते महे सरस्वति । सुभगे वाजिनीवति । सत्यवाचे भरे मतिम् । [15]इदं ते हव्यं घृतवथ्सरस्वति । सत्यवाचे प्रभरेमा हवीꣳषि । इमानि ते दुरिता सौभगानि । तेभिर्वयꣳ सुभगासस्स्याम ॥१७॥

वज्यूहीनामृजीषं व्यृण्वति रक्षतु नो रयिꣳ सौभगान्सेकं च ॥४॥

[14]अथ चतुर्दशीमाह—हे सुभगे! सौभाग्ययुक्ते! हे वाजिनीवति! अन्नयुक्ते! हे महे! महति! हे सरस्वति! सत्यवाचे अनृतवाक्यरहितायै ते तुभ्यं मतिं मदीयां स्तुतिं प्रभरे संपादयामि॥

[15]अथ पञ्चदशीमाह—हे सरस्वति! ते तुभ्यं घृतवत् घृतयुक्तमिदं हव्यं अस्माभिस्संपादितमिति शेषः । सत्यवाचे तस्यै सरस्वत्यै इमानि संपादितानि हवींषि प्रभरेम प्रकर्षेण समर्पयामः । दुरिता यानि यान्यस्माभिः कृतानि तानि सर्वाणि हे सरस्वति! ते प्रसादात् सुभगानि सुकृतानि संपन्नानि । तेभिः तैः सुकृतैः वयं सुभगासः सौभाग्ययुक्ताः स्याम । एते ऋचौ "सरस्वते सत्यवाचे चरुम्"* इत्यस्य याज्यानुवाक्ये ॥

इति तैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः.

* तै. सं. १-८-१९.

[1]यज्ञो रायो यज्ञ ईशे वसूनाम् । यज्ञस्सस्यानामुत सुक्षितीनाम् । यज्ञ इष्टः पूर्वचित्तिं दधातु । यज्ञो ब्रह्मण्वाꣳ अप्येतु देवान् । [2]अयं यज्ञो वर्धतां गोभिरश्वैः । इयं वेदिस्स्वपत्या सुवीरा । इदं बर्हिरति बर्हीꣳष्यन्या । इमं यज्ञं विश्वे अवन्तु दे-

[1]अथ पञ्चमानुवाके प्रथमामृचमाह—यज्ञो यज्ञस्वामी यो देवः स रायो धनस्य मणिमुक्तादिरूपस्य ईशे स्वामी भवति । तथा यज्ञो वसूनां निवासहेतूनां गृहाणामीशे स्वामी भवति । तथाऽयं यज्ञः सस्यानां व्रीह्याद्योषधीनां स्वामी । उत अपि च सुक्षितीनां शोभनभूमीनामीशे स्वामी । इष्टो यज्ञः पूर्वचित्तिं दधातु पूर्वचित्तिं स्वर्गं दधातु । तथाऽन्यत्राम्नातम्—"द्यौरासीत्पूर्वचित्तिः"* इति । ब्रह्म वेदः, ब्राह्मण्वान् मन्त्रयुक्तो यज्ञो देवानप्येतु देवान्प्राप्नोतु ॥

[2]द्वितीयामाह—अयमस्माभिरनुष्ठीयमानो यज्ञो गोभिरश्वैश्च सह वर्धतां वृद्धिं प्राप्नोतु । इयं वेदिः यज्ञसंबन्धिनी स्वपत्या शोभन पुत्रप्रदा सुवीरा शोभनभृत्यप्रदा चास्तु । इदं च वेद्यामास्तीर्णं बर्हिः अन्या बर्हींषि इतरयजमानसंबन्धीनि बर्हींषि अतिक्रामतु । इमं चास्मदीयं यज्ञं विश्वे देवा अवन्तु रक्षन्तु । एते ऋचौ दिवःश्येनीनामिकास्विष्टिषु "यज्ञाय चरुम्"† इत्यस्य याज्यानुवाक्ये ॥

* सं. ७-४-१८. † ब्रा. ३-१२-२.

काः । [3]भग एव भगवाꣳ अस्तु देवाः । तेन वयं भगवन्तस्स्याम ॥ १८ ॥ तं त्वा भग सर्व इज्जोहवीमि । स नो भग पुरएता भवेह । [4]भग प्रणेतर्भग सत्यराधः । भगेमां धियमुदव ददन्नः । भग प्रणो जनय गोभिरश्वैः । भग प्र नृभिर्नृवन्तस्स्याम । [5]शश्वतीस्समा उपयन्ति लोकाः । शा-

[3]तृतीयामाह—हे देवाः! यो भगाख्यो देवः स एव भगवान् सौभाग्यवानस्तु । तेन देवेन वयं सर्वे भगवन्तः सौभाग्ययुक्ताः स्याम । हे भग! तादृशं त्वां सर्व इति सर्व एव जोहवीमि आह्वयामीत्यर्थः । हे भग! देव! इह कर्मणि नोऽस्माकं पुरएता पुरतो गन्ता भव ॥

[4]चतुर्थीमाह—हे प्रणेतः! प्रकर्षेण नेतुं कुशल! हे भग! देव अस्मान्कर्मणि प्रणयेति शेषः । हे सत्यराधः! सत्यधन! भगदेव! अस्मभ्यं धनं देहीति शेषः । हे भग! नोऽस्मभ्यमिमां धियं ददत् कर्मानुष्ठानबुद्धिं प्रयच्छन् उदव उत्कर्षेण रक्ष । हे भगदेव! नोऽस्मान् गोभिरश्वैः प्रजनय तद्युक्तान्कुर्वित्यर्थः । हे भग! त्वत्प्रसादाद्वयं नृभिः पुरुषैर्नृवन्तः पुरुषवन्तः स्याम । एतद्वयं 'भगाय चरुं वावातायै गृहे'* इत्यस्मिन्कर्मणि द्रष्टव्यम् ॥

[5]पञ्चमीमाह—लोकाः सर्वे प्राणिनः शश्वतीः शश्वतीः समा निरन्तरवर्तिनः संवत्सरान् उपयन्ति प्राप्नुवन्ति । एकस्मिन् संव-

*ब्रा. १-७-३.

श्वतीस्समा उपयन्त्यापः । इष्टं पूर्तꣳ शाश्वतीनाꣳ समानाꣳ शाश्वतेन । हविषेष्ट्वाऽनन्तं लोकं परमारुरोह ॥ ११ ॥ [6]इयमेव सा या प्रथमा व्यौच्छत् । सा रूपाणि कुरुते पञ्च देवी । [7]द्वे स्वसा-

त्सरेऽतीतेऽपि पुनरन्यं संवत्सरं प्राप्नुवन्ति । तथैवापः शाश्वतीः समा उपयन्ति निरन्तरं प्रवहन्ति । यथैतावुभौ दृष्टान्तौ तथा शाश्वतीनां समानां निरन्तरवर्तिनां संवत्सराणां संबन्धि इष्टं पूर्तं श्रौतं स्मार्तं च कर्म प्रवर्ततां कर्मानुष्ठानमनवच्छिन्नमस्त्वित्यर्थः । तेन शाश्वतेन निरन्तरानुष्ठितेन हविषा देवमिष्ट्वा अनन्तं विनाशरहितं परमुत्कृष्टं लोकमारुरोह पुरुष आरोहति । कृष्यादिफलवच्छ्रौतस्मार्तकर्मफलं सहसा न विनश्यति किंतु चिरमनुभवितव्यमित्यर्थः । अस्यामृचि देवताभिव्यक्त्यभावात् "अनिरुक्तः प्रजापतिः"* इत्यनुसारेण प्राजापत्ये कर्मण्येषा द्रष्टव्या ॥

[6]षष्ठीमाह—या सृष्ट्युपक्रमे प्रथमा उषा व्यौच्छत् व्युष्टाऽऽसीत् इयमेव सा इदानीमस्मान्प्रति सूर्योदयात्पूर्वकालरूपोषा प्रादुर्भवति सैव रूपाणि पुनःपुनरावर्तत इत्यर्थः । सा देव्येकैव सती पञ्च रूपाणि पञ्चर्तूंस्तच्छिह्नानि पञ्च वा कुरुते ॥

[7]सप्तमीमाह—अहश्च रात्रिश्चैते द्वे देवते स्वसारौ परस्परभगिन्यौ ते एतत्संवत्सरात्मकं तन्त्रं तन्तुनिष्पन्नं वस्त्रं वयतः । यथा कुविन्दस्तन्तुभिर्वस्त्रं वयति निष्पादयत्येवमेते संवत्सरं निष्पादयत

* ब्रा. १-१-८.

रौ वयतस्तन्त्रमेतत् । सनातनं वितत५ षण्मयूखम् । अवान्या५स्तन्तूंन्किरतो धत्तो अन्यान् । नावपृज्याते न गमाते अन्तम् । [8]आ वो यन्तूदवाहासो अद्य । वृष्टिं ये विश्वे मरुतो जुनन्ति । अयं यो अग्निर्मरुतस्समिद्धः । एतं जुषध्वं कव-

इत्यर्थः । तच्च संवत्सरात्मकं वस्त्रं कीदृशं? सनातनमनादिकालसिद्धम् । न हि संवत्सरप्रवाहस्यास्माभिर्दृश्यमान आदिः कश्चिदस्ति । अत एव विततं वस्त्रगतदीर्घतन्तुवद्विस्तीर्णं । षण्मयूखं षट्संख्याका ऋतवो मयूखाः शङ्कुस्थानीया यस्य तादृशं, कुविन्देन हि तन्तुप्रसरणाय शङ्कवो निखन्यन्ते तद्वदृतव इत्यर्थः । कुविन्दो हि वस्त्रनिर्माणकाले कांश्चिद्दीर्घतन्तूनधः कृत्वा मध्ये तिर्यक्तन्तून्धारयति एवमेते अप्यहोरात्रदेवते अन्यान् कांश्चिदहर्विशेषान् तन्तून् अस्तमयकालेषु अवकिरतः अधोगतान्कुरुतः, अन्यांश्च रात्रिरूपांस्तन्तूनस्तमयादूर्ध्वं धत्तो धारयतः । एते अहोरात्रदेवते कदाचिदपि नावपृज्याते । तस्यैव व्याख्यानं—अन्तं न गमाते संवत्सरात्मकवस्त्रनिर्माणस्य समाप्तिं न गच्छतः, निरन्तरं संवत्सरपरम्परां निष्पादयत इत्यर्थः । एतच्च मन्त्रद्वयं क्रमादुषोदेवताकेऽहोरात्रदेवताके च कर्मविशेषे द्रष्टव्यम् ॥

[8]अष्टमीमाह—हे मरुतः! ये विश्वे सर्वे मेघा वृष्टिं जुनन्ति जवेन त्वरया प्रेरयन्ति वो युष्मत्संबन्धिन उदवाहास उदकवाहिनो मेघा अद्यास्मिन्कर्मण्यायन्त्वागच्छन्तु । कवयः! सर्वज्ञाः!

यो युवानः ॥ २० ॥ [9]धारावरा मरुतो धृष्णुवोजसः । मृगा न भीमास्तविषेभिरूर्मिभिः । अग्नयो न शुशुचाना ऋजीषिणः । भ्रुमिं धमन्त उप गा अवृण्वत । [10]विचक्रमे [11]त्रिर्देवः । [12]आवेधसं नी-

युवानः! नित्यतरुणाः! मरुतः! यूयं योऽग्निरिह समिद्धस्तमेतं जुषध्वं वृष्ट्यर्थं सेवध्वम् । "अग्निर्वा इतो वृष्टिमुदीरयति मरुतस्सृष्टान्न यन्ति"* इति ब्राह्मणम् ॥

[9]नवमीमाह—एते मरुतो गा गोवद्दुहाना वृष्टीः उपावृण्वत समीपे वृतवन्तः, वृष्टिं संपादितवन्त इत्यर्थः। कीदृशा मरुतः? वृष्टिधारया भूमिं वृण्वन्ति व्याप्नुवन्तीति धारावराः, धृष्णु धर्षणक्षमं ओजो बलं येषां ते धृष्णुवोजसः । अत एव मृगा न सिंहव्याघ्रादिमृगा इव तविषेभिः बलवद्भिः ऊर्मिभिः गमनैः भीमा भयंकरा अग्नयो न शुशुचाना अग्नय इव दीप्यमाना ऋजीषिण ऋजीषोपलक्षितसोमपानयुक्ता भ्रुमिं भ्राम्यतीति भ्रुमिः मेघः तं धमन्तश्चालयन्तः। एतच्चोभयं मारुते कर्मणि द्रष्टव्यम् ॥

[10-11]दशम्या एकादश्याश्च प्रतीके दर्शयति—विचक्रम इत्येका त्रिर्देव इत्यपरा, एते "जुष्टी नरः"† इत्यत्र व्याख्याते। एतच्चोभयं वैष्णवे कर्मणि द्रष्टव्यम् ॥

[12]द्वादशीमाह—हे ऋत्विग्यजमानाः! बृहस्पतिं देवं सदने यज्ञस्थाने सादयध्वम्। कीदृशम्? आवेधसं सर्वतः स्रष्टारं नील-

* सं. २-४-१०. † ब्रा. २-४-३.

ल॑पृष्ठं बृ॒हन्त॑म् । बृह॒स्पति॒ꣳ सद॑ने सादयध्वम् । सा॒दद्यो॑निं॒ दम॒ आदी॑दि॒वाꣳस॑म् । हिर॑ण्यवर्णम॒रुष॒ꣳ स॑पेम । [13]स हि शुचि॑श्श॒तप॑त्र॒स्स शु॒न्ध्यूः ॥ हि॒र॑ण्यवाशीरिषि॒रस्सु॑व॒र्षाः । बृह॒स्पति॒स्स स्वा॑वे॒श ऋ॒ष्वाः । पू॒रू सखि॑भ्य आसु॒तिं कर्॑िष्ठः । [14]पूष॒ꣳस्तव॑ व्र॒ते व॒यम् । न रि॑ष्येम क॒दाच॒न ।

पृष्ठं पृष्ठभागे नीलं बृहन्तं गुणैर्महान्तं सादद्योनिं योनौ स्वर्गस्थाने यजमानान् सादयन्तं दमे गृहे आदीदिवांसं सर्वतो दीप्यमानं हिरण्यवर्णं स्वर्णसमानकान्तिं अरुषं रोषरहितं तादृशं बृहस्पतिं सपेम संबध्नीमः ॥

[13]त्रयोदशीमाह,—स हि प्रसिद्धो बृहस्पतिः शुचिः शुद्धः । शतपत्रः शतसंख्याकवाहनोपेतः । स बृहस्पतिः शुन्ध्यूः अन्येषामपि शोधको हिरण्यवाशीः हिरण्यस्य वाशो वाक्यं शतमस्मै देहि सहस्रमस्मै देहीत्यादिरूपं तेन वाक्येनोपेतः । इषिरः सर्वैरेषणीयः । सुवर्षाः स्वर्गप्रदः । स बृहस्पतिः स्वावेशः सुष्ठ्वावेष्टुं समाश्रयितुं शक्यः । ऋष्वा ऋषिरतीन्द्रियद्रष्टा । तादृशो बृहस्पतिः सखिभ्यः सखिसदृशेभ्यो यजमानेभ्यः पूरू प्रभूतं आसुतिमन्नं करिष्ठोऽतिशयेन कर्ता । एतच्च मन्त्रद्वयं—"श्वेतां बार्हस्पत्याम्"* इत्यस्य पशोः सूक्ते द्रष्टव्यम् । तथा च प्रतीकद्वयमाम्नातम्—"आवेधसꣳ स हि शुचिः"† इति ॥

[14]चतुर्दशीमाह—हे पूषन् । तव व्रते त्वदीये कर्मणि कदाचन

*सं. २-१-२. †ब्रा. २-८-२.

स्तोतारस्त इह स्मसि । [15]यास्ते पूषन्नावो अन्तस्समुद्रे । हिरण्ययीरन्तरिक्षे चरन्ति । याभिर्यासि दूत्याꣳ सूर्यस्य । कामेन कृतश्श्रव इच्छमानः ॥ [16]अरण्यान्यरण्यान्यसौ । या प्रेव नश्यसि । कुथा

न रिष्येम मा विनश्येम । इह कर्मणि ते तव स्तोतारः स्मसि भवामः ॥

[15]पञ्चदशीमाह—हे पूषन्समुद्रे समुद्रवद्विस्तीर्णेऽन्तरिक्षे अन्तः मध्ये हिरण्ययीः सुवर्णवर्णाः ते तव संबन्धिन्यो नावो नौसमाना दीप्तयो याश्चरन्ति । याभिश्च रश्मिभिस्त्वं सूर्यस्य दूत्यां यासि दूतत्वं प्राप्नोषि । सूर्यो हि स्वर्भानुसंज्ञकेनासुरेण तमसाऽऽवृतस्सन् दुःखितायाः सूर्यायाः समीपे पूषणं रश्मियुक्तं दूतत्वेन प्रेषितवान् । तदिदमाख्यानं शाखान्तरे द्रष्टव्यम् । तथा च सूक्तेऽप्याम्नायते—“तं देवासो अददुस्सूर्यायै” * इति । स त्वं ताभिर्दीप्तिभिर्युक्तस्सन् श्रव इच्छमानः कीर्तिमाकांक्षन् कामेन कृतः स्वेच्छयैव दूतकर्मणि प्रेरितः । एतदुभयं पौष्णे कर्मणि द्रष्टव्यम् । सूक्तेऽप्येकस्य प्रतीकमाम्नातम्—“यास्ते पूषन्नावो अन्तः” * इति ॥

[16]षोडशीमाह—अरण्यानीशब्देन महारण्यमुच्यते । द्विरुक्तिरादरार्था । हे अरण्यानि! या त्वं प्रणश्यसीव जनरहितत्वान्नष्टेव प्रतीयसे । असौ त्वं कथा कथं ग्रामं न पृच्छसि । सर्वो हि जनो मार्गे गच्छन् स्वनिवासाय ग्रामः कुत्रेत्येवं पृच्छति त्वं तु तथा न पृच्छसि । तथा ग्रामाद्बहिष्ठं पुरुषं रात्रौ भीः प्र-

* ब्रा. २-८-५.

ग्रामं न पृच्छसि । न त्वा भीरिव विन्दती३ । [17]वृषारवाय वदते । यदुपावति चिच्चिकः । आघाटीभिरिव धावयन् । अरण्यानिर्महीयते । [18]उत गाव इवादन् । उतो वेश्मेव दृश्यते ॥ २३ ॥ उ-

विशाति त्वां तु भीर्न विन्दती३ इव न लभत एव । प्लुतिर्विस्मयार्था । तदेवमरण्यदेवता स्तूयते ॥

[17]सप्तदशीमाह—वृष्टिकाले रवः शब्दविशेषो यस्य पक्षिविशेषस्य सोऽयं वृषारवः । स हि निर्जनाया अरण्यान्या उपरि निर्गत्य निरन्तरं चिदित्यादिशब्दं वदति तथा वदते वृषारवाय पक्षिणे प्रत्युत्तरवादी चिच्चिकाख्योऽन्यः पक्षी यत् यदा उपावति समीपमागत्य तदीयमभिवदनं प्रत्युत्तरदानेन परिपालयति । एकस्मिन् पक्षिणि चिच्चिशब्दं कुर्वति सति अन्येऽपि तज्जातीयाः पक्षिणस्तदानीमेव चिच्चिशब्दान्कुर्वते । तदानीमियमरण्यानिर्महीयते पूज्यते । तत्र दृष्टान्तः—आघाटीभिः काण्डवीणादिभिर्धावयन्निव शोधयन्निव—यथा गानकाले गायकः पुरुषः स्वरविशेषान्वीणादिभिः शोधयति तादृशकुशलैर्गायकैः सेव्यमानो राजा यथा लोके पूज्यते, एवमुक्तिप्रत्युक्तिरूपचिच्चिशब्दसहस्राणि कुर्वद्भिः सूक्ष्मैः पक्षिविशेषैर्युक्तेयमरण्यानिः शोभत इत्यर्थः ॥

[18]अष्टादशीमाह—उत अपिच गाव इव यथा ग्रामे गावो गृहेषु वसन्ति तथाऽरण्ये गवयाद्या मृगविशेषा आदन् तृणानि भक्षयन्तो वर्तन्ते । उतो अपिच लतागुल्मादिकं तत्र तत्र वेश्मेव

तो अ॑रण्या॒निस्सा॒यम् । शा॒कटी॑रिव॒ सर्जति ।
[19]गाम॒ङ्गैष॒ आह्व॑यति । दार्व॒ङ्गैष॒ उपा॑वधीत् । वस॑-
न्नरण्या॒न्याꣳ सा॒यम् । अक्रु॑क्ष॒दिति॒ मन्यते । [20]न
वा अ॑रण्या॒निर्ह॑न्ति । अ॒न्यश्चेन्ना॒भि॒गच्छ॑ति । स्वा॒-

गृह इव दृश्यते । उतो अपिच इयमरण्यानिः सायंकाले वृक्षान्तरालेषु तमसा छन्नेषु शकटीः सर्जतीव लक्ष्यते । यथा कृषिकाः सायंकाले धान्यविशेषैः शकटानि पूरयित्वा स्वगृहे समागच्छन्ति एवमत्राप्यहनि वृक्षाग्रेषु दृश्यमानानि फलानि रात्रौ न दृश्यन्ते । तथा सति सर्वाणि फलानि लूत्वा शकटे पूरयित्वा गृहेषु नीतानीति मुग्धानां बालानां प्रतिभासो भवति सोऽयं प्रतिभासोऽत्रारण्यवर्णनार्थमुच्यते ॥

[19]एकोनविंशीमाह—अपिच अरण्यान्यामहनि गाश्चारयन् गोपालोऽङ्गशब्देन प्रियसंबोधनवाचिना गामाह्वयति । यस्मिन्नाह्वानार्थे शब्दे गवां संकेतः कृतस्तादृशस्य शब्दस्योपलक्षकोऽयमङ्गशब्दः । गोपालस्य शब्दं श्रुत्वा यतःकुतश्चिदपि गावः समागच्छन्त्येव तदिदमाश्चर्यम् । अपिच विचित्रस्य प्रासादस्य निर्माता यस्तक्षा स एष स्वापेक्षितं दारु काष्ठमरण्यान्यामुपावधीत् छिनत्तीत्यर्थः । यस्य यादृशं काष्ठमपेक्षितं तस्य तादृशमस्तीत्यपरमिदमाश्चर्यम् । तस्याश्चर्यस्य द्योतकोऽयमङ्गशब्दः । अङ्ग हन्तेत्यर्थः । अपिच दीर्घयात्रासु मार्गे गच्छन्नरण्यान्यां सायंकाले यः पुमान्वसति सोऽयं महतो वृक्षस्याधस्ताद्वसन् बहून्बहून्पक्षिशब्दान् श्रुत्वा सेयमरण्यानी आक्रोशतीति मन्यते तदिदमन्यदाश्चर्यम् ॥

दोः फलस्य जग्ध्वा । यत्र कामं निपद्यते ।[21]आ-ञ्जनगन्धीꣳ सुरभीम् । बह्वन्नामकृषीवलाम् । प्राहं मृगाणां मातरम् । अरण्यानीमꣳशꣳसिषम् ॥२४॥

स्याम रुरोह युवानश्शुन्ध्यूरिच्छमानो दृश्यते निपद्यते चत्वारि च ॥५॥

---

[20]विंशीमाह—ये पुरुषास्तपश्चरितुमरण्यान्यां निवसन्ति तान्प्रत्यन्यो व्याघ्रादिर्नाभिगच्छति चेत् तदानीमियमरण्यानिर्न वै हन्ति सर्वथा न मारयति । अयमर्थः—अरण्यप्रयुक्तः कश्चिदपि बाधो नास्ति । व्याघ्रादिप्रयुक्तस्तूपायेन परिहर्तुं शक्यत इति । यस्यामरण्यान्यां स्वादोः फलस्य जग्ध्वा स्वादु फलं भक्षयित्वा कामं निपद्यते स्वेच्छया निवसितुं शक्यते । न खलु तत्रान्नसंपादनाय प्रयासोऽस्ति नापि निवासस्थानसंकोचः तादृशीयमरण्यानीति गुणस्तुतिः ॥

[21]एकविंशीमाह—अहमनुष्ठाता इमामरण्यानीं प्राशंसिषं शंसनं कृतवानस्मि । कीदृशम्? आञ्जनगन्धीमञ्जनेषु कर्पूरादिसुगन्धिद्रव्यप्रक्षेपेण यादृशं गन्धं संपादयन्ति तादृशगन्धोपेताम् । विचित्रैः पुष्पैः फलैश्चानुकूलो गन्धः समुत्पाद्यते । अत एव सुरभीं सुगन्धीम् । चम्पकपुष्पादिजन्यो हि सुगन्धो वर्तते । भक्षितुं योग्यानां फलविशेषाणामनेकत्वाद्बह्वन्नाम् । तादृशानां वृक्षाणां स्वत एवोत्पन्नत्वेन कृषेरनपेक्षणादकृषीवलाम् । तत्रोत्पन्नानां मृगाणां पालकत्वान्मातृसदृशीम् । तदेतदरण्यानीत्यादिकमन्त्रषट्कमरण्यवासिभिस्तपस्विभिः स्वरक्षार्थं देवतां प्रार्थयितुं जपितव्यम् ॥

इति तैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः.

[1]वा॒र्त्र॑हत्याय॒ शव॑से । पृ॒त॒ना॒साह्या॑य च । इन्द्र॒ त्वाऽऽव॑र्तयामसि । [2]सु॒ब्रह्मा॑णं वी॒रव॑न्तं बृ॒हन्त॑म् । उ॒रुं ग॑भी॒रं पृ॒थुबु॑ध्नमिन्द्र । श्रु॒तर्षि॑मु॒ग्रम॑भिमाति॒षाह॑म् । अ॒स्मभ्यं॑ चि॒त्रं वृष॑णꣳ र॒यिं दाः । [3]क्षे॒त्रि॒यै त्वा॒ निर्ऋ॑त्यै त्वा । द्रु॒हो मु॑ञ्चामि॒ वरु॑णस्य

[1]षष्ठानुवाके प्रथमामृचमाह—हे इन्द्र! वार्त्रहत्याय शत्रुवधाय शवसे अस्मदीयाय बलाय पृतनासाह्याय वैरिसेनाभिभवाय च त्वामावर्तयामसि पुनःपुनर्भजामहे ॥

[2]द्वितीयामाह—हे इन्द्र! अस्मभ्यं रयिं दाः धनं देहि, वयं तु त्वां भजाम इत्यध्याहारः। कीदृशं त्वां? सुब्रह्माणं शोभनब्राह्मणोपेतं ऋत्विग्भिस्स्तुत्यमित्यर्थः । वीरवन्तं वीरैः पुत्रैर्भृत्यैश्चोपेतम् । बृहन्तमैश्वर्येण महान्तं उरुं गभीरं अत्यन्तं गभीरं अतिप्रवृद्धमित्यर्थः । पृथुबुध्नं विस्तीर्णमूलं प्रजापतिसृष्टमित्यर्थः। "प्रजापतिरिन्द्रमसृजत"* इति श्रुतेः। श्रुतर्षिं ऋषिषु मन्त्रेष्वैन्द्रसूक्तादिषु श्रूयमाणं उग्रं वैरिषु क्रोधिनं अभिमातिषाहं पाप्मनो विनाशकम् । कीदृशं रयिं? चित्रं मणिमुक्तादिरूपेण बहुविधं वृषणं कामाभिवर्षणक्षमम् । एतच्चोभयमैन्द्रे कर्मणि द्रष्टव्यम् ॥

[3]तृतीयामाह—एतस्य मन्त्रजातस्य जातकर्मविषयत्वात्कुमारोऽत्र संबोध्यते । हे कुमार! त्वां क्षेत्रीनामिकाया रक्षोजातेः द्रुहः द्रोहात् मुञ्चामि मुक्तं करोमि । बालोपद्रवकारिणी काचिद्रक्षो-

* ब्रा. २-२-१०.

पाशात् । अनागसं ब्रह्मणे त्वा करोमि ॥२५॥
शिवे ते द्यावापृथिवी उभे इमे । [4]शं ते अग्नि-
स्सहाद्भिरस्तु । शं द्यावापृथिवी सहौषधीभिः । श-
मन्तरिक्षꣳ सह वातेन ते । शं ते चतस्रः प्रदिशो
भवन्तु । [5]या दैवीश्चतस्रः प्रदिशः । वातपत्नीरभि
सूर्यो विचष्टे । तासां त्वा जरस आदधामि । प्र

जातिः क्षेत्री । तथाऽन्या रक्षोजातिर्निर्ऋतिः तस्या अपि द्रोहात्त्वां मुञ्चामि । तथा वरुणस्य पाशो रोगविशेषः तस्मादपि त्वां मुञ्चामि । ब्रह्मणे परिवृढाय जातकर्मादिसंस्काराय त्वामनागसं दोषरहितं करोमि ते, त्वदर्थं इमे द्यावापृथिव्यावुभे अपि शिवे शान्ते भवेताम् ॥

[4]चतुर्थीमाह—हे कुमार! त्वदर्थमयमग्निः अद्भिः सह शं सुखहेतुरस्तु । द्यावापृथिव्यो चौषधीभिः सह शं सुखहेतू स्ताम् । अन्तरिक्षं च वातेन सह ते शमस्तु । प्राच्याद्याः प्रकृष्टदिशश्चतस्रोऽपि ते शं भवन्तु ॥

[5]पञ्चमीमाह—वातपत्नीः वायोः पालयित्रीः दैवीः देवतारूपाः याश्चतस्रः प्रदिशोऽभिलक्ष्य सूर्यो विचष्टे विशेषेण प्रकाशयति तासां दिशां जरसे जरार्थं त्वामादधामि स्थापयामि । यावद्दिशो न जीर्यन्ति तावत्त्वां जीवयामीत्यर्थः । योऽयं यक्ष्मो व्याधिः स पराचैः त्वत्तः पराङ्मुखो भूत्वा निर्ऋतिं रक्षोजातिं प्रैतु प्राप्नोतु ॥

यक्ष्मं एतु निर्ऋतिं पराचैः । [6]अमोचि यक्ष्मादुरितादवर्त्यै ॥ २६ ॥ द्रुहः पाशान्निर्ऋत्यै चोदमोचि । अहा अवर्तिमविदत्स्योनम् । अप्यभूद्भद्रे सुकृतस्य लोके । [7]सूर्यमृतं तमसो ग्राह्या यत् । देवा अमुञ्चन्नसृजन्व्येनसः । एवमहमिमं क्षेत्रिया-

[6]षष्ठीमाह—अयं कुमारो यक्ष्मात् व्याधेः दुरितादिहेतोः पापात् अवर्त्यै वार्तिर्वर्तनं जीवनहेतुः संपत् तद्विपरीतं दारिद्र्यमवर्तिः तस्या अप्यमोचि मुक्तोऽभूत् । तथा निर्ऋत्यै राक्षसजातिः द्रुहः द्रोहरूपात्पाशाच्चायं कुमार उदमोचि उत्कर्षेण मुक्तोऽभूत् । अवर्तिं दारिद्र्यं अहाः अहासीः परित्यक्तवान् । स्योनं सुखं अविदत् लब्धवान् । भद्रे कल्याणे सुकृतस्य लोके पुण्यकर्मणः फलभूते स्थाने अप्यभूत् अवस्थितवान् ॥

[7]सप्तमीमाह—तमोविद्धस्य सूर्यस्य प्रतीकारं देवाश्चक्रुः । तथा च ब्राह्मणम्—"सुवर्भानुरासुरस्सूर्यं तमसाऽविध्यत्तस्मै देवाः प्रायश्चित्तिमैच्छन्"* इति । सोऽयं वृत्तान्तोऽत्र दृष्टान्तत्वेनाभिधीयते । यत् यथा देवा ऋतमन्धकारप्राप्तं सूर्यं ग्राह्या ग्राहकात् आवरकात् तमसः अमुञ्चन्मुक्तमकुर्वन् । तथा तद्धेतोरेनसः पापात् व्यसृजन् वियोजितवन्तः । एवमहं जनकः इमं कुमारं वरुणस्य पाशात् मुञ्चामि मुक्तं करोमि । कीदृशात्पाशात्? क्षेत्रियात् क्षेत्रं गर्भस्थानं तत्रोत्पन्नात् जामिशंसात् आलस्यप्रख्यापकात् द्रुहः बाधकात् ।

* सं २-१-२.

ज्ञामिशꣳसात्। द्रुहो मुञ्चामि वरुणस्य पाशात्। [8]बृहस्पते युवमिन्द्रश्च वस्वः। दिव्यस्येशाथे उत पार्थिवस्य। धत्तꣳ रयिꣳ स्तुवते कीरये चित्॥२७ यूयं पात स्वस्तिभिस्सदा नः। [9]देवायुधमिन्द्र-माजोहुवानाः। विश्वावृधमभि ये रक्षमाणाः।

---

क्षेत्रियै त्वेत्यादिमन्त्राणां जातकर्मणि विनियोगं बोधायन आह-- "अथैनं स्नापयति क्षेत्रियै त्वा निर्ऋत्यै त्वा" इति॥

[8]अष्टमीमाह—हे बृहस्पते! त्वमिन्द्रश्चेत्येतौ युवां दिव्यस्य वस्वः दिवि भवस्य वसुनः धनस्य ईशाथे स्वामिनौ भवथः। उत अपिच पार्थिवस्य पृथिव्यां भवस्य धनस्येशाथे। स्तुवते स्तोत्रं कुर्वते कीरयेचित् कर्त्रे यागं बृहस्पतिसवाख्यं कुर्वते रयिं धनं संपादयतम्। हे इन्द्राबृहस्पती! सपरिवारा यूयं नोऽ-स्मान् स्वस्तिभिः क्षेमैः सदा पात रक्षत। एतस्य मन्त्रस्य बृ-हस्पतिसवयागे यजमानाभिषेके विनियोगमापस्तम्ब आह—"आ-ज्येन माध्यंदिने सवने कृष्णाजिन आसीनमभिषिञ्चति शुक्राम-न्थिनौ वा संस्रावेण बृहस्पते युवम्" इति॥

[9]नवमीमाह—येनेन्द्रेण हता वृत्रादयो दीर्घमध्वानं आयन् मरणं प्राप्ता इत्यर्थः। तमिन्द्रमभिलक्ष्य ये यजमाना रक्षमाणाः प्रतीक्षां कुर्वन्त आजोहुवानाः सर्वत आह्वानं कुर्वन्तो वर्तन्ते। कीदृशमिन्द्रं? देवायुधं योद्धारं विश्वावृधं विश्वस्य वर्धयितारं ते यजमाना इन्द्रसेविनः अनिवर्त्स्यमाना इतः परं मनुष्यलोके

येन॑ हृ॒ता दी॒र्घम॑ध्वा॒न॒माय॑न् । अ॒न॒न्तम॑र्थ॒मनि॑व- र्त्स्य॑माना: । [10]यत्ते॑ सु॒जा॒ते हि॒मव॑त्सु भे॒ष॒जम् । म॒यो॒भूश्शंत॑मा॒ यद्धृ॒दो॑ऽसि॑ । ततो॑ नो देहि सी- बले । [11]अ॒दो गि॒रिभ्यो॒ अ॒धि॒ यत्प्र॒धाव॑सि । स॒ꣳ- शोभ॑माना क॒न्ये॑व शु॒भ्रे ॥ २८॥ तां त्वा॒ मु॒द्ग॒ला

पुनरावृत्तिरहितास्सन्तः अनन्तं विनाशरहितं अर्थं सर्वैरर्थनीयं प्रार्थ- नीयं लोकं आयन् प्राप्ताः । सोऽयं मन्त्र ऐन्द्रे कर्मणि द्रष्टव्यः ॥

[10]दशमीमाह—सीबलाशब्दः कांचिदोषधिं वल्लीरूपामाचष्टे । सा च हिमवत्सानुषूत्पद्यते । हिमवत्सु पर्वतविशेषेषु सुजाते सुष्ठू- त्पन्ने हे ओषधे! ते त्वदीयं यद्भेषजं रोगविनाशमौषधमस्ति । यत् यतस्त्वं हृदो हृदयस्य शंतमा सर्वोपद्रवशमनहेतुः मयोभूः सुखस्य भावयित्री चासि । हे सीबले! एतत्संज्ञके ओषधे! तत- स्तादृश्यास्त्वत्सकाशात्तदौषधं नो देहि ॥

[11]एकादशीमाह—हे ओषधे! यद्यदा त्वं गिरिभ्यः पर्वतेभ्यः सकाशात् अदः प्रत्यक्षं यथा भवति तथा अधिप्रधावसि अ धिकं वल्लीरूपा सर्वतः प्रसरसि । तत्र दृष्टान्तः—संशोभमाना कन्येव यथा सर्वैराभरणैः सम्यक् शोभमाना कन्या स्वयंवरार्थ- मागतानां वराणां पुरतः संचरति तद्वत् । हे शुभ्रे! निर्मले! ओ- षधिदेवते! तां त्वा तादृशीं शुभ्रां त्वां मुद्गला मुद्गलगोत्रोत्पन्ना महर्षयो हविषा वर्धयन्ति । हे सीबलाख्ये ओषधिदेवते! सा त्वं इह कर्मणि अस्मभ्यं रयिमाभाजय धनं संपादय । रोगनिवर्तकमौ-

हविषा वर्धयन्ति । सा नस्सीवले रयिमाभाज-
येह । [12]पूर्वं देवा अपरेणानुपश्यञ्जन्मभिः । जन्मा-
न्यवरैः पराणि । वेदानि देवा अयमस्मीति माम् ।
अहꣳ हित्वा शरीरं जरसः परस्तात् । [13]प्राणा-
पानौ चक्षुश्श्रोत्रम् । वाचं मनसि संभृताम् ।

यथमेवात्र वनम् । एते उभे ऋचावेतदोषविवेचनाके शाखान्तर-
गते कर्मणि याज्यानुवाक्ये ॥

[12]द्वादशीमाह—हे देवाः! अहमपरेण अधमेनानेन जन्मना
पूर्व जन्मानुपश्यन्निदानीं वर्ते । तथैवावरैः निकृष्टैर्मनुष्यजन्मभिः
पराण्युत्कृष्टानि देवजन्मानि वेदानि लभेय । इदानींतनजन्मनि प्र-
यत्नमन्तरेण स्वतः प्रवृत्तां वेदशास्त्रादिवासनां दृष्ट्वा पूर्वमप्येता
दृशजन्म संपन्नमिति निश्चीयते । अत एव अभिज्ञा आहुः—
"प्रपेदिरे प्राक्तनजन्मविद्याः" इति । सोऽयं दृष्टान्तः—यथा
पूर्वजन्मनि वासितमिहजन्मनि फलितमेवमत्राप्यनुष्ठितमुत्तरत्र फलि-
ष्यतीति जानामि । अतोऽनुविन्त्याख्याया देवतायाः प्रसादादहं हे
देवाः! जरसः परस्तात् स्वशरीरं हित्वा लोकान्तरेऽयमीदृशो देवो-
ऽस्मीति मां वेदानि ज्ञातुं शक्नुयाम् ॥

[13]त्रयोदशीमाह—यावेतौ प्राणापानावुच्छ्वासनिश्वासरूपौ वायू ।
यदपि चक्षुः श्रोत्रमित्यादिकं ज्ञानेन्द्रियम् । याऽपि मनसि सं-
भृता संबद्धा वाक् । "यद्धि मनसा ध्यायति तद्वाचा वदति"*

* सं. ६ १-७.

हित्वा शरीरं जरसः परस्तात् । आ भूतिंभूतिं वयमश्नवामहै । "इमा एव ता उषसो याः प्रथमा व्यौच्छन् । ता देव्यः कुर्वते पञ्च रूपा । शश्वतीर्नावपृज्यन्ति । न गमन्त्यन्तम् ॥ २१ ॥

करोम्यवर्त्यै चिच्छुभ्रेऽश्नवामहै चत्वारि च ॥ ६ ॥

इति श्रुतेर्वाचो मनसि संबद्धत्वम् । इयं च वाक्कर्मेन्द्रियाणां सर्वेषामुपलक्षणम् । तदिदं प्राणापानादिकं सर्वं गृहीत्वा वयं जरसः परस्तात् शरीरं हित्वा भूतिंभूतिं तत्तल्लोकस्थितं तत्तदैश्वर्यं आ समन्तात् अश्नवामहै प्राप्नवाम । एते ऋचौ दिवश्श्येनीष्विष्टिषु—"अनुवित्यै चरुम्"* इत्यत्र याज्यानुवाक्ये । अत एव तत्र प्रतीकद्वयमाम्नातम्—"पूर्वं देवा अपरेण प्राणापानौ"† इति ॥

[14]चतुर्दशीमाह—या उषसः प्रथमाः प्रथमभाविन्यः सृष्ट्यादौ वर्तमाना व्यौच्छन् व्युष्टिं प्रभातमकुर्वन् । ता इमा उषस इदानीं प्रतिदिनं वर्तमाना एव । ताश्चोषसो देव्यः पञ्चसंख्याकानि रूपाणि कुर्वते वसन्तादीनि तत्तच्चिह्नानि कुर्वते । शश्वतीः निरन्तरं वर्तमानास्ता उषसः नावपृज्यन्ति कदाचिदपि न समाप्यन्ते । तदेव स्पष्टीक्रियते—अन्तमवसानं न गमन्ति न प्राप्नुवन्ति । सोऽयं मन्त्र उषोदेवताके कर्मणि द्रष्टव्यः ॥

इति तैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः.

---

*ब्रा. ३-१२-२. †ब्रा. ३-१२-१.

[1]वसू॒नां त्वाऽधी॑तेन । रु॒द्राणा॑मू॒र्म्या । आ॒दि॒त्याना॒ं तेज॑सा । विश्वे॑षां दे॒वाना॒ं क्रतु॑ना । म॒रुता॑मेम्ना जुहोमि॒ स्वाहा॑ । [2]अ॒भिभू॑तिर॒हमाग॑मम् । इन्द्र॑सखा स्वा॒युधः॑ । आस्वाशा॑सु दु॒ष्षहः॑ । [3]इ॒दं वर्चो॑ अ॒ग्निना॑ द॒त्तमागा॑त् । यशो॒ भर्ग॒स्सह॒ ओ-

---

[1]सप्तमानुवाके प्रथमामृचमाह—हे अग्ने! त्वां जुहोमि। कीदृशं त्वां? वसूनामष्टानां संबन्धि यदधीतं मन्त्रजातं तेन सहितम्। रुद्राणामेकादशानां संबन्धिनी येयमूर्मिरुत्कर्षस्तेन सहितम्। आदित्यानां द्वादशानां संबन्धि यत्तेजस्तेन सहितम्। विश्वेषां देवानां संबन्धी यः क्रतुः संकल्पः कर्मानुष्ठानं वा तेन सहितम्। मरुतां संबन्धी योऽयमेमा गतिविशेषस्तेन सहितम्। एतस्य मन्त्रस्य सावित्रचयने विनियोगमापस्तम्ब आह—"अपरं चतुर्गृहीतं वसूनां त्वाऽधीतेन" इति। जुहोतीत्यनुवर्तते॥

[2]द्वितीयामाह—हे अग्ने! अहमागमं त्वत्समीपे समागतोऽस्मि। त्वमप्याशासु दिक्ष्वभिभूतिः वैरितिरस्कारक्षम आस्व उपविश। इन्द्रसखा इन्द्रस्य प्रियः स्वायुधः शोभनैरायुधैरुपेतः दुष्षहः केनापि तिरस्कर्तुमशक्यः। अयं मन्त्रः कस्मिंश्चिदाग्रयणे कर्मण्युपहोमार्थः॥

[3]तृतीयामाह—अग्निना दत्तं यदिदं वर्चःप्रभृतिगुणजातं तदिदमागात् यजमानं प्रत्यागतम्। वर्चः शरीरकान्तिः यशः कीर्तिः भर्गः रश्मिरूपं तेजः सहोऽभिभवसामर्थ्यं ओजः बलहेतुरष्टमो

जो बलं च ॥ ३० ॥ दीर्घायुत्वाय शतशारदाय । प्रतिगृभ्णामि महते वीर्याय । [4]आयुरसि विश्वायुरसि । सर्वायुरसि सर्वमायुरसि । सर्वं म आयुर्भूयात् । सर्वमायुर्गेषम् । [5]भूर्भुवस्सुवः । [6]अग्निर्धर्मेणान्नादः । मृत्युर्धर्मेणान्नपतिः । ब्रह्म क्षत्रꣳ

धातुः बलं शरीरशक्तिः । शतशारदाय शतसंख्याकसंवत्सरोपेताय दीर्घायुत्वाय दीर्घकालवर्त्यायुष्याय महते वीर्यायाधिकसामर्थ्यार्थं च प्रतिगृभ्णामि अग्नेरनुग्रहं स्वीकरोमि । अस्य मन्त्रस्य हारियोजनादूर्ध्वभाविनि यज्ञपुच्छे विनियोगो द्रष्टव्यः ॥

[4]उक्तास्त्रयो मन्त्रा ऋगात्मकाः । चतुर्थमन्त्रमारभ्य यजुरात्मकाः। तत्रैतं चतुर्थमन्त्रमाह—हे प्रवर्ताख्य! कर्णाभरण! त्वमायुरसि आयुषः स्वरूपमसि । विश्वायुरसि विश्वस्य जगतः आयुस्स्वरूपमसि। सर्वायुरसि विशेषतः सर्वेषां पुरुषाणामायुस्स्वरूपमसि । सर्वमायुरसि यच्छतसंवत्सरपरिमितमायुस्तत्सर्वं त्वमसि । त्वत्प्रसादात्सर्वं संपूर्णमायुर्मे भूयात् । अतोऽहं सर्वं संपूर्णमायुर्गेषं गम्यासम् । अस्य मन्त्रस्यायुष्कामेष्टौ कर्णाभरणधारणे विनियोगमापस्तम्ब आह—"तद्यजमान आचम्य प्रतिगृह्य प्रदक्षिणं दक्षिणे कर्णे आबध्नात्यायुरसि विश्वायुरसि" इति ॥

[5]पञ्चमं यजुराह—पृथिव्यन्तरिक्षद्युलोका अनुगृह्णन्त्विति शेषः॥

[6]षष्ठं यजुराह—योऽयमग्निः सोऽयं स्वकीयेन धर्मेणान्नादो भवति । अन्नभक्षकत्वं जाठराग्नौ प्रसिद्धम् । योऽयं मृत्युर्देवः

स्वाहा ॥ ३१ ॥ [7]प्रजापतिः प्रणेता । बृहस्पतिः पुरएता । यमः पन्थाः । चन्द्रमाः पुनरसुस्स्वाहा । [8]अग्निरन्नादोऽन्नपतिः । अन्नाद्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा । [9]सोमो राजा राजपतिः । राज्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा ।

सोऽयं स्वकीयेन धर्मेणान्नपतिरन्नस्य पालकः । यावन्मृत्युः प्राणिनं न मारयति तावदयमन्नं भुङ्क्ते तदिदमन्नपालकत्वम् । ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिः तान्येतान्यग्निमृत्युब्रह्मक्षत्राण्युद्दिश्य स्वाहा हुतमिदमस्तु ॥

[7]सप्तमं यजुराह—योऽयं प्रजापतिः सोऽयं प्रणेता प्रेरकः । योऽयं बृहस्पतिः सोऽयं पुरएता पुरतो गन्ता । योऽयं यमः सोऽयं पन्थाः मार्गपालकः । यस्तु चन्द्रमाः सोऽयं पुनरसुः पुनःपुनर्जायमानः प्राणरूपः । तानेतान्प्रजापत्यादीनुद्दिश्य स्वाहा हुतमिदमस्तु । भूर्भुवस्सुवरित्यादिमन्त्रत्रयस्य विनियोगः सूत्रान्तरेषु मृग्यताम् ॥

[8]अष्टमं यजुराह—योऽयमग्निः सोऽयमन्नादो जाठराग्निरूपेणान्नस्य भक्षकः । अन्नपतिः बाह्याग्निरूपेणान्नस्य पाचकत्वात्पालकः । सोऽयमग्निरस्मिन्यज्ञे यजमानाय भक्षणयोग्यमन्नं ददातु । तस्मै अग्नये स्वाहा हुतमिदमस्तु ॥

[9]नवमं यजुराह—यः सोमः सोऽयं ब्राह्मणानां राजा । "सोमोऽस्माकं ब्राह्मणानाᳯ राजा"* इति मन्त्रान्तरात् । स चान्येषां राज्ञां पालकत्वाद्राजपतिः । शेषं पूर्ववत् ॥

*सं. १-८-१२.

[10]वरुणस्सम्राट्सम्राट्पतिः। साम्राज्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा ॥ ३२ ॥ [11]मित्रः क्षत्रं क्षत्रपतिः। क्षत्रमस्मिन् यज्ञे यजमानाय ददातु स्वाहा। [12]इन्द्रो बलं बलपतिः। बलमस्मिन् यज्ञे यजमानाय ददातु स्वाहा। [13]बृहस्पतिर्ब्रह्म ब्रह्मपतिः। ब्रह्मास्मिन् यज्ञे यजमानाय ददातु स्वाहा। [14]सविता राष्ट्रं राष्ट्रपतिः। राष्ट्रमस्मिन् यज्ञे यज-

[10]दशमं यजुराह—योऽयं वरुणः सोऽयं समीचीनो राजा भूत्वा सर्वेषामन्येषां साम्राज्यानां पालकः ॥

[11]एकादशं यजुराह—मित्रो देवः स्वयं क्षत्रियजातिर्भूत्वा सर्वेषामन्येषां क्षत्रियाणां पालकः। स च क्षत्रं क्षत्रियधर्मं ददातु ॥

[12]द्वादशं यजुराह—अयमिन्द्रः स्वयं बलं प्राप्य परकीयस्य बलस्य पालको भवति ॥

[13]त्रयोदशं यजुराह—बृहस्पतिः स्वयं देवानां मध्ये ब्राह्मणजातियुक्तः। "ब्रह्म वै देवानां बृहस्पतिः"* इति श्रुत्यन्तरात्। सोऽयमितरब्राह्मणजातेः पालको ब्राह्मणधर्मं ददातु ॥

[14]चतुर्दशं यजुराह—सविता स्वयं राष्ट्रं प्राप्य अन्यदीयस्य राष्ट्रस्य पालको भवति ॥

*तै. आ. ५-७.

मानाय ददातु स्वाहा । [15]पूषा विशां विट्पतिः । विशमस्मिन् यज्ञे यजमानाय ददातु स्वाहा । [16]सरस्वती पुष्टिः पुष्टिपत्नी । पुष्टिमस्मिन् यज्ञे यजमानाय ददातु स्वाहा । [17]त्वष्टा पशूनां मिथुनानाꣳ रूपकृद्रूपपतिः । रूपेणास्मिन् यज्ञे यजमानाय पशून्ददातु स्वाहा ॥ ३ ३ ॥

च स्वाहा साम्राज्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा विशमस्मिन् यज्ञे यजमानाय ददातु स्वाहा चत्वारि च ॥ ७ ॥

अग्निस्सोमो वरुणो मित्र इन्द्रो बृहस्पतिस्सविता पूषा सरस्वती त्वष्टा दश ॥

---

[15]पञ्चदशं यजुराह—पूषा स्वयं देवानां विशां स्वामी भूत्वा मनुष्याणामपि विशां पालको भवति ॥

[16]षोडशं यजुराह—सरस्वती स्वयं पुष्टियुक्ता सती परकीयाया अपि पुष्टेः पालयित्री भवति ॥

[17]सप्तदशं यजुराह—मिथुनानां स्त्रीपुरुषरूपाणां पशूनां रूपस्य कर्ता त्वष्टा सर्वेषां रूपाणां पालकः । अतोऽस्मिन्यज्ञे यजमानाय समीचीनरूपेण युक्तान्पशून्ददातु । तस्मै त्वष्ट्रे स्वाहा हुतमिदमस्तु । "अग्निरन्नादः" इत्यादयो दश मन्त्रा मित्रविन्दाख्यायामिष्टावुपहोमार्थाः ॥

इति तैत्तिरीयब्राह्मणभाष्ये पञ्चमप्रपाठके सप्तमोऽनुवाकः.

[1]स ईं पाहि य ऋजीषी तरुत्रः । यश्शिप्रवान्वृषभो यो मतीनाम् । यो गोत्रभिद्वज्रभृद्यो हरिष्ठाः । स इन्द्र चित्राꣳ अभितृन्धि वाजान् । [2]आ ते शुष्मो वृषभ एतु पश्चात् । ओत्तरादधरागा पुरस्तात् । आ विश्वतो अभि समेत्वर्वाङ् ।

[1]अष्टमेऽनुवाके प्रथमामृचमाह—हे इन्द्र! यस्त्वमृजीषी । निष्पीडितरसः सोमवल्लीभाग ऋजीषम्, तद्वानृजीषी । अत एव ब्राह्मणमाम्नायते—"तस्मात्तृतीयसवन ऋजीषमभिषुण्वन्ति"* इति । तरुत्रः दुःखेभ्यस्तारकः तादृशः स त्वं ईं पाहि इमं सवनं पालय । यस्त्वं शिप्रवान् शोभनहनुयुक्तः यश्च त्वं मतीनामस्मद्बुद्धीनां वृषभो वर्षयिता सन्मार्गबुद्धिप्रद इत्यर्थः । यश्च त्वं गोत्रभित् पर्वतानां भेत्ता वज्रभृत् वज्रस्य धारकः यश्च हरिष्ठाः हरिनामकयोरश्वयोः स्थाता । हे इन्द्र! स त्वं चित्रान्वाजान् विचित्राणि शत्रूणामन्नानि अभितृन्धि अभितो विनाशय । अयं मन्त्रो माध्यंदिनसवने प्रस्थितयाज्यास्वन्तर्भावनीयः ॥

[2]द्वितीयामाह—हे इन्द्र! वृषभ! श्रेष्ठ! ते तव शुष्मः बलं पश्चात् अस्मत्तः पश्चिमभागे आ एतु आगच्छतु । तथैवोत्तरात् उत्तरभागेऽप्यागच्छतु । अधराक् अधरभागेऽप्यागच्छतु । पुरस्तात् पूर्वभागेऽप्यागच्छतु । विश्वतः सर्वेषु प्रदेशेषु अभि अस्मानभिलक्ष्य अर्वाङ् समीपवर्ति आसमेतु सम्यगागच्छतु । हे इन्द्र! सुवर्वत् स्वर्गयुक्तं द्युम्नं धनं अस्मे धेहि अस्मासु संपादय ॥

*सं ६-१-६.

इन्द्रं॑ द्यु॒म्न९ सु॒वर्व॑द्धेह्य॒स्मे । [3]प्रोष्व॑स्मै पु॒रोर॒थम् । इन्द्रा॑य शू॒षम॑र्चत ॥३४॥ अ॒भीके॑ चिदु लोक॒कृत् । स॒ङ्गे स॒मत्सु॑ वृत्र॒हा । अ॒स्माकं॑ बोधि चोदि॒ता । नभ॑न्तामन्य॒केषा॑म् । ज्या॒का अधि॒ धन्व॑सु । [4]इन्द्रं॑ व॒य९ शु॒ना॒सीर॑म् । अ॒स्मिन् य॒ज्ञे ह॑वामहे । आ वा॒जैरुप॑ नो गमत् । [5]इन्द्रा॑य॒ शु॒ना॒सीरा॑य । स्रु॒चा

[3]तृतीयामाह—अस्मा इन्द्राय अस्येन्द्रस्य पुरोरथं रथस्य पुरोभागे शूषं बलं प्रोष्वर्चत प्रकर्षेण सुष्ठु पूजयत । कथं बलस्य पूजेत्युच्यते—अयमिन्द्रः वृत्रहा वैरिघाती समत्सु सङ्ग्रामेषु सङ्गे योद्धृभिर्वैरिभिर्भटैः सङ्गे सति संयोगे सति अभीकेचित् हन्तुं कामयमानेऽपि वैरिणि लोककृत् स्थितिं करोत्येव न तु पलायते । इत्थं बलस्य पूजा । तथा पूजित इन्द्रोऽस्माकं इतरव्यावृत्तये चोदिता प्रेरयिता सन् बोधि बुध्यतां सावधानो भवतु । अन्यकेषां कुत्सितानां वैरिणां धन्वसु अधिश्रित्य वर्तमाना ज्याकाः कुत्सितज्या नभन्तां हिंसन्तां त्रुट्यन्त्वित्यर्थः । एतच्चोभयं कस्मिंश्चिदैन्द्रे कर्मणि विनियोज्यम् ॥

[4]चतुर्थीमाह—शुनः वायुः सीर आदित्यः ताभ्यां युक्तमिन्द्रमस्मिन्यज्ञे वयमाह्वयामः । स चेन्द्रः वाजैरन्नैस्सह नोऽस्मान्प्रति उपागमत् उपागच्छतु ॥

[5]पञ्चमीमाह—शुनासीराय वाय्वादित्ययुक्तायेन्द्राय स्रुचा जुहा

जुहुत नो हविः ॥३५॥ जुषतां प्रति मेधिरः ।
[6]प्र हव्यानि घृतवन्त्यस्मै । हर्यश्वाय भरता स-
जोषाः । इन्द्रर्तुभिर्ब्रह्मणा वावृधानः । शुनासीरी
हविरिदं जुषस्व । [7]वयस्सुपर्णा उपसेदुरिन्द्रम् ।
प्रियमेधा ऋषयो नाधमानाः । अप ध्वान्तमूर्णुहि

नोऽस्मदीयं हविः हे ऋत्विजः! जुहुत । मेधिरः मेधावानिन्द्रः प्रतिजुषतां प्रातिस्विकं तद्धविः सेवताम् ॥

[6]षष्ठीमाह—हर्यश्वाय हरितनामकाभ्यामश्वाभ्यां युक्ताय अस्मा इन्द्राय घृतवन्ति हव्यानि हे ऋत्विजः! प्रभरत प्रकर्षेण संपादयत । हे इन्द्र! त्वं सजोषाः वसन्ताद्यृतुदेवताभिः समानप्रीतिस्सन् ब्रह्मणा मन्त्रेण वावृधानः वर्धमानः शुनासीरी वाय्वादित्ययुक्तः इदं हविर्जुषस्व । अत्रापस्तम्बः—"इन्द्राय शुनासीराय पुरोडाशं द्वादशकपालम्"* इत्यस्मिन्कर्मणि मन्त्रद्वयं विनियुक्तवान् "इन्द्राय शुनासीराय" इत्यारभ्य "हविरिदं जुषस्वेति याज्यानुवाक्ये" इत्यन्तेन वाक्येन । यस्त्वेताभ्यां पूर्वो मन्त्रः "इन्द्रं वयम्" इत्यादिः सोऽयं पुरोनुवाक्यया विकल्प्यते ॥

[7]सप्तमीमाह—केचिदृषयः इन्द्रमुपसेदुः कार्यप्राप्त्यर्थमुपासते । कीदृशा ऋषयः? वयः पक्षिमूर्तिधारिणः अत एव सुपर्णाः शोभनपक्षोपेताः । प्रियमेधाः अधीतस्य ग्रन्थस्य धारणशक्तिर्मेधा तस्यां प्रीतियुक्ताः नाधमानाः किंचित्कार्यं याचमानाः । स एव

* सं १-८-७.

पूर्धि चक्षुः। मुमुग्ध्यस्मान्निधयेव बद्धान्। [8]बृह-
दिन्द्राय गायत ॥ ३६ ॥ मरुतो वृत्रहन्तमम्। ये-
न ज्योतिरजनयन्नृतावृधः। देवं देवाय जागृवि।
[9]का मिहैकाः क इमे पतङ्गाः। मान्थालाः कुलि

याचनाप्रकारः स्पष्टीक्रियते—हे इन्द्र! ध्वान्तं अज्ञानलक्षणम न्धकारं अपोर्णुहि अपसारय। चक्षुः ज्ञानलक्षणां दृष्टिं पूर्धि पूरय। निधयेव शृङ्खलयेव अज्ञानेन बद्धानस्मान् मुमुग्धि तस्मादज्ञानबन्धा न्मोचय। अस्य मन्त्रस्य सोमक्रयादूर्ध्वमंसाच्छादकवस्त्रापनयने विनि योगमापस्तम्ब आह—"अत्र यजमानोऽपोर्णुते 'वयस्सुपर्णाः' इति"॥

[8]अष्टमीमाह—हे मरुतः! वृत्रहन्तमं अतिशयेन वैरिवधकारि बृहत् साम इन्द्राय इन्द्रार्थं गायत। ऋतावृधः यज्ञवर्धकाः ऋत्विजः देवाय इन्द्रार्थं देवं दीप्यमानं जागृवि जागरणस्या-प्रमत्तत्वस्य साधनं ज्योतिः ज्ञानरूपं प्रकाशं येन बृहत्साम्नाऽ-जनयन् उत्पादितवन्तः। तेन बृहता साम्ना गायतेत्यन्वयः। ऋ-त्विजो हि पृष्ठस्तोत्रे बृहत्साम गायन्ति। अस्य च मन्त्रस्य क्वचित्सोमविकृतौ विनियोगो द्रष्टव्यः॥

[9]नवमीमाह—मिहिकाशब्दो नीहारवाचकस्सन् दृष्टेरावरकं रोग-विशेषमुपलक्षयति। मिहिका एव मिहैकाः। पतङ्गशब्दः शलभ वाची सन् नेत्ररश्मिजन्यानि केशोण्डूकान्याकाशे भासमानान्युप-लक्षयति। तानि चौष्ण्यरोगे सति बहूनि भासन्ते। तदुभयं किं-शब्दाभ्यामाक्षिप्यते। काः मिहैकाः? इमे पतङ्गाश्च के?। तदुभ-

परि मा पतन्ति । अनावृतैनान्प्रधमन्तु देवाः । सौपर्णं चक्षुस्तनुवा विदेय । [10]एवा वन्दस्व वरुणं बृहन्तम् । नमस्या धीरममृतस्य गोपाम् । स नश्शर्म त्रिवरूथं वियंसत् ॥ ३७॥ यूयं पात स्वस्तिभिस्सदा नः । [11]नाके सुपर्णमुप यत्पत-

---

योपद्रवो मम नास्तीत्यर्थः । मन्थशब्देन दधिमन्थनमुच्यते । तत्संबन्धिनस्तक्रबिन्दवो मान्थाः तद्वदालान्ति आगच्छन्तीति मान्थालाः केशोण्डुकाविशेषाः । कुलं समूहः तद्रूपतामापन्नाः कुलिशब्देनोच्यन्ते । ते च संघशो मा मां परिपतन्ति । देवाः अनावृता केशोण्ड्वादिकृतनेत्रावरणापगमेन एनान् केशोण्ड्वादिकान् रोगदोषान् प्रधमन्तु प्रकर्षेण मुखोत्थितवायुमात्रेण विनाशयन्तु । ततोऽहं तनुवा सहितः सौपर्णं चक्षुर्विदेय । सुपर्णः पक्षी यथा दूरस्थं पश्यति तथा दूरदर्शनक्षमं चक्षुष्पाटवं लभेयम् । सोऽयं मन्त्रो नेत्ररोगपरिहाराय प्रयोक्तव्यः ॥

[10]दशमीमाह—हे यजमान! बृहन्तं गुणाधिकं वरुणमेव आवन्दस्व स्तुहि । तथा धीरं बुद्धिमन्तं अमृतस्य क्रतुफलस्य गोपां रक्षितारं नमस्य नमस्कुरु । स वरुणो नोऽस्मभ्यं त्रिवरूथं भूमिकात्रयोपेतं शर्म गृहं वियंसत् विशेषेण यच्छतु । हे वरुण! सपरिवारा यूयं स्वस्तिभिः क्षेमैः नः अस्मान् सदा पात रक्षत। अस्य मन्त्रस्य ब्रह्मण उत्सङ्गे सोमासादने विनियोगमापस्तम्ब आह—"एवावन्दस्वेत्युपस्थे ब्रह्मा राजानं कुरुते" इति ॥

[11]एकादशीमाह—हे प्रवर्ग्यस्वामिन्! त्वामृत्विजो हृदा स्वकी-

न्तम् । हृदा वेनन्तो अभ्यचक्षत त्वा । हिरण्यपक्षं वरुणस्य दूतम् । यमस्य योनौ शकुनं भुरण्युम् । [12]शं नो देवीरभिष्टये । आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः । [13]ईशाना वार्याणाम् । क्षयन्तीश्चर्षणीनाम् ॥ ३८ ॥ अपो याचामि भेषजम् । [14]अप्सु मे सोमो अब्रवीत् । अ-

येन मनसा वेनन्तः कामयमानाः यद्यदा अभ्यचक्षत अभितः प्रख्यापितवन्तः तदा त्वं तुष्टो भवेति शेषः । कीदृशं त्वां? नाके सुवर्गे उपपतन्तं समीपं प्रतिगच्छन्तम् । अत एव सुपर्णं शोभनपक्षोपेतं हिरण्यपक्षं सुवर्णमयपक्षोपेतं वरुणस्य दूतं वरुणेन प्रेर्यमाणं यमस्य योनौ स्थानविशेषे भुरण्युं भरणशीलं रोगसंपादकमित्यर्थः । शकुनं पक्ष्याकारम् । अयं मन्त्रः प्रवर्ग्यस्याभिषवेऽन्तर्भावनीयः ॥

[12]द्वादशीमाह—देवीः द्योतमाना आपः नोऽस्माकं अभिष्टये अपेक्षिताय पानाय शं शान्ता भवन्तु । नोऽस्मान्प्रति शं सुखहेतवः योः दुःखवियोजिकाश्च सत्यः अभिस्रवन्तु अभितः प्रवहन्तु ॥

[13]त्रयोदशीमाह—अहमपो देवीः प्रति भेषजं पापविनाशकारणमौषधं याचामि । कीदृशीरपः? वार्याणां वरणीयानां कामानां ईशानाः दातुं समर्थाः चर्षणीनां मानुषाणां क्षयन्तीः निवासहेतुभूताः ॥

[14]चतुर्दशीमाह—अप्सु अन्तर्जलेषु मध्ये विश्वानि भेषजा

न्तर्विश्वानि भेषजा। अग्निं च विश्वशंभुवम्। आपश्च विश्वभेषजीः। [15]यदप्सु ते सरस्वति। गोष्वश्वेषु यन्मधु। तेन मे वाजिनीवति। मुखं मङ्ग्धि सरस्वति। [16]या सरस्वती वैशम्भल्या॥ तस्यां मे रास्व। तस्यास्ते भक्षीय। तस्यास्ते

सर्वाण्यौषधानि सन्तीति मे मह्यं सोमोऽब्रवीत्। तथा विश्वशंभुवं सर्वस्य जगतः सुखस्य भावयितारमग्निं च मह्यं सोमोऽब्रवीत्। तथा विश्वभेषजीः सर्वस्यानिष्टस्यौषधरूपा आपश्च याः सन्ति ता अपि सोमोऽब्रवीत्। तदेतन्मन्त्रत्रयमब्देवताके कर्मणि द्रष्टव्यम्। तृतीयमन्त्रस्यावभृथेष्टौ द्वितीयाज्यभागेऽपि विनियोगमापस्तम्ब आह—"अप्सुमन्तावाज्यभागौ यजत्यप्स्वग्न इत्येषाऽप्सु मे सोमो अब्रवीत्" इति॥

[15]पञ्चदशीमाह—हे सरस्वति! नदीरूपे! ते त्वदीयास्वप्सु यन्मधु माधुर्यं विद्यते तथा गोष्वश्वेषु मधुरं क्षीरं समीचीनं वहनसामर्थ्यं च यद्विद्यते हे वाजिनीवति! अन्नसमृद्धियुक्ते! सरस्वति! तेन सर्वेण मे मुखमङ्ग्धि वक्त्रमलंकृतं कुरु॥

[16]षोडशीमाह—विशां प्रजानां भरणं पोषणं विशम्भलं तत्कर्तुं क्षमा वैशम्भल्या तादृशी या सरस्वती तस्यां सरस्वत्यां नदीरूपायां मे रास्व हे सरस्वति! देवते! मह्यं भोगं देहि। तस्याः सरस्वत्याः ते तव भक्षीय रसमनुभवामि। तस्यास्ते भूयिष्ठभाजः अतिप्रभूततररससेविनो भूयास्म। एतस्य मन्त्रद्वयस्य दा-

भूयिष्ठभाजो भूयास्म । [17]अहं त्वदस्मि मदसि त्वमेतत् । ममासि योनिस्तव योनिरस्मि । ममैव सन्वह हव्यान्यग्ने । पुत्रः पित्रे लोककृज्जातवेदः । [18]इहैव सन्तत्र सन्तं त्वाऽग्ने । प्राणेन वाचा मनसा बिभर्मि । तिरो मा सन्तमायुर्मा प्रहासीत् ॥

शिक्के यजमाने विनियोगमापस्तम्ब आह—"यदप्सु त इत्युपक्रम्य भूयिष्ठभाजो भूयास्मेति मुखं विमृष्टे" इत्यन्तेन वाक्येन ॥

[17]सप्तदशीमाह—हे अग्ने! अहं त्वदस्मि त्वत्तः सकाशाद्यजमानोऽस्मि त्वमप्येतद्रूपं मदसि मत्तः सकाशादेतदाहवनीयरूपं प्राप्तोसि । मया ह्याधीयमानस्य तव आहवनीयत्वम् । अतः कारणात् त्वं मम योनिः कारणमसि । अहं च तव योनिः कारणमस्मि । हे अग्ने! ममैव सन् त्वं मदीय एव भूत्वा हव्यानि वह । हे जातवेदः! सर्वजगदभिज्ञ ! यथा लोके पुत्रः पित्रे लोककृत् स्थानसंपादको भवति अतो यथा मया तव स्थानं संपादितं तथा त्वयाऽपि मम पुण्यलोकः संपादनीयः । एतस्य मन्त्रस्य फलचमसे विनियोगमापस्तम्ब आह—"अहं त्वदस्मि मदसीत्यङ्गारे हुत्वा तस्मै भक्षं प्रयच्छेत्" इति ॥

[18]अष्टादशीमाह—हे अग्ने! अहमिहैव दूरदेशे स्थितः सन् तत्राहवनीयायतने सन्तं वर्तमानं त्वां मदीयेन प्राणेन मनसा वाचा बिभर्मि धारयामि । तिरः व्यवहितो भूत्वा सन्तं वर्तमानं मा मां प्रति आयुः मा प्रहासीत् मा परित्यजतु । वैश्वानरेण

ज्योतिषा त्वा वैश्वानरेणोपतिष्ठे। [19]अयं ते योनि-र्ऋत्वियः। यतो जातो अरोचथाः। तं जानन्नग्न आरोह। अथा नो वर्धया रयिम्। [20]या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्माऽऽत्मानम्। अच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि। यज्ञो भूत्वा यज्ञ-

सर्वपुरुषहितेन ज्योतिषा युक्तं त्वामुपतिष्ठे भजामि। अयं मन्त्रः क्वचिदग्न्युपस्थाने विनियोक्तव्यः॥

[19]एकोनविंशीमाह—हे अग्ने! अयं अरणिरूपः काष्ठविशेषः ते तव ऋत्वियः योनिः ऋतुकालसंबन्ध्युत्पत्तिस्थानम्। यतो योने-र्जातस्त्वं अरोचथाः दीप्तोऽसि। हे अग्ने! जानन् स्वकीयत्वेनावग-च्छन् तं योनिं अरणिरूपमारोह। अथानन्तरं नोऽस्माकं रयिं धनं वर्धय समृद्धं कुरु। एतस्य मन्त्रस्य विनियोगो ब्राह्मणेना-म्नातः—"अयं ते योनिर्ऋत्विय इत्यरण्योस्समारोहयति"* इति॥

[20]विंशीमाह—हे अग्ने! ते तव यज्ञिया तनूः यज्ञयोग्या या तनूः तया तन्वा सह इहि आगच्छ। आगत्य चात्मानमारोह। त्वं मदीय आत्मा सन् मच्छरीरमारोह। किं कुर्वन्? अस्मे अस्माकं नर्या नरस्य योग्यानि वसूनि धनानि पुरूणि बहूनि अच्छा अभिमुखानि कृण्वन् त्वं यज्ञस्वरूपो भूत्वा यज्ञं य-ज्ञनिर्वाहकं मद्देहं स्वां योनिं स्वकीयं स्थानमासीद प्राप्नुहि। हे जातवेदः! भुवः सकाशादाभिमुख्येन जायमानः सक्षयः नि-

* सं. ३-४-१०.

मासीद स्वां योनिम् । जातवेदो भुव आजायमानस्सक्षय एहि । [21]उपावरोह जातवेदः पुनस्त्वम् ॥ देवेभ्यो हव्यं वह नः प्रजानन् । आयुः प्रजाꣳ रयिमस्मासु धेहि । अजस्रो दीदिहि नो दुरोणे । [22]तमिन्द्रं जोहवीमि मघवानमुग्रम् । सत्रादधानमप्रतिष्कुतꣳ शवाꣳसि । मꣳहिष्ठो गीर्भिरा च

वासस्थानसहित एह्यागच्छ । एतस्यापि मन्त्रस्य विनियोगो ब्राह्मणे दर्शितः—"या ते अग्ने यज्ञिया तनूस्तयेह्यारोहेत्यात्मन्समारोहयते"* इति ॥

[21]एकविंशीमाह—हे जातवेदः! पुनरपि त्वमुपावरोह अरण्योः सकाशाद्भूमाववतर । अवतीर्य च प्रजानन् अस्य देवस्येदं हविरिति प्रकर्षेण जानन् नः अस्मदीयं हव्यं देवेभ्यो वह प्रापय आयुरादिकमस्मासु संपादय । अजस्रः निरन्तरं वर्तमानस्त्वं नः दुरोणे अस्मदीये गृहे दीदिहि दीप्यस्व । एतस्य विनियोगमापस्तम्ब आह—"उपावरोह जातवेद इति निवर्तमानमभिमन्त्रयते" इति ॥

[22]द्वाविंशीमाह—तं प्रसिद्धमिन्द्रं जोहवीमि आह्वयामि । कीदृशमिन्द्रं? मघवानं धनवन्तं उग्रं शत्रुषु तीव्रं शवांसि सर्वाणि बलानि सत्रादधानं सहधारयन्तं अप्रतिष्कुतं कुतोऽपि प्रतिपक्षरहितम् । ईदृश इन्द्रः मंहिष्ठः अतिशयेन पूज्यः यज्ञि-

*सं १-५-१०.

यज्ञियो ववर्तत् । राये नो विश्वा सुपथा कृणोतु वज्री । [23]त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत् । सोममपिबद्विष्णुना सुतं यथावशत् । स ईं ममाद महि कर्म कर्तवे महामुरुम् ॥ १२ ॥ सैनं सश्चद्देवं देवस्सत्यमिन्दुं सत्य इन्द्रः ।

यः यज्ञयोग्यश्च सन् गीर्भिः अस्मदीयाभिः स्तुतिभिः आववर्तत् पुनःपुनरावर्तमानस्सन् वज्री वज्रयुक्तो विश्वा सुपथा सर्वान् सुमार्गान् नः राये अस्माकं धनलाभाय कृणोतु करोतु । अयं मन्त्रः ऐन्द्रे कर्मणि द्रष्टव्यः ॥

[23]त्रयोविंशीमाह—'ज्योतिर्गौरायुरिति त्रिकद्रुकः' इत्यापस्तम्बेनाभिधानाज्ज्योतिरादयस्त्रयः सोमयागास्त्रिकद्रुकशब्दवाच्याः । तेषु योगेष्विन्द्रः विष्णुना सहितः सोममपिबत । कीदृश इन्द्रः? महिषः गुणैश्वर्यादिभिर्महान् तुविशुष्मः प्रभूतबलः तृपत् तृप्तिं गतः । कीदृशं सोमं? यवाशिरं यवसक्तुमिश्रितं सुतमभिषुतम् । स चेन्द्रः तं सोमं यथावशत् यथावदकामयत सम्यक्कामितवानित्यर्थः । स च सोमः महि कर्म कर्तवे महत्कर्म कर्तुं ईंममाद इममिन्द्रं हर्षयामास । स चेन्द्र एनं सोमं सश्चत् पीतवान् । कीदृशं सोमं? महां स्वादुत्वेन महान्तं उरुं प्रभूतं देवं दीप्यमानं सत्यमवितथमवश्यफलप्रदं इन्दुं आह्लादहेतुम् । कीदृश इन्द्रः? देवो दीप्यमानः सत्यः अवितथस्वरूपः केनाप्यबाध्य इत्यर्थः ॥

[24]विदद्यती सरमा रुग्णमद्रेः । महि पाथः पूर्व्यꣳ सध्रियक्कः । अग्रं नयत्सुपद्यक्षराणाम् । अच्छा रवं प्रथमा जानती गात् । [25]विदद्गव्यꣳ सरमा दृढमूर्वम् । येना नुकं मानुषी भोजते विट् । आ ये विश्वा स्वपत्यानि चक्रुः । कृण्वानासो अमृत-

[24]चतुर्विंशीमाह—सरमा काचित् शुनी श्वमूर्तिधारिणी देवता भूमावन्नसंपादनार्थं आयती इन्द्रेण प्रेषिता अद्रेर्यती मेरोः सकाशाद्भूमिं गच्छन्ती रुग्णं अन्नाभावेन क्षुधाग्रस्तं जनं विदत् अलभत। ततो महि पाथः महज्जलं कः अकरोत् । कीदृशं? पूर्व्यं पूर्वमुत्पन्नमन्नस्य कारणं सध्र्यञ्चतीति सध्रियक् सर्वक्षेत्रसंचारीत्यर्थः। सुष्ठु पद्यते गच्छतीति सुपदी सा शुनी अग्रं नयत् तज्जलं पुरतो नीतवती। तत्र पुरोदेशे अक्षराणां क्षरो विनाशो हिंसा तद्योग्यानां गवां रवं शब्दं जानती अच्छा तदाभिमुख्येन प्रथमा मुख्या सती गात् जगाम जलोत्पादनेनान्नं संपाद्य गोरसं संपादयितुं गतवतीत्यर्थः ॥

[25]पञ्चविंशीमाह—सरमा शुनी गव्यं गोयूथं विदत् अलभत। कीदृशं? दृढं कदाचिदप्यनपायिनं ऊर्वं अतिप्रभूतम्। मानुषी विट् विश्वमनुष्यरूपा प्रजा येन गोयूथेन भोजते क्षीरादिकं भुङ्क्ते। नुकमित्येतदव्ययं सर्वथेत्यस्मिन्नर्थे वर्तते। अमृतत्वाय स्वर्गरूपाय कर्मफलाय गातुं मार्गं कृण्वानासः कुर्वाणा ये यजमाना विश्वा सर्वाणि स्वपत्यानि कर्माण्याचक्रुः सर्वतः

त्वायं गातुम् । [26]त्वं नृभिर्नृपते देवहूतौ ॥ ४३ ॥
भूरीणि वृत्वा हर्यश्व हꣳसि । त्वं निदस्युं चुमु-
रिम् । धुनिं चास्वापयो दभीतये सुहन्तु । [27]एवा
पाहि प्रत्नथा मन्दतु त्वा । श्रुधि ब्रह्म वावृधस्वोत
गीर्भिः । आविस्सूर्यं कृणुहि पीपिहीषः । जहि

कृतवन्तः । तथाविधयजमानरूपा प्रजा येन गव्येन भुङ्क्ते तं गोयूथं अलभतेति पूर्वत्रान्वयः ॥

[26]षड्विंशीमाह—हे हर्यश्व ! हरिनामकाभ्यामश्वाभ्यामुपेत ! इन्द्र ! हे नृपते ! मनुष्याणां पालक ! नृभिर्मनुष्यैः यजमानर्त्विग्भिः देवहूतौ देवार्थमाह्वाने कृते सति त्वं भूरीणि बहूनि वृत्वा वृत्राणि शत्रुजातानि हंसि मारयसि । किंच—त्वं निदस्युप्रभृतीन् त्रीन् रक्षोविशेषान् सुहन्तु सुष्ठु हननसाधनेन वज्रेण दभीतये दम्भनाय हिंसार्थं अस्वापयः सुप्तान्मूर्छितानकरोः ॥

[27]सप्तविंशीमाह हे इन्द्र ! प्रत्नथा पुरातनः पूर्वकल्पावस्थितः इन्द्रः यथा सोमं पिबति एवा पाहि एवमेव त्वमपि सोमं पिब । स च सोमः त्वां मन्दतु हर्षयतु । ब्रह्म अस्माभिः प्रयुज्यमानं मन्त्रं श्रुधि शृणु । उत अपिच गीर्भिः अस्मदीयाभिः स्तुतिभिः वावृधस्व अतिशयेन वर्धस्व । सूर्यमाविष्कृणुहि आच्छादकस्य स्वर्भानुसंज्ञकस्यासुरस्य विनाशेन प्रकटीकुरु । इषः अन्नानि पीपिहि पालय । शत्रून् जहि मारय । गा अभिलक्ष्य तुन्धि विरोधिनो व्याघ्रतस्करादीन्विनाशय । "तमिन्द्रं जो

शत्रूꣳरभि गा इन्द्र तृन्धि । [28]अग्ने बाधस्व वि मृधो नुदस्व । अपामीवा अप रक्षाꣳसि सेध । अस्मात्समुद्राद्बृहतो दिवो नः ॥ ४४ ॥ अपां भूमानमुप नस्सृजेह । [29]यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ त्वा । वसूनि पुरुधा विशन्तु । दीर्घमायुर्यजमानाय कृण्वन् । अधामृतेन जरितारमङ्ग्-

---

हवीमि" इत्यादिमन्त्रषट्कमैन्द्रे कर्मणि द्रष्टव्यम् । त्रिकद्रुकेष्विति मन्त्रस्तु षोडशिशस्त्रेऽप्यन्तर्भावनीयः ॥

[28]अष्टाविंशीमाह—हे अग्ने! मृधः शत्रून् विशेषेण बाधस्व । अमीवाः रोगान् अपनुदस्व । रक्षांसि अपसेध अपगमय । अस्मात् दृश्यमानात् समुद्रात् बृहतः समुद्रवदतिप्रौढात् दिवः द्युलोकात् नः अस्मदर्थं अपां भूमानं वृष्टिजलस्य बाहुल्यं सृज उत्पादय। किंच—नः अस्मानपि इह कर्मणि उपसृज संयोजय ॥

[29]एकोनत्रिंशीमाह—हे यज्ञ! यागनिष्पादक! वह्ने! सुमतौ भक्तियुक्तायां अस्मदीयायां बुद्धौ प्रतितिष्ठ प्रतिष्ठितो भव । किं कुर्वन्? यजमानार्थं दीर्घमायुः कुर्वन्, तादृशं त्वा त्वां पुरुधा बहुविधानि वसूनि धनानि आविशन्तु सर्वतः प्रविशन्तु । अथ अनन्तरं जरितारं जरां प्राप्स्यन्तं यजमानं अमृतेन अङ्गिध नाशरहितेन स्वर्गलोकेन संयोजय । एतयोर्मन्त्रयोरुत्तरवेद्यामग्निप्रतिष्ठापने विनियोगमापस्तम्ब आह—"अग्ने बाधस्व" इत्यारभ्य "संभारेषु प्रतिष्ठाप्य" इत्यन्तेन वाक्येन ॥

ग्धि । [30]इन्द्रंश्शुनावृद्वितनोति सीरम् । संवत्सरस्यं प्रतिमाणंमेतत् । अर्कस्य ज्योतिस्तदिदास ज्येष्ठम् । संवत्सरꣳ शुनवथ्सीरमेतत् । [31]इन्द्रस्य राधः प्रयंतं पुरु त्मना । तदर्करूपं विमिमानमेति । द्वादशारे प्रतितिष्ठतीद्वृषा । [32]अश्वायन्तो गव्यन्तो वाजयन्तः । हवामहे त्वोपगन्त वा उ । आभू-

[30]त्रिंशीमाह—अयमिन्द्रः शुनावत् सीरं वायुसहितमादित्यं वितनोति विस्तारयति । एतत् आदित्यस्य विस्ताररूपं संवत्सरस्य प्रतिमाणं प्रतिनिधिरूपम् । आदित्यगमनावृत्त्या हि संवत्सरो निष्पाद्यते । तदित् तदानीमेव अर्कस्य आदित्यस्य ज्योतिः ज्येष्ठं अतिप्रशस्तं प्रवृद्धं च आस । एतज्ज्योतिः संवत्सरनिष्पादकत्वात्संवत्सरस्वरूपम् । शुनवत् वायुसंयुक्तं सीरमादित्यमण्डलरूपमित्येवं तस्य ज्येष्ठत्वम् ॥

[31]एकत्रिंशीमाह—इन्द्रस्य राधः सर्वकर्मसाधकं यत्सामर्थ्यं तत्पुरु प्रभूतं आत्मना प्रयतं स्वेनैव संपादितं तत्सामर्थ्यमर्कस्वरूपं सूर्यस्वरूपं भूत्वा विमिमानमेति सर्वैः प्राणिभिर्विशेषेण प्रमीयमाणं सत् एति गच्छति संचरतीत्यर्थः । सोऽयमादित्यरूपो वृषा कामाभिवर्षकः इन्द्रः द्वादशारे द्वादशमासरूपैः अरैर्युक्ते संवत्सरचक्रे प्रतितिष्ठतीत् प्रतिष्ठित एव वर्तते ॥

[32]द्वात्रिंशीमाह—हे इन्द्र ! वयं अश्वायन्तः अश्वमात्मन इच्छन्तः गव्यन्तः गामात्मन इच्छन्त वाजयन्तः वाजमन्नमात्मन इच्छ-

षन्तस्त्वा सुमतौ नवायाम् । वयमिन्द्र त्वा शुनꣳ हुवेम ॥ ४५ ॥

अर्चत हविर्गायत यꣳसञ्चर्षणीनां वैशम्भल्या हासीत्त्वमुरुं देवहूतौ नस्त्मना षट् च ॥ ८ ॥

प्राण उदेहि पुनरा नो भर यज्ञो रायो वार्त्रघ्नहत्याय वसूनाꣳ स ईं पाह्यृष्टौ ॥ ८ ॥

प्राणो रक्षत्यगृभीता धारावरा मरुतो दीर्घायुत्वाय ज्योतिषा त्वा पञ्चचत्वारिꣳशत् ॥ ४५ ॥

हरिः ओम् ॥

---

न्तः त्वां उपगन्त वा उ उपगन्तुमेव हवामहे आह्वयामः । नवायां नूतनायां सुमतौ शोभनायां भक्तियुक्तायां अस्मद्बुद्धौ त्वामाभूषन्तः सर्वतः प्रशंसन्तो वयं हे इन्द्र! त्वा शुनं त्वद्रूपं वायुं तदुपलक्षितमादित्यं च हुवेम आह्वयामः । तदेतन्मन्त्रत्रयं शुनासीरगुणकेन्द्रदेवताके कर्मणि द्रष्टव्यम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधर श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके पञ्चमप्रपाठके अष्टमोऽनुवाकः.

पञ्चमप्रपाठकः समाप्तः.

# अथ द्वितीयाष्टके षष्ठप्रपाठकारम्भः.

[1]स्वाद्वीं त्वा स्वादुना । तीव्रां तीव्रेण । अमृतामृतेन । मधुमतीं मधुमता । सृजामि सꣳ सोमेन । सोमोऽस्यश्विभ्यां पच्यस्व । सरस्वत्यै

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
उपहोमार्थमन्त्राणां पञ्चमे शेष ईरितः ।
षष्ठे प्रपाठके सौत्रामणिः कौकिल्युदीर्यते ॥ २ ॥

[1]तत्र प्रथमानुवाके ग्रहा उच्यन्ते । कल्पः—"सुरायास्संधानकाले तोक्मैर्मासरेण नग्नहुना च सुरां संसृज्य" इति । अङ्कुरिता व्रीहयस्तोक्माः । ईषत्तप्तानां यवानां चूर्णं द्विविधं सूक्ष्मं स्थूलं च । तत्र सूक्ष्मं चूर्णं दध्ना तक्रेण वा मिश्रितं दर्भैः प्रच्छन्नं मासरमित्युच्यते । स्थूलं चूर्णं तु मन्थेन मिश्रितं दर्भैः प्रच्छन्नं नग्नहुरित्युच्यते । तैस्तोक्ममासरनग्नहुभिः सुरायाः संसर्जनार्थ. स्वाद्वीं त्वेति मन्त्रः—हे सुरे! स्वाद्वीं त्वा स्वादुना सोमेन संसृजामि । अत्र सोमशब्देन पूर्वोक्तं तोक्ममासरनग्नहुशब्दाभिधेयद्रव्यत्रयमुपलक्ष्यते । सोमस्यौषधिराजत्वेन तदुपलक्षणं कर्तुं शक्यम् । कीदृशीं त्वां? तीव्रां उग्रगन्धां अमृतां अमृतवदाप्यायनकरीम् । अत एव बलीवर्दादीनाप्याययितुं पाययन्ति।

पच्यस्व । इन्द्राय सुत्राम्णे पच्यस्व । [2]परीतो षिंञ्चता सुतम् । सोमो य उत्तमꣳ हविः ॥ १ ॥ दधन्वा यो नर्यो अप्स्वन्तरा । सुषाव सोममद्रिभिः । [3]पुनातु ते परिस्रुतम् । सोमꣳ सूर्यस्य दुहिता ।

मधुमतीं माधुर्येणोपेताम् । कीदृशेन सोमेन? तीव्रेण वमनाद्युपयुक्तौषधित्वेन सोमस्य तीव्रत्वम् । अमृतेन "अपाम सोमममृता अभूम"* इति श्रुतेरमृतत्वप्रापकेण । मधुमता माधुर्ययुक्तेन । एवंविधसोमरूपतया भावितैस्तोक्मादिभिर्युक्तत्वात्त्वं सोमोऽसि । तस्माद्देवतात्रयार्थं त्वं पच्यस्व सुत्राम्णे सुष्ठु रक्षकाय ॥

[2]कल्पः—"सक्तूनां तृतीयेन परिकीर्य परीतो षिञ्चता सुतमित्येकस्या गोर्दुग्धेन परिषिच्य" इति । श्यामाकसक्तूंस्त्रेधा विभज्य तृतीयांशं सुराग्रामुपरि विकीर्य तदुपरि दुग्धपरिषेचनार्थोऽयं मन्त्रः—यः सोमलतात्मकः तद्देवेदमुत्तमं हविः तदत्र सुतमभिषुतं इतः अस्मात्क्षीरात् परितः सिक्तमभूत् । यः सोमः नर्यो नराणां यजमानानां हितस्सन् अप्स्वन्तरा द्रवद्रवेषु मध्ये आ समन्तात् दधन्वा स्वादुत्वं धारयति, तं सोमं अद्रिभिः उपांशुसवनप्रभृतिभिः पाषाणैः सुषाव यजमानोऽभिषुतवान् ॥

[3]यदुक्तं सूत्रकारेण—"आज्यमुत्पूय पय उत्पुनाति प्राङ्सोमो अतिद्रुत इति सोमवामिनः, प्रत्यङ्सोमो अतिद्रुत इति सोमातिपवितस्य" इति । तत्र सोमवामिनो मन्त्रमाह—हे इन्द्र! ते

* सं. १-२-५.

वारे॑ण॒ शश्व॑ता॒ तना॑ । वा॒युः पू॒तः प॒वित्रे॑ण । प्राङ्क्सोमो॒ अति॑द्रुतः । इन्द्र॑स्य॒ युज्यः॒ सखा॑ । [4]वा॒यु॒ः पू॒तः प॒वित्रे॑ण । प्र॒त्यङ्क्सोमो॒ अति॑द्रुतः ॥ इन्द्र॑स्य॒ यु॒ज्य॒स्सखा॑ । [5]ब्रह्म॑ क्ष॒त्रं पव॑ते॒ तेज॑ इ॒न्द्रि॒यम् । सु॒र॑या॒ सोम॑स्सु॒त आसु॑तो॒ मदा॑य । शु॒-

त्वदर्थं सूर्यस्य दुहिता पयः पावयन्ती सूर्यस्य संबन्धिनी दुहितृस्थानीया दीप्तिः स्रुतं द्रवीभूतं सोमं सोमत्वेन भावितं पयोद्रव्यं वारेण वालजन्येन पवित्रेण पुनातु शोधयतु । कीदृशेन वारेण? शश्वता शाश्वतेन दृढेन तना विस्तीर्णेन तादृशेनानेन पवित्रेण पूतः सोमः पयोरूपो वायुवच्छीघ्रगामी भूत्वा प्राङ् ऊर्ध्वं निर्गतः । कीदृशः सोमः? इन्द्रस्य युज्यो योग्यः सखा । तादृशोऽयं सोमः शुद्धो भवत्वित्यर्थः । यः पूर्वं सोमयागं कृत्वा वान्ति कृतवांस्तस्येदानीं सौत्रामण्यां पयश्शोधनार्थोऽयं मन्त्रः ॥

[4]यस्य तु पुरा सोमो जीर्णः सोऽयं सोमातिपवितः । यद्वा—यस्य सोमोऽधोद्वारेण निर्गतः सोऽयं सोमातिपवितः तस्य पयश्शोधनार्थं मन्त्रमाह—अत्र "पुनातु ते परिस्रुतम्" इति पूर्वभागोऽनुषज्यते । प्रत्यङ् अतिद्रुतः अधोनिर्गतः । अन्यत्पूर्ववद्व्याख्येयम् ॥

[5]कल्पः—"ब्रह्म क्षत्रं पवत इति सुरां प्रतिप्रस्थाता" इति । पुनातीत्यनुवर्तते । ब्राह्मणजातिः क्षत्रियजातिश्च तेजःकारणमिन्द्रियवृद्धिकारणं चेदं द्रव्यं पवते पुनाति । अनया सुरया सह

क्रेण देव देवताः पिपृग्धि । रसेनान्नं यजमानाय धेहि । [6]कुविदङ्ग यवमन्तो यवं चित् । यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुत भोजनानि । ये

सोमः सुत उत्पादितः । मदाय देवानां मदार्थं आसुतः सर्वतोऽभिषुतश्च । हे सोमदेव! तव शुक्रेण निर्मलेन रसेन देवताः पिपृग्धि संपृक्ताः कुरु । यजमानाय चान्नं संपादय ॥

[6]कल्प—"अध्वर्युः पयोग्रहान्गृह्णाति कुविदङ्गेति सर्वेषामेका पुरोरुक् एका पुरोनुवाक्या, एकः प्रैषः, एका याज्या, 'उपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामि' इति गृहीत्वा यवसक्तुभिः श्रीत्वा पवित्रेण परिमृज्य 'एष ते योनिस्तेजसे त्वा' इति सादयित्वा 'उपयामगृहीतोऽसि सरस्वत्यै त्वा जुष्टं गृह्णामि' इति गृहीत्वा गोधूमसक्तुभिः श्रीत्वा पवित्रेण परिमृज्य 'एष ते योनिर्वीर्याय त्वा' इति सादयित्वा 'उपयामगृहीतोऽसीन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामि' इति गृहीत्वोपवाकसक्तुभिः श्रीत्वा पवित्रेण परिमृज्य 'एष ते योनिर्बलाय त्वा' इति सादयित्वा" इति । तत्र पुरोरुचमाह—अङ्गशब्दः प्रियसंबोधनवाचकः । हे प्रियाः! अश्विसरस्वतिसुत्रामेन्द्राः! ये यज्वानो बर्हिषो यागस्य नमोवृक्तिं नमस्कारविनाशनं न जग्मुः न प्रापुः । किंतु अत्यन्तश्रद्धावन्तोऽनुतिष्ठन्ति तेषामेषां यजतां हविर्विषयाणि भोजनानि इहेह कृणुत । ग्रहणपात्राणामनेकत्वाद्वीप्सा । तत्रोपमानमुच्यते—कुविच्छब्दो बह्वर्थवाची । चिच्छब्दस्समुच्चये । यथा लोके यवमन्तो यवादिधान्योपेताः कृषिकाः कुवित् यवं चित् बहुलं यवं

बर्हिषो नमोवृक्तिं न जग्मुः । [7–9]उपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामि ॥ ३ ॥ सरस्वत्या इन्द्राय सुत्राम्णे । [10–12]एष ते योनिस्तेजसे त्वा । वीर्याय त्वा बलाय त्वा । [13–15]तेजोऽसि तेजो मयि धेहि । वीर्यमसि वीर्यं मयि धेहि । बलमसि बलं

---

अन्यानि च गोधूमप्रियङ्ग्वादिधान्यानि अनुपूर्वं तत्तत्परिपाकानुक्रमेण वियूथ विधूय विशेषेण इदं पक्कमिदमपक्कमिति पृथक्कृत्य दान्ति लुनन्ति तथा यूयमपि नमस्कारादिरहितो नास्तिकोऽयं यज्वा श्रद्धालुरयं यज्वेति विविच्य श्रद्धालोर्हवींषि भुङ्ग्ध्वम् ॥

[7–9]अथ ग्रहणमन्त्रानाह—उपयामशब्दः पृथिवीकार्यदारुपात्रवाची । "इयं वा उपयामः"* इति श्रुतेः । पयोरूपद्रव्यविशेष ! त्वमुपयामेन गृहीतोऽसि अश्विदेवार्थं त्वामिह पात्रे गृह्णामि । सरस्वतीमन्त्रे पूर्वोत्तरभागावनुषञ्जनीयौ । तथा सुत्राममन्त्रेऽपि ॥

[10–12]अथ सादनमन्त्रानाह—हे आश्विनग्रह ! एष खरप्रदेशः ते तव स्थानम् । अस्मिन् स्थाने तेजस्सिद्ध्यर्थं त्वां सादयामीति शेषः । वीर्यबलमन्त्रयोरप्येष ते योनिरित्यनुवर्तते । हे सारस्वतग्रह ! वीर्यवृद्ध्ये त्वामिह सादयामि । हे सुत्रामग्रह ! बलवृद्ध्ये त्वामिह सादयामि ॥

[13–15]कल्पः—"उत्तरैर्यथालिङ्गमुपतिष्ठते" इति । ग्रहत्रयं क्रमेण संबोध्य योजनीयम् ॥

---

* तै. सं. ६-५-८.

मयि धेहि । [16]नाना हि वां देवहितꣳ सदः कृतम् । मा सꣳसृंक्षाथां परमे व्योमन् । सुरा त्वमसि शुष्मिणी सोम एषः । मा मा हिꣳसीस्स्वां योनिमाविशन् ॥ ४ ॥ [7—19]उपयामगृहीतोऽस्याश्विनं

[16]कल्पः—"सुरायां वाल आनीयमानायां धारायाः प्रतिप्रस्थाता सुराग्रहान्गृह्णाति 'नाना हि वां देवहितं सदः कृतम्' इति सर्वेषामेका पुरोरुगेका पुरोनुवाक्यैकः प्रैष एका याज्योपयामगृहीतोऽस्याश्विनं तेजोऽश्विभ्यां त्वा जुष्टं गृह्णामीति गृहीत्वा पवित्रेण परिमृज्यैष ते योनिर्मोदाय त्वेति सादयत्युपयामगृहीतोऽसि सारस्वतं वीर्यं सरस्वत्यै त्वा जुष्टं गृह्णामीति गृहीत्वा पवित्रेण परिमृज्यैष ते योनिरानन्दाय त्वेति सादयत्युपयामगृहीतोऽस्यैन्द्रं बलमिन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति गृहीत्वा पवित्रेण परिमृज्यैषं ते योनिर्महसे त्वेति सादयति" इति । तत्र पुरोरुचमाह—हे सुरे! हे सोम! वां युवयोः नाना पृथग्भूतं सदः स्थानं देवेभ्यो हितं कृतं संपादितं तस्मात्तौ युवां मा संसृक्षाथां परमे व्योमन् उत्कृष्टे मदीयरक्षणे निमित्तभूते सति परस्परसंसृष्टौ मा भूतम् । हे गृह्यमाणद्रव्यविशेष! त्वं शुष्मिणी बलवती सुराऽसि । एष तु सोमः शान्तात्मा ततश्च युवयोः संसर्गो न युज्यते । हे सोम! स्वां योनिं मृदूदररूपं स्वस्थानमाविशन् मां सोमस्य पातारं मा हिंसीः ॥

[17—19]अथ ग्रहणमन्त्रानाह—हे द्रव्यविशेष! त्वदीयरक्षणे निमित्तभूते सति परस्परसंसृष्टौ मा भूतम् । हे गृह्यमाणद्रव्य!

तेजः। सारस्वतं वीर्यम्। ऐन्द्रं बलम्। [20-22]एष ते योनिर्मोदाय त्वा। आनन्दाय त्वा महसे त्वा। [23-26]ओजोऽस्योजो मयि धेहि। मन्युरसि मन्युं मयि धेहि। महोऽसि महो मयि धेहि। सहोऽसि सहो मयि धेहि। [27]या व्याघ्रं विषूचिका। उभौ वृकं च रक्षति। श्येनं पतत्रिणꣳ सिꣳहम्। सेमं

---

उपयामेन गृहीतोऽसि। तदिदं तव स्वरूपमश्विसंबन्धि तेजः। अतोऽश्विभ्यां त्वा जुष्टं गृह्णामीति शेषः। एवं सारस्वतमन्त्रः ऐन्द्रमन्त्रश्च सूत्रोक्तक्रमेणानुषङ्गशेषपूरणाभ्यां योजनीयः॥

[20-22]अथ सादनमन्त्रानाह—सूत्रोक्तक्रमेण ग्रहत्रयं सादने योजनीयम्॥

[23-26]कल्पः—"षण्णामनुवाकशेषेणाध्वर्युर्यजमानश्चोपतिष्ठते, उत्तरेण चानुवाकेन" इति। तत्रानुवाकशेषे चत्वारि यजूंष्याह—ओजो बलं, मन्युर्दीप्तिः, महः पूजा, सहोऽभिभवितृत्वम्। हे द्रव्यविशेष! त्वमुक्तैर्गुणैर्युक्तोसि अतो मय्यपि तान्गुणान् संपादय॥

[27]अथैकामृचमाह—भुक्तान्नजरणविरोधिव्याधिविशेषो विषूचिका। तादृशी या व्याघ्रं वृकं चोभौ रक्षति। वृकोऽरण्यश्वा। व्याघ्रवृकयोर्दीपनपाटवात्कदाचिदप्यजरणदोषो नास्ति। तथा सा विषूचिका श्येनाख्यं पक्षिणं सिंहं च रक्षति। तयोरपि नास्ति सा व्याधिः। सा व्याघ्रादिरक्षिका विषूचिका इमं यजमानं अंहसः पापफलाद्व्याधेः पातु॥

पात्वꣳ हंसः । [28-29] संपृचस्स्थ सं मा भद्रेण पृङ्क्त । विपृचस्स्थ वि मा पाप्मना पृङ्क्त ॥ ५ ॥

हविः प्रत्यङ्ङ्स्सोमो अतिद्रुतो गृह्णाम्याविशन्विषूचिका पञ्च च ॥ १ ॥

---

[28-29] अथ यजुर्द्वयमाह—हे इन्द्रपात्रस्थद्रव्यविशेषाः! यूयं द्रवत्वेन स्वभावतः संपर्कशीलाः स्थ, अतो मां भद्रेण श्रेयसा संयोजयत। इह तु पृथक्पात्रे धृतत्वाद्विपृचो वियुक्तरूपाः स्थ। अतो मां पाप्मना विपृङ्क्त वियोजयत ॥

अत्र विनियोगसंग्रहः—

स्वाद्वीं त्वेत्यादिभिर्योज्यं सुरा क्षीरं पुनेत्यतः ।
ऋचां त्रयात्पुनीयात्सुरां ब्रह्मेति शोधयेत् ॥ १ ॥
कुविदित्पुरोरुचं ब्रूयादुपयामादिभिस्त्रिभिः ।
पयः पात्रत्रये ग्राह्यमेषा सादयते त्रिभिः ॥ २ ॥
तेजस्त्रिभिरुपस्थेयं नानेत्येतां पुरोरुचम् ।
सुराग्रहे पठेन्मन्त्रैरुपयामादिभिस्त्रिभिः ॥ ३ ॥
सुरां गृह्णात्यथैवाद्यैर्मन्त्रैस्सं सादयेत्त्रिभिः ।
ओजोऽसीत्यादिभिः सप्तमन्त्रैस्तानुपतिष्ठते ।
प्रथमे ह्यनुवाकेऽस्मिन्नेकोनत्रिंशदीरिताः ॥ ४ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके षष्ठप्रपाठके प्रथमोऽनुवाकः.

[1]सोमो राजाऽमृतꣳ सुतः। ऋजीषेणाजहान्मृत्युम्। ऋतेन सत्यमिन्द्रियम्। विपानꣳ शुक्रमन्धसः। इन्द्रस्येन्द्रियम्। इदं पयोऽमृतं मधु। [2]सोममद्भ्यो व्यपिबत्। छन्दसा हꣳसश्शुचिषत्। ऋतेन सत्यमिन्द्रियम्। अद्भ्यः क्षीरं व्यपिबत् ॥

[1]प्रथमे ग्रहा उक्ताः। द्वितीये तदुपस्थानमुच्यते। तत्र प्रथमामृचमाह—अयमभिषुतः सोमो राजा स्वयममृतं पीयूषसमानः यथा पीयूषं पिबतोऽपमृत्युर्नास्त्येवं सोमपस्यापि नापमृत्युरित्यर्थः। तत्रायं हेतुः—ऋजीषेण ईदृक्स्थानीयेन नीरसेन मृत्युमजहात्। ऋजीषे ह्यपमृत्युमजहात्। ऋजीषमपमृत्युप्रापकं रसनिस्सरणेन तस्य परित्यागादपमृत्युहेतुः परित्यक्तः। अतोऽयं ऋतेन यज्ञनिष्पादनेन इन्द्रियं इन्द्रियवृद्धिहेतुः तदेतत्सत्यं शपथं करोमीत्यर्थः। अन्धसोऽन्नरसादपि विपानं विशेषेण पानयोग्यं सोमरसरूपममृतम्। अतः शुक्रं शुद्धं योयमिन्द्रस्तस्यापीन्द्रियवृद्धिकारणमिदम्। किंच—इदं द्रव्यं मधु पयो मधुरं क्षीररूपमत एवामृतरूपम् ॥

[2]अथ द्वितीयामाह—शुचौ शुद्धप्रदेशे स्वर्गे सीदतीति शुचिषत् हंसः सर्वप्राणिहृदि स्थितो जीवात्मा तद्रूपधारीन्द्रः छन्दसा स्वेच्छया तमिमं सोममद्भ्यः सकाशाद्विभज्यापिबत्। ऋतेन यज्ञद्वारेणेन्द्रियवृद्धिहेतुस्सोमः तदेतत्सत्यम्। तत्र दृष्टान्तः—यथा लोके क्रुङ् क्रौञ्चपक्षी आङ्गिरसः सर्वाङ्गसंबन्धिसारयुक्तः पुष्टशरीर इत्यर्थः। तादृशो धिया स्वबुद्ध्या क्षीरमद्भ्यो विविच्या-

कुम्भ्याङ्गिरसो धिया । ऋतेन सत्यमिन्द्रियम् । अन्नात्परिस्रुतो रसम् । ब्रह्मणा व्यपिबत्क्षत्रम् । ऋतेन सत्यमिन्द्रियम् । [3]रेतो मूत्रं विजहाति । योनिं प्रविशदिन्द्रियम् । गर्भो जरायुणाऽऽवृतः । उल्वं जहाति जन्मना । ऋतेन सत्यमिन्द्रियम् ॥ ७ ॥ वेदेन रूपे व्यकरोत् । सतासती प्रजापतिः । ऋ-

पिबत् । क्षीरपात्रे स्वमुखे प्रक्षिप्ते सति मुखगताम्लरससंपर्कात्क्षीरांशो जलांशश्चोभौ विविच्येते । तत्र जलभागं परित्यज्य क्षीरभागमेव पिबति । तद्वदयमिन्द्रोऽपि सोमरसं जलभागाद्विविच्य पिबति । अतो यज्ञद्वारेणेन्द्रियवृद्धिहेतुस्सोमः तदेतत्सत्यम् । तत्रैवान्यो दृष्टान्त उच्यते—यथा क्षत्रं क्षत्रियजातिः ब्रह्मणा प्रौढेन क्षीराज्याद्विना योगात् परितः स्रवतीति परिस्रुदन्नं तस्मादन्नात्संपन्नं रसं पिबति । राजादयो हि भोजनकाले प्रभूते क्षीरे वा व्रीह्याद्यन्नं प्रक्षिप्य तदन्नरसोपेतं क्षीरादिकं पिबति । एवमिन्द्रोऽयमपि सारभूतं रसं पिबति । ऋतेनेति पूर्ववत् ॥

[3]अथ तृतीयामाह—यथा लोके स्त्रीयोनिं प्रविशत् पुरुषस्येन्द्रियं रेतो मूत्रं च विभज्य परित्यजति । मूत्रस्य बहिस्त्यागः । रेतसो गर्भाशये त्यागः । तद्रेतःपरिणामो जरायुणा वेष्टितो गर्भो भूत्वा स्वकीयेन जन्मना तदावरणरूपमुल्वं जहाति । एवमिन्द्रोऽप्यसारं परित्यज्यैकस्मिन्नपि पात्रे सारमेव स्वीकरोति । ऋतेनेति पूर्ववत् । यथा प्रजापतिरेकरूपेण वेदेन पर्यालोच्य सतासती

तेन॑ स॒त्यमि॑न्द्रि॒यम् । [4]सोमे॑न॒ सोम॑ौ॒ व्य॑पिबत् । सु॒ता॒सु॒तौ प्र॒जाप॑तिः । ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम् । दृ॒ष्ट्वा रू॒पे व्याक॑रोत् । स॒त्या॒नृ॒ते प्र॒जाप॑तिः । अ-श्र॑द्धा॒मनृ॑ते॒ऽद॑धात् । श्र॒द्धाꣳ स॒त्ये प्र॒जाप॑तिः । ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम् । [5]दृ॒ष्ट्वा परि॑स्रु॒तो॒ रस॑म् । शु॒क्रेण॑ शु॒क्रं व्य॑पिबत् । पय॒स्सोमं॑ प्र॒जाप॑तिः । ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम् । वि॒पान॑ꣳ शु॒क्रमन्ध॑सः ।

पृथिव्यादिसद्रूपं शशविषाणाद्यसद्रूपं च विभज्याकरोत् । तथाऽय-मिन्द्रः सारासारविभागं कृतवान् । ऋतेनेति पूर्ववत् ॥

[4]अथ चतुर्थीमाह—प्रजापतिरेकरूपेण सोमद्रव्येण युक्तो र-सात्मकोऽयं सोमोऽभिषुतो वल्ल्यात्मकोऽयं सोमो नाभिषुत इति विभज्य तत्र रसात्मकमेवापिबत् । अत्र प्रजापतिशब्देन प्रजापा-लकत्वादिन्द्रो विवक्षितः । तत्र विभागे दृष्टान्त उच्यते—यथा प्रजापतिः सत्यवदनमनृतवदनं चेत्येवं वचनस्य द्वे रूपे विशे-षेण सृष्टवान् । ततोऽनृते प्रजानामश्रद्धामविश्वासं स्थापितवान् । सत्यवचने तु स प्रजापतिर्विश्वासं स्थापितवान् । एवमयमिन्द्रोऽ-प्यभिषुतमेव पिबति ॥

[5]अथ पञ्चमीमाह—प्रजानां पालकोऽयमिन्द्रः परिस्रुत आ-लवालस्य परितः श्रयणं कुर्वतो द्रव्यस्य रसं दृष्ट्वा तत्र शु-क्रेण शुद्धेन द्रव्यान्तरेण सहितं शुद्धद्रव्यान्तरं पयः सोमं च

इन्द्रस्येन्द्रियम् । इदं पयोऽमृतं मधु ॥८॥

अद्भ्यः क्षीरं व्यपिबज्जन्मनृतेन सत्यमिन्द्रियꣳ श्रद्धाꣳ सत्ये प्रजापतिरष्टौ च ॥२॥

सोमो राजा विपानꣳ सोमममद्भ्योऽन्नाद्रेतो मूत्रं वेदेन सतासती सोमेन सुतासुतौ दृष्ट्वा रूपे दृष्ट्वा परिस्रुतो रसं विपानं दश ॥

[1]सुरावन्तं बर्हिषदꣳ सुवीरम् । यज्ञꣳ हिन्वन्ति महिषा नमोभिः । दधानास्सोमं दिवि देवता-

विशेषेणापिबत् । ऋतेनेत्यादिकं प्रथममन्त्रवद्व्याख्येयम् । तैरेतैः पञ्चभिर्मन्त्रैरुपस्थानं कुर्यात् ॥

इति तैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
षष्ठप्रपाठके द्वितीयोऽनुवाकः.

---

[1]द्वितीये ग्रहोपस्थानमुक्तम् । तृतीये ग्रहहोमोऽभिधीयते । कल्पः— "सुरावन्तमिति पयोग्रहाञ्जुहोति" इति ॥ महिषाः महनीयाः पूजनीया यजमाना नमोभिः नमस्कारोपेतैर्मन्त्रैः यज्ञमिमं सौत्रामण्याख्यं हिन्वन्ति प्रीणयन्ति सम्यगनुतिष्ठन्तीत्यर्थः । कीदृशं यज्ञं? सुरावन्तं सुराद्रव्योपेतं बर्हिषदं बर्हिषि दर्भे आसाद्यमानेन हविषा युक्तं सुवीरं शोभनापत्यप्रदम् । दिवि द्युलोके

सुं । मदेमेन्द्रं यजमानास्स्वर्काः । [2]यस्ते रसस्सं भृत ओषधीषु । सोमस्य शुष्मस्सुरया सुतस्य । तेन जिन्व यजमानं मदेन । सरस्वतीमश्विनाविन्द्रमग्निम् । [3]यमश्विना नमुचेरासुरादधि । सरस्वत्यसनोदिन्द्रियाय ॥ १ ॥ इमं तꣳ शुक्रं मधुमन्तमिन्दुम् । सोमꣳ राजानमिह भक्षयामि । [4]यदत्र रिप्तꣳ रसिनस्सुतस्य । यदिन्द्रो अपिबच्छचीभिः ।

देवतासु सोमं दधानाः संपादयन्तो वयं यजमानाः स्वर्काः शोभनेनार्चनेन युक्ता इन्द्रं मदेम हृष्टं करवाम ॥

[2]कल्पः—"यस्ते रसस्संभृत इति सुराग्रहान्" इति । जुहोतीत्यनुवर्तते । हे सुरे! योऽयं ते रस ओषधीषु व्रीह्यादिषु संभृतः संपादितः सुतस्याभिषुतस्य सोमस्य शुष्मः बलप्रदो रसः सुरया संयोजितः तेन मदेन तदीयेन हर्षेण यजमानं जिन्व प्रीणय । तथा सरस्वत्यादिदेवांश्च प्रीणय ॥

[3]कल्पः—"यमश्विना नमुचेत्याश्विनमध्वर्युर्भक्षयति" इति । अश्विनौ देवौ यं रसं नमुचिनाम्नोऽसुरात् अध्याहृतवन्तौ । सरस्वती च इन्द्रियार्थं असनोत् प्रादात् । तमिमं सोमं राजानं इहकर्मणि भक्षयामि । कीदृशं सोमं? शुक्रं शुद्धं मधुमन्तं माधुर्योपेतं इन्दुं आह्लादकं परमैश्वर्यप्रदं वा ॥

[4]कल्पः—"यदत्र रिप्तमिति सारस्वतं प्रतिप्रस्थाताऽऽग्नीध्रश्च" इति । भक्षयत इति शेषः । रसिनो रसयुक्तस्य सुतस्याभिषुतस्य

अहं तदस्य मनसा शिवेन । सोमꣳ राजानमिह भक्षयामि । [5]पितृभ्यस्स्वधाविभ्यस्स्वधा नमः । पितामहेभ्यस्स्वधाविभ्यस्स्वधा नमः । प्रपितामहेभ्यस्स्वधाविभ्यस्स्वधा नमः । अक्षन्पितरः ॥ १० अमीमदन्त पितरः । अतीतृपन्त पितरः । अमीमृजन्त पितरः । पितरश्शुन्धध्वम् । [6]पुनन्तु मा पितरस्सोम्यासः । पुनन्तु मा पितामहाः । पुन-

---

सोमात्मकस्य पयसो यदवशिष्टं पात्रे रिप्तं लिप्तं यच्चेन्द्रः स्वकीयाभिः शचीभिः शक्तिभिः सहापिबत् । अस्य सोमात्मकस्य पयसः तदवशिष्टं रसरूपं सोमराजत्वेन भाव्यमानं इह कर्मणि शिवेन मनसाऽहं भक्षयामि ॥

[5]कल्पः—"दक्षिणेनाहवनीयं पयश्शेषं पितृपितामहप्रपितामहेभ्यो ददाति पितृभ्य इति" इति । स्वधाकारस्तृप्तिहेतुरेषामस्तीति ते स्वधाविनः तादृशेभ्यः पितृभ्यः स्वधा पयश्शेषोऽयं समर्पितः तथा तेभ्यो नमस्कारोऽस्तु एवं पितामहप्रपितामहयोर्योजनीयम् । एते पितरोऽक्षन् भुक्तवन्तः । भुक्त्वा चास्मानमीमदन्त संतुष्टान् कुर्वन्तः । अतीतृपन्त तृप्तियुक्तान् कुर्वन्तः । अमीमृजन्त शोधितवन्तः । हे पितरः! यूयमपि शुन्धध्वं शुद्धा भवत ॥

[6]कल्पः—"पुनन्तु मा पितरस्सोम्यास इत्युपतिष्ठते" इति । तत्रोपस्थानसाधनभूतासु दशस्वृक्षु प्रथमामृचमाह—सोम्यासः अ-

न्तु प्रपितामहाः । पवित्रैण शतायुषा । [7]पुनन्तु मा पितामहाः । पुनन्तु प्रपितामहाः ॥ ११ ॥ पवित्रैण शतायुषा । विश्वमायुर्व्यश्नवै । [8—15]अग्न आयूꣳषि पवस ऽग्ने पर्वस्व । पर्वमानस्सुवर्जनः पुनन्तु मा देवजनाः । जातवेदः पवित्रवद्यत्ते पवित्रमर्चिषि । उभाभ्यां देव सवितर्वैश्वदेवी पुनती । [16]ये समानास्समनसः । पितरो यमराज्ये । तेषां लोकस्स्वधा नमः । यज्ञो देवेषु कल्पताम् ॥ १२॥

नुग्राहकत्वेन सौम्याः पितरः। पवित्रेण शुद्धेन शतसंख्याकेनायुषा मां पुनन्तु शोधयन्तु । एवं पितामहप्रपितामहाश्च ॥

[7]अथ द्वितीयामाह—पूर्वमन्त्रोक्तानामपि पुनःकथनमादरार्थम् । एतेषां प्रसादेनाहं सर्वमप्यायुः प्राप्नवानि ॥

[8—15]अथ तृतीयादीनामष्टानामृचां प्रतीकानि दर्शयति—अत्राद्यमृग्द्वयं तु "त्वमग्ने रुद्रः"* इत्यनुवाके व्याख्यातम् । अवशिष्टं षट्कं "पवमानस्सुवर्जनः"† इत्यनुवाके व्याख्यातम् ॥

[16]कल्पः—"अथाहुतीर्जुहुतो ये समाना इत्यध्वर्युर्ये सजाता इति प्रतिप्रस्थाता" इति । यमराज्ये यमलोके वर्तमानाः पितरो मया समानस्वभावाः संगतमनस्काश्च ये सन्ति तेषां पितृणां लोको ममास्त्विति शेषः । तेभ्यः पितृभ्यः स्वधा हविश्शेषो

* तै. सं. १-३-१४. † ब्रा. १-४-८.

[17]ये संजातास्समनसः । जीवा जीवेषु मामकाः। तेषाꣳ श्रीर्मयि कल्पताम् । अस्मिन्लोके शतꣳ समाः । [18]द्वे स्रुती अशृणवं पितृणाम् । अहं देवानामुत मर्त्यानाम् । याभ्यामिदं विश्वमेजत्स-

दत्तो नमस्कारश्च कृतः । अयं मदीयो यज्ञो देवेषु कल्पतां तृप्तिप्रदो भवतु ॥

[17]अथ द्वितीयामाह—जीवेषु वर्तमानेषु मध्ये मामका मदीया ये जीवाः सजाता भ्रात्रादिरूपेण मया सहोत्पन्नाः संगतमनस्का मयि प्रीतियुक्ताः तेषां सर्वेषां श्रीः धनादिसंपत् मयि कल्पतां तिष्ठतु मदधीना भवत्वित्यर्थ । अस्मिन् लोके मम समाः शतसंख्याकाः सन्तु ॥

[18]अथ "द्वे स्रुती" इत्यादिमन्त्रो वल्मीकवपायां सुरावपनार्थः । स च पूर्वकाण्डे "युवं सुरामम्"* इत्यनुवाके राजसूयान्तर्गतसौत्रामण्यर्थमाम्नातः । इह तु कौकिल्यर्थमाम्नायते । मरणशीलानां श्रौतमार्गवर्तिनां कर्मानुष्ठायिनामुपासकानां च दक्षिणमार्ग उत्तरमार्गश्चेति द्वे स्रुती द्वौ मार्गौ वेदमुखादहं श्रुतवानस्मि । तत्रैकः पितृणां संबन्धी तल्लोकप्राप्तिहेतुत्वात् । अन्यश्च देवानां संबन्धी ब्रह्मलोकप्राप्तिहेतुत्वात् । एतौ चोभौ मार्गौ छान्दोग्यबृहदारण्यकयोः स्पष्टमाम्नातौ—"ते धूममभिसंभवन्ति । धूमाद्रात्रिम्" इति दक्षिणमार्गः । "तेऽर्चिषमभिसंभवन्ति, अर्चिषोऽहः" इत्यादिरुत्तर-

*ब्रा. १-४-२.

मैति । यर्दन्तरा पितरं मातरं च । [19]इदꣳ हविः प्रजननं मे अस्तु । दर्शवीरꣳ सर्वगणꣳ स्वस्तये । आत्मसनिं प्रजासनिं । पशुसन्यंभयसनिं लोकसनिं । अग्निः प्रजां बहुलां मे करोतु । अन्नं प-

मार्गः । एजत् कम्पमानं परलोकगतियुक्तमिदं विश्वं प्राणिजातं याभ्यां मार्गाभ्यां तत्तल्लोकं सम्यक्प्राप्नोति । यन्मार्गद्वयं पितरं मातरं चान्तरा द्यावापृथिव्योर्मध्ये वर्तते तादृशमार्गद्वयमहमशृणवमित्यन्वयः ॥

[19]कल्पः—"इदं हविरित्यैन्द्रं ब्रह्मा यजमानश्च" इति । हविश्शेषं भक्षयत इति शेषः । इदं भक्ष्यमाणं हविर्मे स्वस्तयेऽस्तु मम क्षेमाय भवतु । कीदृशं हविः? प्रजननं प्रजोत्पादकं दशवीरं दशसंख्याकैः कर्मशूरैः पुत्रैर्युक्तं तथा बन्धुभृत्यादिभिर्बहुभिर्गणैर्युक्तं सर्वगणम् । जीवात्मानमस्मिन् शरीरे चिरकालावस्थायिनं सनोति ददातीत्यात्मसनि प्रजासनि पशुसनि प्रजां पशून्ददातीति प्रजासनि पशुसनि, अभयसनि भीतिराहित्यं परलोकान्ददातीति । अयमग्निर्मदीयां प्रजां बहुलां करोतु । देवाः! अन्नादीनस्मासु संपादयत । तथा धनपुष्ट्यन्नरसानस्मासु धारयत । इदं हविरस्मदुदरे स्वाहा हुतमस्तु ॥

अत्र विनियोगसंग्रहः—

स्रुचा यस्ते क्रमात्कार्या द्वाभ्यां क्षीरस्रुवाहुतिः ।
यमश्विनेत्याश्विनाख्यमध्वर्युर्भक्षयेत्तथा ॥ १ ॥

यो रेतो अस्मासु धत्त। रायस्पोषमिषमूर्जमस्मासु दीर्घरथ्स्वाहा ॥ १३ ॥

इन्द्रियाय पितरश्शतायुषा पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः कल्पताꣳ स्वस्तये पशुं च ॥ ३ ॥

[1]सीसेन तन्त्रं मनसा मनीषिणः। ऊर्णासूत्रेण कवयो वयन्ति। अश्विना यज्ञꣳ सविता सर-

सारस्वतं प्रतिप्रस्थाताऽऽग्नीध्रश्च यास्यतः।
पितृभ्य इत्यादिकेन पयश्शेषं ददाति हि ॥ २ ॥
देश आहवनीयस्य दक्षिणेऽथोपतिष्ठते।
पुनन्तु मेत्यादिकानां मन्त्राणां दशकेन हि ॥ ३ ॥
अध्वर्योश्च प्रतिप्रस्थातुर्ये स द्वयमाहुती।
सुराशेषं तु वल्मीके नयाति द्वे सुती इति ॥ ४ ॥
इदं भक्षयतो ग्रहस्वामिनो ग्रहमैन्द्रकम्।
अनुवाके तृतीयेऽस्मिन्मन्त्रा एकोनविंशतिः ॥ ५ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः.

---

[1]तृतीये ग्रहहोमोऽभिहितः। चतुर्थ उपहोमा उच्यन्ते। कल्पः—"मनोताकाले पृथक्पात्रेषु पशूनां यूषाणि निदधाति पुरस्तात्स्विष्टकृतः गृह्यवाफैरुपहोमान् जुहोत्यथावद्यावेकैकस्य कुक्षि-

स्वती । इन्द्रस्य रूपं वरुणो भिषज्यन् । [2]तदस्य रूपममृतꣳ शचीभिः । तिस्रो दधुर्देवताः सꣳरराणाः

कशफाः । आश्विनस्य यूषेण कुष्ठिकान् शफं च पूरयित्वा सीसेन तन्त्रमित्यष्टर्चेन प्रतिमन्त्रं द्वाभ्यां द्वाभ्यां कुष्ठिकशफाभ्यां जुहोतीत्युत्तमायाः शृङ्गे अनुषजति हुत्वा स्वेष्वभिषेचनपात्रेषु संपातानवनीयाहवनीये कुष्ठिकशफान्प्रविध्यन्त्येवमुत्तरेणाष्टर्चेन सारस्वतस्य सर्वेणानुवाकेनैन्द्रस्य" इति । अत्र कुष्ठिकशब्देन शफसमीपस्थः क्षुद्ररूपशफोऽभिधीयते । एकैकशफमेकैकमुपशफं च यूषेण पक्वमांसरसेन पूरयित्वैकैकामाहुतिं जुहुयात् । एतैश्च मन्त्रैर्यजमानेन प्रायणीयो यज्ञावयवो निष्पाद्यो भविष्यन्निन्द्रदेहो निरूप्यते । तत्र प्रथमामृचमाह—मनीषिणो बुद्धिमन्त ऊहापोहकुशलाः कवयो विद्वांसः शास्त्राभिज्ञा ऋत्विजः स्वमनसा प्रयोगं सर्वं विचार्य सीसद्रव्यक्रीतेन व्रीह्यङ्कुरादिना तन्त्रं सौत्रामणियज्ञविस्तारं ऊर्णासूत्रेणेव वयन्ति निष्पादयन्ति । यथा लोके केचिदविपालका ऊर्णासूत्रेण कम्बलं वयन्ति । एवमेतेऽप्यृत्विजः सीसक्रीतद्रव्यादिना यज्ञाख्यं दीर्घतन्तुरूपं वयन्ति । अश्विनासरस्वत्याद्या देवता इन्द्रस्य स्वरूपभूतमिमं यज्ञमोषधिसदृशैः पश्वङ्गैः भिषज्यन् चिकित्सन्ते ॥

[2]द्वितीयामाह—द्वावश्विनौ एका सरस्वती इत्येतास्तिस्रो देवताः शचीभिः स्वकीयशक्तिभिः अस्येन्द्रस्य तत् यज्ञात्मकं रूपं अमृतं विनाशरहितं यथा भवति तथा दधुः संपादयामासुः । कीदृश्यो देवताः? संरराणाः संभूय परस्परं रममाणाः । तोक्म-

णाः । लोमानि शष्पैर्बहुधा न तोक्मभिः । त्वग॑-
स्य माꣳसमभवन्न लाजाः । [3]तदश्विना भिषजा
रुद्रवर्तनी । सरस्वती वयति पेशो अन्तरः ॥ १४ ॥
अस्थि मज्जानं मासरैः । कारोतरेण दधतो गवां

शब्देनाङ्कुरिता व्रीहय उच्यन्ते । तदङ्कुररूपं बालतृणं शष्पश-
ब्देनोच्यते । नकार उपमार्थः । तोक्मभिः शष्पैर्बहुधा लोमानीव
निष्पादितवन्तः । अङ्कुरप्ररोहाधारभूता बीजविशेषा लाजशब्देनो-
च्यन्ते । ते च लाजा अस्य यज्ञरूपस्येन्द्रस्य त्वगिव मांसमि-
वाभवन् ॥

[3]तृतीयामाह—रुद्रस्येव वर्तनिर्मार्गो ययोरश्विनोस्तौ रुद्रवर्तनी।
यथा रुद्रः क्रूरो देवो हिंसितुं समर्थ एवमेतावश्विनौ व्याधिं
नाशयितुं समर्थावित्यर्थः । तादृशावश्विनौ तत्र यज्ञे भिषजौ
चिकित्सकौ । या तु सरस्वती अन्तरः शरीरमध्ये पेशो वयति
रूपं निष्पादयति । मासरशब्देन यवनिष्पन्नाः सूक्ष्मसक्तवो दधि-
मिश्रा दर्भैः परिवेष्टिता उच्यन्ते । कारोतरशब्देनावटस्थानीयस्त-
त्सदृशो वेणुदलनिर्मितश्चर्मणा सर्वतः परिवेष्टितः सुराश्रपणार्थं
भाण्डाधारः पदार्थविशेष उच्यते । गवां त्वच्यवस्थितेन कारोत-
रेण मासरैश्च मज्जानमस्थि च दधतः दधाति सरस्वती संपा-
दयतीत्यर्थः ॥

त्व॒चि । [4]सर॑स्वती॒ मन॑सा पेश॒लं वसु॑। नास॑त्याभ्यां वयति दर्श॒तं वपुः॑ । रसं॑ परि॒स्रुता॒ न रोहि॑तम् । न॒ग्नहु॒र्धीर॑स्त॒सरं॒ न वेम॑ । [5]पय॑सा शु॒क्रम॒मृतं॑ ज॒नित्र॑म् । सुर॑या॒ मूत्रा॑ज्जनय॒न्ति॒ रेतः॑ । अ-

[4]चतुर्थीमाह—इयं सरस्वती नासत्याभ्यां अश्विदेवताभ्यां सहिता वपुर्वयति शरीरं मनसा निष्पादयति । कीदृशं वपुः? पेशलं वसु देवतात्मनो निवासयोग्यं दर्शतं दर्शनीयं दृष्टिप्रियमित्यर्थः । परिस्रुता न परिस्रुतेव धारया स्रवत् सुराद्रव्यं परिस्रुदित्युच्यते । तया परिस्रुतेव शरीरस्थं रसं जलं रोहितं रक्तं वयति संपादयति स्रवन् स एव रक्तस्थानीय इत्यर्थः । नग्नहुशब्देन यवानां स्थूलचूर्णानि संस्राविणाभिषिक्तानि कथ्यन्ते । सोऽयं नग्नहुरवयवान्तरस्थानीय इत्यर्थः । धीर इत्यादिदृष्टान्तः लोके धीरो बुद्धिमान् कुविन्दः तसरं न नववस्त्रमिव । वेमशब्देन वस्त्रनिर्माणकाले प्रहारदण्डोऽभिधीयते । यथा कुविन्दः प्रहारदण्डेन वस्त्रं निष्पादयति तद्वदित्यर्थः ॥

[5]पञ्चमीमाह—यदेतदत्र पयोद्रव्यं यच्च सुराद्रव्यं तेन द्रव्यद्वयेन मूत्रात् मूत्रद्वारात् सकाशात् निर्गमनयोग्यं रेतो देवता जनयन्ति । कीदृशं रेतः? शुक्रं दीप्तिमच्छ्वेतवर्णं अमृतं विनाशरहितं अत एव जनित्रं अपत्योत्पादकम् । या देवता रेतो जनयन्ति ताः कीदृश्यः? अमतिं दुर्मतिं चापबाधमानाः । अमतिः कर्तव्यविषयज्ञानाभावः, दुर्मतिर्विपरीतज्ञानम् । किंच—ता दे-

पार्मतिं दुर्मतिं बाधमानाः । ऊवध्यं वातꣳ सबुवं तदारात् ॥ १५॥ [6]इन्द्रस्सुत्रामा हृदयेन सत्यम् । पुरोडाशेन सविता जजान । यकृत्क्लोमानं वरुणो भिषज्यन् । मतस्ने वायव्यैर्न मिनाति पित्तम् । [7]आन्त्राणि स्थाली मधु पिन्वमाना । गुदा पात्रा-

वताः तत्तस्मिन् संपादयितव्ये शरीरे आरात्समीपे उदरमध्ये ऊवध्यं जनयन्ति । अर्धं जीर्णमन्नं अपरिपक्कं पुरीषं ऊवध्यश-ब्दवाच्यम् । पयस्सुराभ्यामेव तज्जनयन्ति । तथा सबुवं वातं ज नयन्ति । वातः प्राणवायुः । बुवशब्दः श्वासकालीनं शब्दमनुक-रोति । तेन शब्देन सहितमित्यर्थः ॥

[6]षष्ठीमाह—शोभनं यथा भवति तथा त्रायत इति सुत्रामा। तादृश इन्द्रः पशोर्हृदयेन सत्यं यथार्थज्ञानशक्तिं जजान । स-विता च पुरोडाशेन यकृत् जजान । वरुणश्च पुरोडाशेन क्लो. मानं भिषज्यन् वर्तते । यकृत्क्लोमशब्दाभ्यां हृदयस्य पार्श्वद्वयव-र्तिनो मांसखण्डावुच्येते । यकृत्क्लोम्नोः समीपवर्तिनी द्वे मांसे मतस्ने । वायव्यैर्न वायव्यैरिव वायव्यानि ग्रहपात्राणि तैर्मतस्ने इव पित्तमिव मिनाति अवयवजातं संपादयति ॥

[7]सप्तमीमाह—मधु मधुरं क्षीरादिरसं पिन्वमाना प्रीणयन्ती धारयन्तीत्यर्थः । तादृशी स्थाली या वर्तते सेयं आन्त्राणि आन्त्रस्थानीयानि । अन्यानि पिष्टादिद्रव्यस्थापनार्थानि पात्राणि तानि गुदा गुदस्थानीयानि । स्थाल्याः पात्राणां च दृष्टान्तः—

णि सुदुघा न धेनुः । श्येनस्य पत्रं न प्लीहा शचीभिः । आसन्दी नाभिरुदरं न माता । [8]कुम्भो वनिष्ठुर्जनिता शचीभिः । यस्मिन्नग्रे योन्यां गर्भो अन्तः ॥ १६ ॥ प्लाशिर्व्यक्तश्शतधार उत्सः । दुहे न कुम्भी स्वधां पितृभ्यः । [9]मुखं सदस्य शि-

सुदुघा न धेनुः शोभनं क्षीरं दोग्धीति सुदुघा तादृशी धेनुरिव स्थाल्यादिकं वर्तते । प्लीहशब्दो मांसविशेषवाची । स च मांसविशेषः श्येनाख्यस्य पक्षिणः पत्रं न पक्ष इव । तादृशः स मांसविशेषः शचीभिः स्वव्यवहारशक्तिभिस्सह पात्रैस्संपादित इति शेषः । येयमभिषेकार्थाऽऽसन्दी सेयं नाभिस्थानीया । या तु माता सा भूम्यात्मिका वेदिः सेयमुदरं न, उदरमिव ॥

[8]अष्टमीमाह—उलूकपाक्षिसदृशो मांसविशेषो वनिष्ठुः । योऽयमत्र द्रवद्रव्यस्थापनार्थः कुम्भः स वनिष्ठुस्थानीयः । स च शचीभिः स्वशक्तिभिर्जनिता उत्पादयिता । यस्मिन्वनिष्ठौ अग्रे पुरोभागे योन्यामन्तः यो गर्भो वर्तते । अत्र सुरास्रवनयनार्थं शतच्छिद्रयुक्तः कुम्भो योऽस्ति सोऽयं व्यक्तः स्पष्टः । बहुच्छिद्रोपेतत्वाच्छतधारः । सुरास्रवणयुक्तत्वादुत्सः । तादृशः कुम्भः प्लाशीः नासिकाछिद्रस्थानीयः । येयं द्रवद्रव्यधारणार्था कुम्भी तां कुम्भीं पितृभ्यः पित्रर्थं स्वधा दुहे न अमृतं दोग्धीव । अध्वर्युरिति शेषः ॥

[9]नवमीमाह—सीदत्यत्रेति सदः देवयजनस्थानं तेन सदेन अस्य निरूप्यमाणशरीरस्य सन्मुखं समीचीनं मुखं शिर इव शिरश्च

र इध्सदेन । जिह्वा पवित्रमश्विना सꣳ सरस्वती। चप्पं न पायुर्भिषगस्य वालः । वस्तिर्न शेपो हरसा तरस्वी । [10]अश्विभ्यां चक्षुरमृतं ग्रहाभ्याम् । छागेन तेजो हविषा शृतेन । पक्ष्माणि गोधूमैः कुवलैरुतानि । पेशो न शुक्लमसितं वसाते ॥ १७॥

संपन्नमिति शेषः । पवित्रं द्रव्यशोधनार्थं यद्वस्त्रं तज्जिह्वा । एतत्सर्वमश्विनौ सरस्वती च तिस्रः संपादितवत्यः । चप्पं पिष्टपात्रं तत् पायुर्न अपानस्थानमिव वर्तते । योऽयं वालः द्रव्यशोधनार्थः सोऽयमस्य शरीरस्य भिषक्, चिकित्सकस्थानीयः । तेन हि व्याधिस्थानीयो द्रव्यदोषोऽपनीयते । योऽयं पशोः शेपः सोऽयं वस्तिर्न मूत्रस्थानमिव । हरसा वह्निज्वालारूपेण तेजसा तरस्वी निरूप्यमाणो देहो वेगवानिव लक्ष्यते ॥

[10]दशममाह—अश्विभ्यां ग्रहाभ्यां अश्विनोस्संबन्धिनौ यौ ग्रहावयवौ ताभ्यां अमृतं विनाशरहितं चक्षुः संपादितम् । शृतेन पक्वेन हविस्स्वरूपेण छागेन चक्षुर्गतं तेजः संपादितम् । सक्तुनिष्पादनार्थं ये गोधूमाः ये च कुवलाः बदरफलविशेषाः तैरुभयैः परस्परं उतानि संबद्धानि पक्ष्माणि रोमाणि संपाद्यन्ते । पेशो न रूपमिव यत्पशौ दृश्यते तच्चक्षुर्गतशुक्लं असितं च शुक्लमण्डलं कृष्णमण्डलं च तदुभयं वसाते अश्विनौ देवौ पक्ष्मभिराच्छादयतः ॥

[11]अविर्न मेषो नसि वीर्याय । प्राणस्य पन्था अमृतो ग्रहाभ्याम् । सरस्वत्युपवाकैर्व्यानम् । नस्यानि बर्हिर्बदरैर्जजान । [12]इन्द्रस्य रूपमृषभो बलाय । कर्णाभ्याꣳ श्रोत्रममृतं ग्रहाभ्याम् । यवा न बर्हिर्भ्रुवि* केसराणि । कर्कन्धु जज्ञे मधु

[11]एकादशीमाह—अविर्न अविरिव वर्तमानो यः सारस्वतो मेषः सोऽयं नसि नासिकायां वीर्याय श्वासप्रवृत्तिसामर्थ्याय प्रवर्तते। इयं च नासिका प्राणाख्यस्य वायोः अमृतः कदाचिदपि विनाशरहितः पन्थाः गमनागमनहेतुः ग्रहाभ्यां पयस्सुराभ्यां निष्पादितः । तथेयं सरस्वती उपवाकैः हरितयवसक्तुभिः व्यानवायुं जनयति । नस्यानि नासिकायां भवानि बर्हिः बर्हींषि लोमानि बदरैः सक्तुनिष्पादनाय संपादितैः बदरफलैः जजान संपादयामास ॥

[12]द्वादशीमाह—योऽयमृषभ इन्द्रस्य रूपं इन्द्रदेवताकत्वेन तत्स्वरूपसदृशः सोऽयमस्य शरीरस्य बलार्थं संपाद्यते । पशुसंबन्धिभ्यां कर्णाभ्यां पयस्सुरारूपग्रहाभ्यां चामृतं श्रोत्रं बाधिर्यरहितं श्रोत्रेन्द्रियं संपाद्यते । भ्रुवि यवा न भूमावुत्पन्ना यवा इव बर्हिः वेद्यामासादितानि बर्हिंषि केसराणि प्रवृद्धतमानि लोमानि । सरघाः मधुमक्षिकाः ताभिः संपादितं सारघं मधु तद्रूपं कर्कन्धु जज्ञे । कर्कन्धुशब्देनातिस्थूलबदरफलपिष्टमुच्यते । तच्च मधुसदृशं मुखाज्जज्ञे यज्ञप्रारम्भे समुत्पन्नमित्यर्थः ॥

* बर्हिर्भुवि.

सारघं मुखात् । [13]आत्मन्नुपस्थे न वृकस्य लोम । मुखे श्मश्रूणि न व्याघ्रलोमम् ॥ १८ ॥ केशा न शीर्षन् यशसे श्रियै शिखा । सिꣳहस्य लोम त्विषिरिन्द्रियाणि । [14]अङ्गान्यात्मन्भिषजा तदश्विना । आत्मानमङ्गैस्समधात्सरस्वती । इन्द्रस्य

---

[13]त्रयोदशीमाह—"प्रकृतिभूतायां सौत्रामण्यां त्रयाणां लोमानि" इति वाक्येन वृकव्याघ्रसिंहानां लोमानि विहितानि । तान्यत्र चोदकप्राप्तानि ग्रहत्रये प्रक्षिप्यन्ते । तत्र यद्वृकस्य लोम तत् आत्मन् संपाद्यमानशरीरे उपस्थे न गुह्यप्रदेश इव वर्तते । यत्तु व्याघ्रलोम तत् मुखे वर्तमानानि श्मश्रूणीव । यत्तु सिंहस्य लोम तच्छिरसि केशा इव । केशनिष्पन्ना च शिखा यशसे श्रियै च संपद्यते । अनुष्ठानकाले सशिखत्वेन यशः । लोके व्यवहारे रमणीयत्वेन श्रीः । या तु लोमगता त्विषिः दीप्तिः सा तु संपाद्यस्य शरीरस्येन्द्रियस्थानधिया ॥

[14]चतुर्दशीमाह—तत् तदानीं यागावसरे भिषजा चिकित्सकौ अश्विनौ आत्मन् संपाद्ये शरीरे अङ्गानि हस्तपादादीनि संपादितवन्तौ । सरस्वती च तैरङ्गैः आत्मानं संपूर्णदेहं समधात् सम्यगकार्षीत् । कीदृशी सरस्वती? इन्द्रस्य वर्तमानस्य यद्रूपं तद्दधाना संपादयन्ती । तथा शतमानं शतसंवत्सरप्रमाणं आयुः संपादयन्ती । तथा चन्द्रेण आह्लादकरूपेण अमृतं ज्योतिः अनश्वरं तेजः संपादयन्ती ॥

रूपꣳ शतमानमायुः । चन्द्रेण ज्योतिरमृतं दधा-
ना । [15]सरस्वती योन्यां गर्भमन्तः । अश्विभ्यां
पत्नी सुकृतं बिभर्ति । अपाꣳ रसेन वरुणो न सा-
म्ना । इन्द्रꣳ श्रियै जनयन्नप्सु राजा । [16]तेजः प-
शूनाꣳ हविरिन्द्रियावत् । परिस्रुता पयसा सारघं
मधु । अश्विभ्यां दुग्धं भिषजा सरस्वत्या सुता-

[15]पञ्चदशीमाह—अश्विभ्यां देवाभ्यां सुकृतं सुष्ठु संपादितं उत्पादनीयशरीररूपं गर्भं पत्नी पालयित्री सरस्वती योन्यां गर्भाशये अन्तर्मध्ये बिभर्ति पोषयति । अपां रसेन सारभूतेन साम्ना परस्परं साम्येन पयस्सुराग्रहेणाप्सु वरुणो न राजा यथा जलमध्ये वरुणो राजा तस्यामब्देवतायां पुत्रं जनयति तथेमं यजमानं इन्द्रं इन्द्रसमानशरीरं श्रियै संपदनुभवार्थं अयमनुष्ठीयमानो यागो जनयन्वर्तते ॥

[16]षोडशीमाह—पशूनां तेजः सारभूतं हविः भिषजा चिकित्सकाभ्यामश्विभ्यां दुग्धं संपादितमित्यर्थः । केन द्रव्येण? परिस्रुता पयसा परितः स्रवतीति परिस्रुत् सुरा तया क्षीरेण च संपादितं हविः । कीदृशं हविः? इन्द्रियावत् इन्द्रियाभिवृद्धिकरं सारघं मधु सरघाभिः संपादितेन मधुना सदृशं यथा अश्विभ्यां हविः संपादितं तथा सरस्वत्या तत्फलभूतो यजमानस्य इन्द्रसदृशः संपादितः । केन साधनेन? सुतासुताभ्यां अभिषवसदृशव्यापारेण संपादिता सुरा सुता । तादृक्प्रयासरहितक्षीरमसुतं

सुताभ्याम् । अमृतस्सोम इन्दुः ॥ ११ ॥
अन्तर आरादन्तवैंसाते व्याघ्रलोमं राजा चत्वारि च ॥ ४ ॥

[1]मित्रोऽसि वरुणोऽसि । समहं विश्वैर्देवैः । [2]क्षत्रस्य नाभिरसि । क्षत्रस्य योनिरसि । [3]स्योना

ताभ्यां देहः संपादितः । कीदृशो देहः? अमृतः देवलोके समुत्पन्नत्वान्मरणरहितः सोमः सौम्यः दृष्टिप्रियः इन्दुः चन्द्रवदाह्लादकरः परमैश्वर्ययुक्तो वा । एवमेतैः षोडशभिर्मन्त्रैर्यजमानस्य भाविदेहसूचनपरैरुपहोमः कर्तव्यः ॥

इति तैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
षष्ठप्रपाठके चतुर्थोऽनुवाकः.

---

[1]चतुर्थे उपहोमा अभिहिताः । पञ्चमेऽभिषेकोऽभिधीयते । कल्पः—"औदुम्बर्यासन्द्यरत्निमात्रशीर्षण्यानूच्या नाभिदघ्नपादा मौञ्जविवाना मित्रोऽसि वरुणोऽसीति तां यजमानायतने प्रतिष्ठाप्यत्वासादनोपवेशनाभिमन्त्रणानि राजसूयवत्" इति । हे आसन्दीविशेष! त्वमिष्टप्रापकत्वान्मित्रोऽसि । अनिष्टनिवारकत्वाद्वरुणोऽसि । अहमत्र त्वद्बलात्सर्वैर्देवैः संगतो भूयासम् ॥

[2]कल्पः—"क्षत्रस्य नाभिरसीति तस्यां कृत्त्यधीवासमास्तीर्य" इति । हे चर्मपट! त्वं क्षत्रस्य बलस्य नाभिर्मध्यस्थानमसि । तथा क्षत्रस्य बलस्य योनिः कारणमसि ॥

[3]कल्पः—"स्योना मा सीद सुषदा मा सीदेति तामासाद्य

माऽऽसीद । सुषदा माऽऽसीद । मा त्वा हिꣳसीत् । मा मा हिꣳसीत् । [4]निषसाद धृतव्रतो वरुणः । पस्त्यास्वा ॥ २० ॥ साम्राज्याय सुक्रतुः । [5]देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्याम् । अश्विनोर्भैषज्येन । तेजसे ब्रह्मवर्चसायाभिषिञ्चामि । [6]देवस्य त्वा सवितुः प्रसवे ।

यजमानो मा त्वा हिꣳसीन्मामा हिꣳसीदित्युपविशति" इति । हे आसन्दि! त्वं स्योना सुखकरी भूत्वा मां प्रत्यासीद । तथा सुषदा सुष्ठूपवेशनयोग्या सती मां प्रत्यासीद प्राप्नुहि । मदीयो देहः त्वां मा हिनस्तु । त्वदीयस्वरूपमपि मां मा हिनस्तु ॥

[4]कल्पः—"निषसाद धृतव्रत इत्यासीनमनुमन्त्रयते" इति । अयं यजमानो धृतव्रतः स्वीकृतनियमः वरुणः फलप्रतिबन्धकपापनिवारको भूत्वा साम्राज्यं कर्तुं सुक्रतुः शोभनसंकल्पस्सन् पस्त्यासु गृहसमानेषु आसन्दीस्थानेषु आनिषसाद सर्वत उपविष्टवान् ॥

[5]कल्पः—"तस्यां प्राङ्मुखमासीनं प्रत्यङ्मुखास्तिष्ठन्नश्विनोः संपातैरभिषिञ्चति देवस्य त्वा" इति । सवितुर्देवस्य प्रेरणे सति अश्विसंबन्धिभ्यां बाहुभ्यां पूषसंबन्धिभ्यां हस्ताभ्यां अश्विनोस्संबन्धिना संपातेनौषधरूपेण कान्तिब्रह्मवर्चससिद्ध्यर्थं यजमानं त्वामभिषिञ्चामि ॥

[6]कल्पः—"एवमुत्तरेण मन्त्रेण सारस्वतस्योत्तमेनैन्द्रस्य" इति। संपातेनाभिषिञ्चतीत्युभयत्रानुवर्तते । पूर्ववद्व्याख्येयम् ॥

अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्याम् । सरस्वत्यै भैषज्येन ॥ २१ ॥ वीर्यायान्नाद्यायाभिषिञ्चामि । [7]देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्याम् । इन्द्रस्येन्द्रियेण । श्रियै यशसे बलायाभिषिञ्चामि । [8]कोऽसि कतमोऽसि । कस्मै त्वा काय त्वा । [9-11]सुश्लोकाँ ४ सुमङ्गलाँ ४ सत्य-

---

[7]पूर्ववद्व्याख्येयम् ॥

[8]कल्पः—"कोऽसि कतमोऽसीति पाणिं संमृश्य" इति । हे यजमान! त्वं कोसि प्रजापतिरूपोऽसि । अत एव कतमोऽसि अविज्ञातविशेषोऽसि । न हि प्रजापतिरीदृश एवेति केनचिदपि निर्धारयितुं शक्यते । तस्य सर्वात्मकत्वेन विशेषस्य दुर्निरूपत्वात् । अतः कस्मै अविज्ञेयस्वरूपासिद्ध्यर्थं त्वां स्पृशामि । काय प्रजापतिरूपसिद्ध्यर्थं त्वां स्पृशामि । अनेन मन्त्रेण जजमानस्य पाणिद्वयमभिसंस्पृशेत् ॥

[9-11]कल्पः—"अत्र राजसूयवन्मङ्गल्यनाम्न आहूय" इति । राजसूये त्वेवमुक्तम्—"मङ्गल्यनाम्नो राजाऽऽह्वयति सुश्लोकाँ ४ इति संग्रहीतारं सुमङ्गलाँ ४ इति भागदुघं सत्यराजा ३ निति क्षत्तारम्" इति । शोभनः श्लोकः कीर्तिर्यस्यासौ सुश्लोकः । आह्वानार्था सानुनासिका प्लुतिः । सुष्ठु मङ्गलाचरणं यस्यासौ सुमङ्गलः । सत्येन स्वामिव्यापारेण राजत इति सत्यराजः । एतैः संग्रहीत्रादय आह्वातव्याः स्युः । रथस्योपर्यश्वमग्रहधारी संग्रहीता । यद्वा संपादितं राजधनं भाण्डा-

राजा३न् । [12]शिरो मे श्रीः ॥ २२ ॥ यशो मुखम् । त्विषिः केशाश्च श्मश्रूणि । राजा मे प्राणोऽमृतम् । सम्राट्चक्षुः । विराट्छ्रोत्रम् । जिह्वा मे भद्रम् । वाङ्महः । मनो मन्युः । स्वराड्भामः । मोदाः प्रमोदा अङ्गुलीरङ्गानि ॥ २३ ॥ चित्तं मे सहः । बाहू मे बलमिन्द्रियम् । हस्तौ मे कर्म वीर्यम् ।

गारे सम्यक्संगृह्णातीति संग्रहीता । ग्रामेषु राजभागकरं दुग्धे स्वीकरोतीति भागदुघः । क्षत्ता सारथिर्द्वारपालको वा ॥

[12] कल्पः—"शिरो मे श्रीरिति यथालिङ्गमङ्गानि संमृश्य" इति । मदीयं शिरः श्रियो हेतुत्वेन श्रीरूपमस्तु । मुखं यशोहेतुरस्तु । केशाः श्मश्रूणि च कान्तिहेतवः सन्तु । मदीयः प्राणः सर्वेन्द्रियाणां राजा सन् अमृतहेतुरस्तु । चक्षुरिन्द्रियं दूरसूक्ष्मादिदर्शनेन सम्यग्राजमानमस्तु । श्रोत्रेन्द्रियं दूरशब्दमन्दध्वनिश्रवणेन विविधं राजमानमस्तु । मदीया जिह्वा विविधरसज्ञानेन कल्याणभोगहेतुरस्तु । वागिन्द्रियं समाराधनेन पूजाहेतुरस्तु । मदीयं मनः धर्मकार्यमननहेतुरस्तु । मदीयो भामः क्रोधः भ्रातृव्यनिराकरणेन स्वयमेव राजाऽस्तु । अङ्गुलयो मोदा हर्षहेतवः सन्तु । अङ्गानि अनुक्तावयवाः प्रमोदाः प्रकृष्टहर्षहेतवः सन्तु । मदीयं चित्तं स्तुतिनिन्दादिसहनहेतुरस्तु । मनश्चित्तयोर्वृत्तिभेदेन भेदः । मदीयौ बाहू मणिबन्धस्य मूलभागौ प्रबलशक्तिहेतू स्ताम् । हस्तौ मणिबन्धस्याग्रभागौ वीर्यवद्व्यापारहेतू स्ताम् । मदीय आत्मा मध्यशरी-

आत्मा क्षत्रमुरो मम । पृष्ठीर्मे राष्ट्रमुदरमꣳसौ । ग्रीवाश्च श्रोण्यौ । ऊरू अरत्नी जानुनी । विशो मेऽङ्गानि सर्वतः । नाभिर्मे चित्तं विज्ञानम् । पायुर्मेऽपचितिर्भसत् ॥ २४ ॥ आनन्दनन्दावाण्डौ मे । भगस्सौभाग्यं पसः । [13]जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि । विशि राजा प्रतिष्ठितः । [14]प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे । प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन् । प्रति प्राणेषु प्रति

रमुरश्च क्षत्रं बलहेतुरस्तु । पृष्ठ्यादयो जान्वन्ता अवयवा राष्ट्रहेतवः सन्तु । पृष्टयः पायोरुपरिस्थान्यस्थीनि । उदरादयः प्रसिद्धाः । ग्रीवाः गलावयवाः । अरत्नी प्रकोष्ठौ । विशो मनुष्याः । ममाङ्गानीव सर्वतो विधेयाः सन्तु । मदीयो नाभिः चित्तं चैतन्यहेतुरस्तु । पायुः विज्ञानं विसर्गज्ञानकुशलोऽस्तु । भसन्मे ममोपस्थेन्द्रियं अपचितिः नियतत्वेन बहुमानहेतुरस्तु । मदीयावाण्डौ वृषणौ आनन्दनन्दयोर्हेतू स्ताम् । पुंसस्सुखमानन्दः । स्त्रियास्सुखं नन्दः । पसः प्रजननं भगसौभाग्यहेतुरस्तु । भग ऐश्वर्यम् । सौभाग्यं देहशोभा ॥

[13]कल्पः—"जङ्घाभ्यां पद्भ्यामिति प्रत्यवरुह्य" इति । जानुभ्यामधोभागौ जङ्घे ताभ्यां पादाभ्यां च धर्मः देहस्य धारयिताऽस्मि । विशि प्रजायां प्रतिष्ठितः स्थैर्येणावस्थितः राजाऽस्मि ॥

[14]कल्पः—"प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्र इति जपित्वा" इति । क्षत्रादिषु यज्ञान्तेषु प्रतितिष्ठामि स्थैर्येणावस्थितोऽस्मि । क्षत्रं बलं

तिष्ठामि पुष्टे । प्रति द्यावापृथिव्योः । प्रतितिष्ठामि यज्ञे ॥ २५ ॥ [15]त्रया देवा एकादश । त्रयस्त्रिꣳ्शास्सुराधसः । बृहस्पतिपुरोहिताः । देवस्य सवितुस्सवे । देवा देवैरवन्तु मा । प्रथमा द्वितीयैः । द्वितीयास्तृतीयैः । तृतीयास्सत्येन । सत्यं यज्ञेन । यज्ञो यजुर्भिः ॥ २६ ॥ यजूꣳषि सामभिः । सामान्यृग्भिः । ऋचो याज्याभिः । याज्या वषट्कारैः । वषट्कारा आहुतिभिः । आहुतयो मे कामान्थ्सम-

क्षत्रियादिर्वा । राष्ट्रं देशः । अश्वादयः प्रसिद्धाः । आत्मा शरीरम् । पुष्टं शरीरस्य पुष्टिः ॥

[15]कल्पः—"त्रया देवा एकादशेत्याहुतीर्जुहोति" इति । तत्र प्रथमामृचमाह—एकादशसंख्याका देवतास्त्रयाः त्रिविधाः लोकत्रयवर्तित्वात् । तथा चाम्नातम्—"ये देवा दिव्येकादश स्थ" * इत्यादिना । ते चैते त्रयस्त्रिंशत्संख्याका देवाः सुराधसः शोभनस्य कर्मणः साधकाः । बृहस्पतिः पुरोहितो मुख्यो येषां ते बृहस्पतिपुरोहिताः । सवितुर्देवस्य प्रसवे सति ते सर्वे मुख्या देवा इतरैस्सह मामवन्तु । तत्र प्रथमगणस्थाः द्वितीयगणस्थैस्सहिताः । द्वितीयगणस्थास्तृतीयगणस्थैस्सहिताः । तृतीयगणस्थास्सत्येन सहिताः । सत्यं च यज्ञेन सहितम् । एवं यज्ञादय आहुतिपर्यन्ता उत्तरोत्तरवस्तुभिस्सह तिष्ठन्ति । ताश्चाहुतयो मदीयान्कामान्समर्धयन्तु समृद्धान्कुर्वन्तु ॥

* सं. १—४—१०.

धेयन्तु । [16]भूस्स्वाहा । [17]लोमानि प्रयतिर्मम । त्वङ्म आनतिरागतिः । मा१ँसं म उपनतिः । वस्वस्थि । मज्जा म आनतिः ॥ २७॥

पस्त्यास्वा सरस्वत्यै भेषज्येन श्रीरङ्गानि भसद्यज्ञे यज्ञो यजुर्भिरुपनतिर्द्वे च ॥५॥

[16]अथ द्वितीयं मन्त्रमाह—येयं भूमिस्तस्यै स्वाहा हुतमस्तु ॥

[17]कल्पः—"लोमानि प्रयतिर्ममेति यथालिङ्गमङ्गानि संमृशति" इति । मदीयानि लोमानि प्रयतिः शुद्धिकराणि सन्तु । मदीया त्वक् आनतिः अन्येषां प्रह्वीभावहेतुरस्तु । आगतिः अन्येषां पदार्थानामागमनहेतुरस्तु । मदीयं मांसं उपनतिः अभिप्रेतसंपत्तिहेतुरस्तु । अस्थि च मदीयं वसु धनहेतुरस्तु । मत्संबन्धिमज्जा च आनतिः अन्येषां वशीकरणहेतुरस्तु ॥

अत्र विनियोगसंग्रहः—

आसन्दीं स्थापयेन्मित्रः क्षत्रस्य धर्मसंस्कृतिः ।
स्योनां तस्यामुपविशेन्निषसादेति मन्त्रयेत् ॥
देवत्रयेणाभिषिञ्चेत्कोऽसि पाणी उपस्पृशेत् ।
सुश्लोकत्रयेणाह्वयेच्छिरः स्वात्माभिमर्शनम् ॥
अवरोहति जङ्घाभ्यां प्रतिक्षत्रादिकं जपेत् ।
त्रया भूराहुतीर्हुत्वा लोमेत्यङ्गान्युपस्पृशेत् ॥
अनुवाके पञ्चमेऽस्मिन्मन्त्राः सप्तदश स्मृताः ॥

इति तैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

[1]यद्दैवा देवहेडनम् । देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसः । विश्वान्मुञ्चत्वꣳहसः । [2]यदि दिवा यदि नक्तम् । एनाꣳसि चकृमा वयम् । वायुर्मा तस्मादेनसः । विश्वान्मुञ्चत्वꣳहसः । [3]यदि जाग्रद्यदि स्वप्ने । एनाꣳसि चकृमा वयम् ॥ सूर्यो मा तस्मादेनसः । विश्वान्मुञ्चत्वꣳहसः । [4]यद्ग्रामे यदरण्ये । यत्सभायां यदिन्द्रिये । यच्छूद्रे यदर्ये । एनश्चकृमा वयम् । यदेकस्याधि धर्मणि ।

---

[1]पञ्चमेऽभिषेक उक्तः । षष्ठेऽवभृथ उच्यते. कल्पः—"यद्देवा देवहेडनमित्यवभृथे षड्जुहोतीर्जुहोति" इति । तत्र प्रथमामृचमाह—देवासः द्योतनात्मका हे देवाः ! देवहेडनं देवविषयमनादररूपं यत्पापं वयं समृत्यपुत्राः चकृम कृतवन्तः । अंहसः अभिभवनस्व भावात् विश्वस्मात्सर्वस्मात् तस्मादेनसः पापात् अग्निर्मा मां मुञ्चतु मुक्तं करोतु ॥

[2]द्वितीयामाह—कालविशेषे कृतात्पाप्मनो वायुर्मोचकोऽस्तु ॥

[3]तृतीयामाह—अवस्थाविशेषे कृतात्पाप्मनः सूर्यो मोचकोऽस्तु ॥

[4]चतुर्थीमाह—अर्यः स्वामी वैश्यो वा । अरण्यादिदेशविशेषे चक्षुरादीन्द्रियविशेषे शूद्रादिपुरुषविशेषे च यदेनो वयं चकृम यदप्येकस्य अन्यपुरुषस्य धर्मणि अग्निहोत्रादिधर्मकार्ये अधिकं पापं चकृम तस्य सर्वस्य पापस्य हे आहुतिरूप! त्वं अवयजनं विनाशकमसि ॥

तस्यावयजनमसि । [5]यदापो अघ्नियां वरुणेति शपामहे । ततो वरुण नो मुञ्च ॥ २१ ॥ [6]अवभृथ निचङ्कुण निचेरुरसि निचङ्कुण । अव देवैर्देवकृतमेनोऽयाट् । अव मर्त्यैर्मर्त्यकृतम् । उरोरा नो देव रिषस्पाहि । [7]सुमित्रा न आप ओषधयस्सन्तु । दुर्मित्रास्तस्मै भूयासुः । योऽस्मान्द्वेष्टि । यं च

[5]पञ्चमीमाह—हे वरुण! या आपः सन्ति याश्चाघ्निया गावः एतद्द्वयं भूम्यादेरुपलक्षणम् । तेषु सर्वेषु विषयेषु इति अनेन प्रकारेण शपामहे सत्यत्वेन अनृतत्वेन वा शपथं कुर्मः । यत्पापमस्ति हे वरुण! ततः शपथकृतात्पापात् नोऽस्मान् मुञ्च मुक्तान्कुरु ॥

[6]कल्पः—"अवभृथ निचङ्कुणेत्यवभृथं यजमानोऽभिमन्त्र्य" इति। हे अवभृथ! कर्माभिमानिन्वरुण! निचङ्कुण! राक्षसभर्त्सनार्थं नितरां ध्वनिकारिन्! निचेरुरसि अस्मद्रक्षणार्थं निगूढत्वेन चरणशीलोऽसि । हे निचङ्कुण! अस्माभिर्देवेषु कृतं एनः अपराधं तैर्देवैस्सह त्वं अवायाट् विनाशय । मर्त्येषु ऋत्विक्षु कृतं तैर्मर्त्यैस्सह तदवायाट् विनाशय । हे देव! उरोः अधिकात् रिषः देवमर्त्यकृतात् हिंसनात् नः अस्मान् आ समन्तात्पाहि ॥

[7]कल्पः—"सुमित्रा न आपो द्रुपदादिवेन्मुमुचान इत्याप्लुत्य" इति । तत्र प्रथममन्त्रमाह—या एता अब्देवताः याश्चौषधिदेवताः

वयं द्विष्मः । [8]द्रुपदादिवेन्मुमुचानः । स्विन्नस्स्नात्वी मलादिव ॥ ३० ॥ पूतं पवित्रेणेवाज्यम् । आपश्शुन्धन्तु मैनसः । [9]उद्वयं तमसस्परि । पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यम् । अगन्म ज्योतिरुत्तमम् । [10]प्रतियुतो वरुणस्य पाशः ।

---

तास्सर्वाः नोऽस्मान्प्रति सुमित्रा अत्यन्तमनुकूलाः सन्तु । योऽस्मानुदासीनानपि द्वेष्टि यं चान्यमुदासीनमपि वयं द्विष्मः तस्मै द्विविधाय तादृशपुरुषाय ता आप ओषधयश्च दुर्मित्राः प्रतिकूलाः सन्तु ॥

[8]द्वितीयमन्त्रमाह—राजानो हि अपराधिनस्तस्करस्य पादं सच्छिद्रे काष्ठे कीलयन्ति तत् द्रुपदमित्युच्यते । तस्मान्मुमुचान इव एतद्बन्धनान्मुक्तः पुरुषश्चौर्याभियोगं परित्यज्य शुद्ध इत्येव व्यवह्रियते । यथा स्विन्नः पुरुषः स्नात्वी स्नानं कृत्वा मलान्मुमुचानः शुद्ध इत्येव व्यवह्रियते । यथा च कर्मण्याज्यं उत्पवनपवित्रेण पूतं भवति तथेमा आपो मामेनसः पापात् शुन्धन्तु शुद्धं कुर्वन्तु ॥

[9]कल्पः—“उद्वयं तमसस्परीत्यादित्यमुपस्थाय” इति । तमसस्परि अन्धकारस्योपरि वर्तमानं उत्तरं ज्योतिः उत्कृष्टं प्रकाशं उत्पश्यन्तः उत्कर्षेण वीक्षमाणा वयं देवत्रा देवेषु मध्ये देवं द्योतमानं सूर्यं सूर्यस्वरूपं उत्तमं ज्योतिः अगन्म प्राप्ताः स्मः ॥

[10]कल्पः—“प्रतियुतो वरुणस्य पाश इत्युदकान्तं प्रत्यस्यति”

प्रत्यस्तो वरुणस्य पाशः । [11—13] एधोऽस्येधिषीमहि । समिदसि ॥३१॥ तेजोऽसि तेजो मयि धेहि । [14] अपो अन्वचारिषम् । रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमम् । तं मा सꣳसृज वर्चसा । प्रजया च धनेन च । [15] समाववर्ति पृथिवी । स-

इति । योऽयं वरुणस्य पाशः जलमध्यवर्ती सोऽस्माभिः बहिर्निर्गच्छद्भिः प्रतियुतः परित्यक्तः । तथा वरुणस्य पाशः प्रत्यस्तः विनाशितः ॥

[11—13] कल्पः—"पशुवत्समिध उपस्थानं च" इति । पशौ त्वेवमुक्तम्—"एधोऽस्येधिषीमहीत्याहवनीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते" इति । तत्र समिदाधानमन्त्रान् त्रीनाह—हे समित्! त्वमेधोऽसि अभिवृद्धिहेतुरसि । अतस्त्वामाधाय वयमेधिषीमहि वृद्धिं प्राप्नुमः । हे द्वितीयसमित्! त्वं समिन्धनसाधनमसि । हे तृतीयसमित्! त्वं तेजोहेतुरसि । अतो मयि तेजो धेहि संपादय ॥

[14] उपस्थानमन्त्रमाह—अहमेता अपः अनुसृत्याचारिषं कर्मानुष्ठितवानस्मि । रसेन जलगतेन सारेण समसृक्ष्महि संसृष्टा अभूम । हे अग्ने! पयस्वान् जलसारयुक्तोऽहमागमं त्वत्समीपे समागतोऽस्मि । तमेतादृशं मां वर्चसा बलेन च प्रजया धनेन च संसृज संयोजय ॥

[15] कल्पः—"समाववर्तीत्युपस्थाय" इति । येयं पृथिवी सा समाववर्ति सम्यगावृत्ता मया सह समागता । एवमुषःकालः, सूर्यः,

मुषाः । समु सूर्यः । समु विश्वमिदं जगत् । वै-श्वानर ज्योतिर्भूयासम् । विभुं कामं व्यश्नवै । [16]भू-स्स्वाहा ॥ ३२ ॥

स्वप्न एनाꣳसि चकृमा वयं मुञ्च मलादिव समिदसि जगत्प्राणि च ॥ ६ ॥

[1]होता यक्षत्समिधेन्द्रमिडस्पदे । नाभा पृथि-

---

सर्वमिदं जगच्च समावर्वर्ति । हे वैश्वानर । अहं ज्योतिस्स्वरूपो भूयासम् । त्वत्प्रसादाद्विभुं कामं व्याप्तं फलं व्यश्नवै प्राप्नवानि ॥

[16]कल्पः—“भूस्स्वाहेत्याहुतिं हुत्वा” इति । येयं भूः पृथिवी सा स्वाहा त्वयि स्वाहुता ॥

अत्र विनियोगसंग्रहः—

यद्वाः पञ्चभिर्हुत्वाऽवभृथेत्यनुमन्त्रयेत् ।
सुमित्रा द्रुपदा द्वाभ्यां स्नात्वोद्वेत्युपातिष्ठते ॥
प्रतीत्यापः परित्याज्या पञ्चोक्षिर्जुहुयात्रिभिः ।
अपस्समेत्युपस्थानं भूस्स्वाहेति जुहोति हि ॥
अत्र मन्त्राष्षोडशोक्ता अध्वर्योः कृत्यमीरितम् ।

इति तैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः

---

[1]इत्थं षड्भिरनुवाकैरस्यां कौकिल्यां सौत्रामण्यामाध्वर्यवमुक्तम् । अथावशिष्टैश्चतुर्दशभिरनुवाकैर्हौत्रमुच्यते । तत्रास्मिन् सप्तमेऽनुवाके

व्या अग्निं । दिवो वर्ष्मन्त्समिध्यते । ओजिष्ठश्च-र्षणीसहान् । वेत्वाज्यस्य होतर्यज । [2]होता यक्षत्त-नूनपातम् । ऊतिभिर्जेतारमपराजितम् । इन्द्रं

होतारमुद्दिश्य मैत्रावरुणेन पठनीया एकादश प्रयाजप्रैषा उच्यन्ते । तत्र 'समिद्भ्यः प्रेष्य' इत्यध्वर्युणा प्रेषितो मैत्रावरुणः प्रैषमन्त्रं पठति । तमिमं मन्त्रमाह—

योऽयं होता विद्यते सोऽयं समिधेन्द्रं समिन्नामकेनाग्निना युक्त-मिन्द्रं इडस्पदे इडाख्याया गोः पदस्थाने अस्मिन्नाहवनीये यक्षत् यजतु पूजयत्वित्यर्थः । या सोमक्रयणी गौः तस्याः पादपांसोः कियानपि भाग आहवनीये प्रक्षिप्तः तस्मादिडस्पदमित्युच्यते । समिन्नामकः कश्चिदग्निविशेषः प्रथमयाऽऽहुत्या हूयते । अतः स-मिन्नामकाग्निद्वारा तमिन्द्रं होता यक्षदित्युच्यते । तच्चेडायाः पदं आहवनीयाख्यं पृथिव्या नाभा नाभिस्थानीयायामुत्तरवेद्यां अध्युपरि वर्तते । हूयमानोऽयमग्निः दिवो वर्ष्मन् द्युलोकस्य शरीरस्थानीय इत्यर्थः । तत्र समिध्यते सम्यग्दीप्यते । चर्षणीसहान् चर्षणयो मनुष्याः तान् सहन्ते अभिभवन्तीति चर्षणीसहाः देवाः तानुद्दिश्य तेषां देवानां मध्ये ओजिष्ठः अत्यन्तप्रबलः तादृशोऽग्निः आज्यस्य वेतु इदमाज्यमश्नातु पिबत्वित्यर्थः । हे होतः । यज तदर्थं याज्यां पठ ॥

[2]द्वितीयं प्रैषमन्त्रमाह—अत्र सर्वत्र प्रथमान्तो होतृशब्दो दैव्यं होतारमाचष्टे, संबुद्ध्यन्तो मानुषम् । यथा पूर्वमन्त्रे समिच्छब्दः प्रयाजदेवतारूपमग्निविशेषमाह, एवमत्रापि तनूनपाच्छब्दो द्वितीय-प्रयाजदेवतारूपमग्निविशेषमाचष्टे । दैव्यो होता तनूनपान्नामकमग्निं

देव॑५ सुव॒र्विद॑म् । प॒थिभि॑र्मधु॑मत्तमैः । नरा॒शंसे॑न॒ तेज॑सा ॥ ३३ ॥ वेत्वाज्य॑स्य॒ होत॒र्यज॑ । [3]होता॑ यक्ष॒दिडा॑भि॒रिन्द्र॑मीडि॒तम् । आ॒जु॒ह्वान॒मम॑र्त्यम् । दे॒वो दे॒वैस्सवी॑र्यः । वज्र॑हस्तः पुरं॒द॒रः । वेत्वाज्य॑स्य॒ होत॒र्यज॑ । [4]होता॑

यक्षत् यजतु पूजयतु तदग्निद्वारा इन्द्रं पूजयतु । कीदृशमिन्द्रम्? ऊतिभिः अस्मद्रक्षणैर्युक्तं, जेतारं युद्धे जयशीलं केनाप्यन्येन अपराजितं, देवं द्योतमानं, सुवर्विदं स्वर्गस्य लब्धारं, मधुमत्तमैः अन्नपानादिपाथेयसंपत्त्या अत्यन्तं मधुरैः पथिभिः मार्गैर्युक्तं, नराशंसेन मनुष्यैः शंसनीयेन तेजसा युक्तं, तथाविधेन्द्रपूजार्थं तनूनपादग्निराज्यं पिबतु । तदर्थं हे मानुष होतः! याज्यां पठ ॥

[3]तृतीयमन्त्रमाह—इडाशब्देन प्रयाजदेवतारूपस्तृतीयोऽग्निरुच्यते । बहुवचनं पूजार्थम् । तदग्निद्वारा दैव्यो होता इन्द्रं पूजयतु । कीदृशमिन्द्रम्? ईडितं नानाविधैर्मन्त्रैः स्तुतम्, आजुह्वानं सर्वेषु यज्ञेषु होमभाजं आह्वानभाजं वा, अमर्त्यं मरणरहितम् । स चेन्द्रो देवो देवैस्सह सवीर्यः बहुसामर्थ्ययुक्तः शत्रूनभिभवितुं वज्रहस्तः आसुरीं पुरीं दारयति विनाशयतीति पुरंदरः । तथाविधेन्द्रस्य प्रीतये पूर्वोक्तो वह्निराज्यं पिबतु । हे मानुष होतः! याज्यां पठ ॥

[4]चतुर्थमन्त्रमाह—बर्हिश्शब्दश्चतुर्थप्रयाजदेवतारूपमग्निमाचष्टे । तस्मिन्बर्हिषि पूजिते सति तद्द्वारेण इन्द्रं दैव्यो होता पूजयतु ।

यक्षद्बर्हिषीन्द्रं निषद्वरम् । वृषभं नर्यापसम् । वसुभी रुद्रैरादित्यैः । सयुग्भिर्बर्हिरासदत् ॥३४॥ वेत्वाज्यस्य होतर्यज । [5]होता यक्षदोजो न वीर्यम । सहो द्वार इन्द्रमवर्धयन् । सुप्रायणा विश्रयन्तामृतावृधः । द्वार इन्द्राय मीढुषे । वियन्त्वाज्यस्य होतर्यज । [6]होता यक्षदुषे इन्द्रस्य

---

कीदृशमिन्द्रं? निषद्वरं नितरां यज्ञे सीदन्ति उपविशन्तीति निषदो देवाः तेषा श्रेष्ठम्, वृषभं कामानां वर्षयितारम्, नरेभ्यो हितं नर्यं तथाविधं कर्म यस्यासौ नर्यापाः तथाविधम् । स चेन्द्रो वस्वादिभिः सयुग्भिः स्वेन सह वर्तमानैर्युक्तो बर्हिरासदत् यज्ञं प्राप्नोतु । वेत्वित्यादि पूर्ववत् ॥

[5]पञ्चममन्त्रमाह—द्वारशब्दः पञ्चमप्रयाजदेवतारूपमग्निमाह । पूजार्थं बहुवचनम् । तमग्निं दैव्यो होता पूजयतु । ताश्च द्वारशब्दाभिधेया देवता इन्द्रं वर्धयन्तु । ओजआदयो दृष्टान्ताः । यथा अष्टमधातोरोजसो वीर्यस्य चक्षुरादीन्द्रियसामर्थ्यस्य च सहसः शरीरबलस्य च वृद्धिः तथेन्द्रस्याभिवृद्धिरित्यर्थः । ताश्च द्वारदेवताः सुप्रायणाः शोभनगतयः ऋतावृधः यज्ञस्य वर्धयित्र्यः तथाविधाः विश्रयन्तां विशेषेण यज्ञमाश्रयन्तु । मीढुषे वृष्ट्यादिना सेचकाय इन्द्रायेन्द्रार्थं द्वारो देवता वियन्तु पिबन्तु ॥

[6]षष्ठमन्त्रमाह—उषाशब्दः षष्ठप्रयाजाग्निमूर्तिद्वयमाह । तादृश्यौ उषे द्वे देव्यौ होता पूजयतु । कीदृश्यावुषे? इन्द्रस्य धेनू धेनु-

धेनू । सुदुघे मातरौ मही । सवातरौ न तेजसी । वत्समिन्द्रमवर्धताम् ॥३५॥ वीतामाज्यस्य होतर्यज । [7]होता यक्षद्दैव्या होतारा । भिषजा सखाया । हविषेन्द्रं भिषज्यतः । कवी देवौ प्रचेतसौ । इन्द्राय धत्त इन्द्रियम् । वीतामाज्यस्य होतर्यज । [8]होता यक्षत्तिस्रो देवीः । त्रयस्त्रिधात-

---

वत्प्रीणयित्र्यौ, सुदुघे सुखेन दोग्धुं शक्ये, मातरौ पयःप्रदानेन मातृसदृश्यौ, मही महत्यौ पूज्ये वा । वातृशब्दो गमनस्वभावं वत्समाचष्टे । समानो वाता वत्सो ययोस्ते सवातरौ । नकार उपमार्थः । इन्द्रस्य वत्सस्थानीयत्वादेकवत्से इव ते उभे वर्तेते । तेजसी तेजस्विन्यौ, तादृश्यौ मूर्ती वत्सस्थानीयमिन्द्रं अवर्धतां वृद्धिं प्रापयताम् । ते मूर्ती आज्यं वीतां पिबताम् ॥

[7]सप्तममन्त्रमाह—दैव्यहोतृशब्देन सप्तमप्रयाजदेवतारूपस्याग्नेर्द्वौ देहावुच्येते । तावुभौ होता पूजयतु । कीदृशौ? भिषजौ अनिष्टव्याधिचिकित्सकौ, सखाया परस्परं स्निग्धौ, तावुभौ अनेन हविषा तमिन्द्रं भिषज्यतः अनिष्टपरिहारेण चिकित्सां कुरुतः । तावुभौ कवी विद्वांसौ, देवौ द्योतमानौ, प्रचेतसौ प्रकृष्टज्ञानौ, ताविन्द्रार्थं इन्द्रियं धत्तः शक्तिं पोषयतः । तावुभावाज्यं वीतां पिबताम् ॥

[8]अष्टममन्त्रमाह—अष्टमप्रयाजदेवतारूपस्याग्नेस्त्रिमूर्तयः । तिस्रस्ताः पूजयतु । कीदृश्यस्ताः? देवीः द्योतनात्मिकाः, अपसः कर्मनिमित्तं

वोऽपसः । इडा सरस्वती भारती ॥ ३६ ॥ मही-
न्द्रपत्नीर्हविष्मतीः । वियन्त्वाज्यस्य होतर्यज ।
[9] होता यक्षत्त्वष्टारमिन्द्रं देवम् । भिषजꣳ सुयजं
घृतश्रियम् । पुरुरूपꣳ सुरेतसं मघोनिम् । इन्द्राय
त्वष्टा दधदिन्द्रियाणि । वेत्वाज्यस्य होतर्यज ।
[10] होता यक्षद्वनस्पतिम् । शमितारꣳ शतक्रतुम् ।
धियो जोष्टारमिन्द्रियम् ॥ ३७ ॥ मध्वा समञ्जन्प-

त्रिधातवः त्रीणि शरीराणि धारयित्र्यः, अत एव त्रयः त्रिलो
कात्मिकाः । इडादीनि तासां नामधेयानि, ताश्च मही महत्यः
पूज्याः, इन्द्रपत्नीः इन्द्रस्य पालयित्र्यः, हविष्मतीः अस्मद्दत्तेन
हविषा युक्ताः । तादृश्य एता आज्यं वियन्तु पिबन्तु ॥

[9] नवममन्त्रमाह—त्वष्टृशब्देन नवमप्रयाजदेवतारूपोऽग्निरुच्यते तं
होता पूजयतु तद्द्वारेणेन्द्रं पूजयतु । कीदृशमिन्द्रं? देवं द्योतना
त्मकं, भिषजं अनिष्टव्याधिचिकित्सकं, सुयजं सुखेन यष्टुं शक्यं,
घृतश्रियं घृतसेविनं, पुरुरूपं तत्तद्यजमानगृहागमनाय बहुरूपधारिणं,
सुरेतसं शोभनापत्ययुक्तं, मघोनिं अन्नवन्तम् । ईदृशायेन्द्राय स
त्वष्टा इन्द्रियाणि क्रियासामर्थ्यानि दधत् पोषयतु । आज्यं वेतु
पिबतु ॥

[10] दशममन्त्रमाह—वनस्पतिशब्देन दशमप्रयाजदेवतारूपोऽग्नि-
रुच्यते । तं होता यक्षत् तद्द्वारेणेन्द्रं पूजयतु । कीदृशमिन्द्रं?
शमितारं सर्वानिष्टशमनहेतुं, शतक्रतुं शतसंख्याकाश्वमेधयुतं, धियो

थिभिस्सुगेभिः । स्वदाति हव्यं मधुना घृतेन । वे-
त्वाज्यस्य होतर्यज । [11]होता यक्षदिन्द्रꣳ स्वाहाऽऽ-
ज्यस्य । स्वाहा मेदसः । स्वाहा स्तोकानाम् ।
स्वाहा स्वाहाकृतीनाम् । स्वाहा हव्यसूक्तीनाम् ।
स्वाहा देवाꣳ आज्यपान् । स्वाहेन्द्रꣳ होत्राज्जु-
षाणाः । इन्द्र आज्यस्य वियन्तु । होतर्यज ॥३८॥

तेजसाऽऽसदवर्धतां भारतीन्द्रियं जुषाणा दे
च ॥ ७ ॥

सामिधेन्द्रं तनूनपातमिडाभिर्बर्हिष्योज उषे दै-

---

जोष्टारं बुद्धेस्सेवितारं, उपासकानां बुद्ध्या ध्यातव्यमित्यर्थः । इन्द्रियं सामर्थ्योपेतम् । तादृश इन्द्रः सुगेभिः पथिभिः सुखेन गन्तुं शक्यैर्मार्गैरागत्य मध्वा मधुरद्रव्येण समञ्जन् हवींषि स्निग्धीकुर्वन् वर्तते । स च मधुना मधुरेण घृतेन हव्यं स्वदाति स्वादूकरोति । तथाविधेन्द्रप्रीत्यर्थं वनस्पतिर्देव आज्यं पिबतु ॥

[11]एकादशमन्त्रमाह—उक्तेषु सर्वेषु प्रयाजेष्वनुगतमिन्द्रं होता यक्षत् यजतु पूजयतु । तदिन्द्रस्य प्रीत्यर्थमाज्यस्य स्वाहुतिरस्तु । मेदसो द्रव्यस्य स्वाहुतिरस्तु । स्तोकानां बिन्दूनां स्वाहुतिरस्तु । स्वाहाकृतीनां स्वाहाकारेण दीयमानानां सर्वाहुतिद्रव्याणां स्वाहुतिरस्तु । हव्यसूक्तीनां हविस्स्तावकमन्त्राभिमानिदेवतानामर्थे स्वाहुतिरस्तु । ये त्वाज्यं पिबन्तो देवास्तान्सर्वानुद्दिश्य स्वाहुतिरस्तु । होत्राद्धोमनि-

ध्यां तिस्रस्त्वष्टारं वनस्पतिमिन्द्रम् । समिधेन्द्रं चतुर्वेत्वेको वियन्तु द्विर्वीतामेको वियन्तु द्विर्वेत्वेको वियन्तु होतर्यज ॥

[1]समिद्ध इन्द्र उषसामनीके । पुरोरुचा पूर्वकृद्वावृधानः । त्रिभिर्देवैस्त्रिꣳशता वज्रबाहुः । जघान

---

मित्तभूतादिन्द्रं जुषाणाः सेवमाना ये देवास्तेषां स्वाहुतिरस्तु । अथमिन्द्रोऽन्ये च सर्वे देवा आज्यं पिबन्तु । हे मानुष होतः ! तदर्थं याज्यां पठ ॥

इति तैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः

---

[1]सप्तमे प्रयाजानां मैत्रावरुणप्रैषा एकादशाभिहिताः । अष्टमे तेषामेव प्रयाजानामेकादश पुरोरुचोऽभिधीयन्ते । तत्र प्रथमामृचमाह—समिन्नामको योऽयं प्रथमप्रयाजदेवोऽग्निः स एवायमिन्द्रस्वरूपः, स चोषसां प्रातःकालानां अनीके मुखे वर्तते । किं कुर्वन्? पुरः पूर्वस्यां दिशि रोचत इति पुरोरुक् आहवनीयः तेन पूर्वकृत् पूर्वाणि कर्माण्यग्निहोत्रादीनि कुर्वन् । वावृधानः अतिशयेन वर्धमानः । स च त्रिसंख्याकैस्त्रिंशत्संख्याकैश्च हविर्भागिभिर्देवैः सहितः वज्रबाहुस्सन् वृत्रं वैरिणं जघान हतवान् । दुरः स्वर्गस्य द्वाराणि विववार विवृतानि चकार ॥

वृत्रं वि दुरो ववार । [2]नराशंसः प्रति शूरो मिमानः। तनूनपात्प्रति यज्ञस्य धाम । गोभिर्वपावान्मधुना समञ्जन् । हिरण्यैश्चन्द्री यजति प्रचेताः । [3]ईडितो देवैर्हरिवाँ अभिष्टिः । आजुह्वानो हविषा शर्धमानः ॥३१॥ पुरंदरो मघवान् वज्रबा-

[2]द्वितीयामाह—तनूनपात्संज्ञको द्वितीयप्रयाजदेवः । स च नराशंस ऋत्विग्भिर्नरैः आ समन्तात् शंसनीयः युद्धेषु शूरस्सन् प्रतिमिमानः वैरिणां बलमियत्तया परिच्छिन्दन् वर्तते । तथा यज्ञस्य धाम फलभूतं स्थानं प्रतिमिमानो वर्तते । तथा गोभिः स्वकीयैः रश्मिभिः वपावान् शरीरपुष्टिमान् वर्तते । तथा मधुना मधुरेण घृतेन समञ्जन् पुरोडाशादिहवींषि श्लक्ष्णीकुर्वन् वर्तते । तथा भक्तेभ्यो दीयमानैर्हिरण्यैः चन्द्री आह्लादकारी सन् प्रचेताः प्रकृष्टज्ञानयुक्तो यजति देवान्पूजयति ॥

[3]तृतीयामाह—ईडितशब्देन तृतीयप्रयाजदेव उच्यते । स च देवैरीडितः स्तुतः इन्द्राभिन्नत्वात् । हरिवान् हरिशब्दाभिधेयाभ्यामश्वाभ्यां युक्तः । अभिष्टिः अभितः क्रियमाणा इष्टिर्यागो यस्य सोऽयमभिष्टिः यागनिष्पादक इत्यर्थः । आजुह्वानः सङ्ग्रामे प्रतिभटानामाह्वानकारी । हविषा शर्धमानः अस्माभिर्हुतेनाधिकं बलं प्राप्नुवन् । वैरिणां पुराणि दारयतीति पुरंदरः । मघवान् धनवान् । वज्रबाहुः इन्द्ररूपेण वज्रस्य धारयिता तादृशोऽयं जुषाणः प्रीयमाणः नोऽस्माकं यज्ञं उपायातु समीप एवागच्छतु ॥

हुः। आयांतु यज्ञमुपं नो जुषाणः। [4]जुषाणो बर्हिर्हरिवान्न इन्द्रः। प्राचीनꣳ सीदत्प्रदिशा पृथिव्याः। उरुव्यचाः प्रथमान꣸ स्योनम्। आदित्यैरक्तं वसुभिस्सजोषाः। [5]इन्द्रं दुरः कवष्यो धावमानाः। वृषाणं यन्तु जनयस्सुपत्नीः। द्वारो देवीरभितो विश्रयन्ताम्। सुवीरा वीरं प्रथमाना महोभिः॥४०॥

[4]चतुर्थीमाह—बर्हिर्नामकश्चतुर्थप्रयाजदेवः। स चेन्द्रस्वरूपः। हरिवान् अश्वयुक्तः। जुषाणः प्रीतियुक्तस्सन् पृथिव्यास्संबन्धिन्या प्रदिशा प्रकृष्टया पूर्वया दिशा युक्तं प्राचीनं आहवनीयस्थानं सीदत् प्राप्नोतु। उरुव्यचाः अत्यन्तं व्याप्तस्सन् प्रथमानं विस्तृतं स्योनं सुखकरं हविः प्राप्नोत्विति शेषः। कीदृशः सः? आदित्यैर्वसुभिश्च सजोषाः समानप्रीतिः। कीदृशं हविः? अक्तं श्लक्ष्णम्॥

[5]पञ्चमीमाह—द्वारशब्दाभिधेया देव्यः पञ्चमप्रयाजदेवस्य स्त्रीमूर्तयः ताश्चेन्द्रमाभितो विश्रयन्तां विशेषेण सेवन्ताम्। कीदृश्यो द्वारः? दुरः छिद्रभूयिष्ठाः महावकाशा इत्यर्थः। कवष्यः कवाटवत्यः, धावमानाः प्रवेशनिर्गमनरूपगतिमत्यः शुद्धिमत्यो वा, जनयः यज्ञानां जनयित्र्यः, सुपत्नीः सुष्ठु पालयित्र्यः, तादृश्यो देव्यः वृषाणं कामानां वर्षयितारं यन्तु प्राप्नुवन्तु। पुनरपि कीदृश्यः? सुवीराः शोभनवीरपुरुषाधिष्ठिताः, महोभिः कीर्तिभिः प्रथमानाः लोकेषु प्रख्याताः। कीदृशमिन्द्रं? वीरं युद्धेषु शूरम्॥

[6]उषासा नक्तां बृहती बृहन्तम् । पयस्वती सुदुघे शूरमिन्द्रम् । पेशस्वती तन्तुना संव्ययन्ती । देवानां देवं यजतस्सुरुक्मे । [7]दैव्या मिमाना मनसा पुरुत्रा । होतारराविन्द्रं प्रथमा सुवाचा । मूर्धन् यज्ञस्य मधुना दधाना । प्राचीनं ज्योतिर्हविषा वृधातः । [8]तिस्रो देवीर्हविषा वर्धमानाः । इन्द्रं जु-

[6]षष्ठीमाह—उषश्शब्देन नक्तशब्देन चाभिधेये षष्ठप्रयाजदेवस्य द्वे मूर्ती । ते उभे इन्द्रं यजतः पूजयतः । कीदृश्यौ? बृहती महत्यौ, पयस्वती क्षीरवत्यौ, सुदुघे सुखेन दोग्धुं शक्ये, पेशस्वती रूपवत्यौ, तन्तुना संव्ययन्ती वस्त्रेणैवालंकुर्वाणे, सुरुक्मे शोभनाभरणे । कीदृशमिन्द्रं? बृहन्तं महान्तं तथा युद्धेषु शूरं देवानामपि देवं स्वामिनम् ॥

[7]सप्तमीमाह—दैव्या होताराविति सप्तमप्रयाजदेवस्य द्वौ पुरुषदेहावुच्येते । तावुभाविन्द्रं हविषा वृधातः वर्धयतः । कीदृशौ तौ? पुरुत्रा बहुषु स्थानेषु मनसा मिमाना स्वचित्तेनोत्पादयन्तौ श्रद्धया ध्यायन्तावित्यर्थः । प्रथमा मुख्यभूतौ । सुवाचा शोभनवाक्यौ कल्याणस्तुतियुक्तौ । यज्ञस्य मूर्धन् मूर्धस्थानीये आहवनीये प्राचीनं ज्योतिर्दधाना उत्तमां ज्वालामुत्पादयन्तौ । कीदृशेन हविषा? मधुना मधुरेण ॥

[8]अष्टमीमाह—सरस्वती इडा भारती चेत्यष्टमप्रयाजदेवस्य तिस्रो मूर्तयः । ताश्च देवीर्हविषा वर्धमानास्सत्य इन्द्रं जुषाणाः सेवमा-

षाणा वृषणं न पत्नीः ॥ ४१ ॥ अच्छिन्नं तन्तुं पयसा सरस्वती । इडा देवी भारती विश्वतूर्तिः * । [9]त्वष्टा दधदिन्द्राय शुष्मम् । अपाकोऽचिष्टुर्यशसे पुरूणि । वृषा यजन्वृषणं भूरिरेताः । मूर्धन् यज्ञस्य समनक्तु देवान् । [10]वनस्पतिरवसृष्टो न पाशैः ।

ना वर्तन्ते । तत्र दृष्टान्तः—वृषणं न पत्नीः यथा पन्त्यः सेक्तारं सेवन्ते तद्वत् । कीदृशमिन्द्रम्? अच्छिन्नं तन्तुं आविच्छिन्नं पुत्रपौत्रादिसङ्कं तन्वानम् । कीदृशेन हविषा? पयसा क्षीरसदृशेन । कीदृशी भारती? देवी द्योतमाना विश्वमूर्तिः स्वेच्छागृहीतबहुशरीरयुक्ता ॥

[9] नवमीमाह—नवमप्रयाजदेवस्त्वष्टृशब्देनोच्यते । सोऽयमिन्द्रार्थं शुष्मं बलं दधत् संपादयतु । कीदृशस्त्वष्टा? अपाकः बालो न भवतीत्यर्थः । यशसे यशसोऽर्थे पुरूणि बहूनि कार्याणि अचिष्टुः अचैषीत् संपादितवानित्यर्थः । स्वयं वृषा सेचनसमर्थः भूरिरेताः बह्वपत्यबीजयुक्तः वृषणं सेचनसमर्थमिन्द्रं यजन् पूजयतु । यज्ञस्य मूर्धन् आहवनीये देवान् समनक्तु सम्यग्हविः प्रापयतु ॥

[10]दशमीमाह—दशमप्रयाजदेवो वनस्पतिः । स च मधुना मधुरेण घृतेन हव्यं स्वदाति स्वादूकरोति । तत्र दृष्टान्तः—पाशैरवसृष्टो न यथा कारागृहे बद्धः पुरुषः पाशैर्मुक्तस्सन् स्वगृहे गत्वा विस्रम्भेण व्यापारं करोति तद्वत् । किं कुर्वन्? त्मन्या

* विश्वमूर्तिरिति भाष्यपाठः.

त्मन्या सम॒ञ्जञ्छ॑मि॒ता न दे॒वः । इन्द्र॑स्य ह॒व्यैर्ज॒ठरं॑ पृणा॒नः । स्वदा॑ति ह॒व्यं मधु॑ना घृ॒तेन॑ ।
[11] स्तो॒का॒ना॒मिन्दुं॒ प्रति॒ शूर॒ इन्द्रः॑ । वृ॒षा॒यमा॑णो वृष॒भस्तु॑रा॒षाट् । घृ॒त॒प्रुषा॒ मधु॑ना ह॒व्यमु॒न्दन् । मू॒र्धन् य॒ज्ञस्य॑ जुषता॒ ५ स्वाहा॑ ॥ १२ ॥

शर्ध॑मानो॒ महो॑भिः पदी॑र्घृ॒तेन॑ च॒त्वारि॑ च ॥८॥

समञ्जन् आत्मनैव सम्यग्गच्छन् स्वतन्त्रस्सन्नित्यर्थः । स्वातन्त्र्ये दृष्टान्तः—शमिता देवो न यथा पशोर्विशसनकर्ता विशसने स्वतन्त्रस्तद्वत् । पुनः किं कुर्वन्? हव्यैरिन्द्रस्य जठरं उदरं पृणानःपूरयन् ॥

[11] एकादशीमाह—इन्द्रशब्दः सर्वप्रयाजसाधारणदेवतावाची । सोऽयमिन्द्रो यज्ञस्य मूर्धन् आहवनीये स्वाहा हुतं हविर्जुषताम् । कीदृश इन्द्रः? स्तोकानामिन्दुं प्रति शूरः स्तोकानां हविर्लेशानां मध्ये योऽयमिन्दुरतिस्वल्पोऽशस्तं प्रति शूर आदरवान् अल्पमपि हविर्भागं नावजानातीत्यर्थः । वृषायमाणः वृषवदाचरन् । यथा वृषो गोषु बहून्वत्सानुत्पादयति तद्वदयं बहुप्रजोत्पादक इत्यर्थः । वृषभः कामानां वर्षयिता । तुराषाट्, तूर्णं सहते शत्रूनभिभवतीत्यर्थः । किं कुर्वन्? घृतप्रुषा घृतसंगतेन मधुना मधुरेण रसेन हव्यमुन्दन् पुरोडाशादिरूपं हविर्द्रवीकुर्वन् । ता एताः पुरोरुगाख्या एकादशसंख्याका ऋचः प्रयाजानां याज्या आप्रिय इति चोच्यन्ते । हविःप्रक्षेपात्पूर्वपाठत्वात्पुरोरुचः । इज्यन्ते प्रयाजा आभिरिति याज्याः । देवताः सर्वतः प्रीणयन्तीत्याप्रियः ॥

इति तैत्तिरीयब्राह्मणभाष्ये षष्ठप्रपाठकेऽष्टमोऽनुवाकः.

[1]आर्चर्षणिप्रा [2]विवेष यन्मा । [3]तꣳ सध्रीचीः । [4]सत्यमित्तन्न त्वावाꣳ अन्यो अस्ति । इन्द्र देवो न मर्त्यो ज्यायान् । अहन्नहिं परिशयानमर्णः । अवासृजोऽपो अच्छा समुद्रम् । प्रससाहिषे पु-

[1–2]अष्टमे प्रयाजयाज्या अभिहिताः । अथ नवमे ऐन्द्रस्य पशोर्वपापुरोडाशहविषां द्वे द्वे याज्यापुरोनुवाक्ये क्रमेणोच्येते । तत्र वपामन्त्रयोः प्रतीके दर्शयति—"आचर्षणिप्रा वृषभो जनानाम्"* इति पुरोनुवाक्या । सा च "जुष्टीनरः"* इत्यत्र व्याख्याता । "विवेष यन्मा धिषणा"† इति याज्या । सा च "इन्द्रं वो विश्वतस्परि"† इत्यत्र व्याख्याता ॥

[3]अथ पुरोडाशे पुरोनुवाक्यायाः प्रतीकं दर्शयति—'तं सध्रीचीरूतयो वृष्णियानि' इत्येषा "वृषासो अंशुः"‡ इत्यत्र व्याख्याता ॥

[4]अथ तत्रैव याज्यामाह—हे इन्द्र ! तत् मयोच्यमानं वचः सत्यमित् सत्यमेव । कीदृशं वच इति तदुच्यते—अन्यः कश्चिद्देवो मर्त्यो वा त्वावान् त्वत्सदृशो नास्ति । ज्यायान् अधिको नास्ति । अर्णः उदकमुद्दिश्य त्वं परिशयानं परितो व्याप्य वर्तमानं अहिं मेघं अहन् हतवानसि मेघं भित्वा जलं वर्षयसीत्यर्थः । ततः समुद्रमच्छा समुद्राभिमुखेन अपो जलानि अवासृजः अवाङ्मुखत्वेन सृष्टवानसि ॥

[5]अथ हविषः पुरोनुवाक्यामाह—हे पुरुहूत ! बहुषु यज्ञेष्वाहू-

*ब्रा. २-४-३. †सं. १-६-१०. ‡ब्रा. २-४-६.

स्हूत शत्रून् । ज्येष्ठस्ते शुष्म इह रातिरस्तु । इन्द्राभर दक्षिणेना वसूनि । पतिस्सिन्धूनामसि रेवतीनाम् । [6]स शेवृधमधिधा द्युम्नमस्मे । महि क्षत्रं जनाषाडिन्द्र तव्यम् । रक्षा च नो मघोनः पाहि सूरीन् । राये च नस्स्वपत्या इषे धाः ॥४३॥

रेवतीनां चत्वारि च ॥ ९ ॥

---

यमान! इन्द्र! शत्रून् प्रकर्षेण ससाहिषे अभिभूतवानसि । ते शुष्मः बलं ज्येष्ठः अत्यन्तप्रवृद्धः । इह अस्मिन्कर्मणि रातिः त्वदीयं धनं अस्तु । हे इन्द्र! दक्षिणेन हस्तेन वसूनि धनानि आभर । त्वं तु रेवतीनां धनयुक्तानां संपदां सिन्धूनां रत्नाधाराणां समुद्राणां पतिः पालकोऽसि ॥

[6]तत्रैव याज्यामाह—हे इन्द्र! स त्वं शेवृधं सुखवर्धकं द्युम्नं धनं अस्मे अस्मासु अधिधाः अधिकं संपादय । जनाषाट् विरोधिजनानामभिभवि तव्यं त्वदीयं क्षत्त्रं बलं महि महत् । नः अस्मान् मघोनो धनवतः कृत्वा रक्ष । तथा सूरीन् विदुषश्च कृत्वा पाहि । नः अस्मान् राये धनाय स्वपत्यै शोभनापत्यत्वाय इषे अन्नाय च धाः धारय अस्मभ्यं धनादीन् देहीत्यर्थः ॥

अत्र विनियोगसंग्रहः—

ऐन्द्रे पशौ वपायां द्वे ऋचौ याज्यानुवाक्यके
आचर्षणि विवेषेति पुरोडाशे पुनर्द्वयम् ॥
तं सध्रीचीस्सत्यमित्था हविषस्तु तथा द्वयम्
प्रससाहि सशे मन्त्रा अनुवाके षडीरिताः ॥

इति तैत्तिरीयब्राह्मणभाष्ये षष्ठप्रपाठके नवमोऽनुवाकः.

[1]देवं बर्हिरिन्द्रꣳ सुदेवं देवैः । वीरवत्स्तीर्णं वेद्यामवर्धयत् । वस्तोर्वृतं प्राक्तोर्भृतम् । राया बर्हिष्मतोऽत्यगात् । वसुवने वसुधेयस्य वेतु यज । [2]देवीर्द्वार इन्द्रꣳ संघाते । विड्वीर्यामन्नवर्धयन् ।

---

[1] नवमे वपादीनां याज्यानुवाक्या उक्ताः । दशमेऽनुयाजानामेकादश मैत्रावरुणप्रैषा उच्यन्ते । तत्र प्रथममन्त्रमाह— बर्हिश्शब्देन दर्भाभिमानिप्रथमानुयाजदेवतास्वरूपमुच्यते । तद्बर्हिः इन्द्रं देवमवर्धयत् । कीदृशं बर्हिः? सुदेवं शोभना देवता यस्य तत्सुदेवं सर्वे देवा बर्हिषि सीदन्ति । तथा देवै र्देवसदृशैः ऋत्विग्भिर्वेद्यां स्तीर्णं प्रसारितम् । तथा वीरः कर्मशूरो यजमानोऽस्यास्तीति वीरवत् । वस्तोरक्तोरित्येतदव्ययद्वयमहोरात्रवाचकम् । इदं बर्हिः वस्तोरहनि वृतं संपादितम् । अक्तोः रात्रौ प्रभृतं प्रकर्षेणोन्नतदेशे स्थापितम् । तादृशं बर्हिः राया धनेन बर्हिष्मतः बर्हिर्युक्तानन्यान् यागान् अत्यगात् अतीत्य गतं इतरयागेभ्योऽधिकं धनं प्रयच्छतीत्यर्थः । वसुधेयस्य वसु धनमेव धेयं संपादनीयं यस्य कुबेरादेः सोऽयं वसुधेयः तस्य वसुवने धनदाननिमित्तं तदीयं धनं अस्मभ्यं दातुमित्यर्थः । वेतु बर्हिर्देव आज्यं पिबतु । तदर्थं हे होतः! यज याज्यां पठ ॥

[2] द्वितीयमन्त्रमाह—द्वारशब्दाभिधेयाः स्त्रीमूर्तयो द्वितीयानुयाजदेवताः ता देव्य इन्द्रमवर्धयन् । कीदृश्यः? संघाते विड्वीः द्वाराभिमानित्वात्कवाटद्वयमेलने दृढशक्तयः । कुत्र वर्धितवत्यः? यामन्

आ वृत्सेन तरुणेन कुमारेण च मीविता अपार्वाणम् । रेणुककाटं नुदन्ताम् । वसुवने वसुधेयस्य वियन्तु यज ॥४४॥ [3]देवी उषासा नक्ता । इन्द्रं यज्ञे प्रयत्यह्वेताम् । दैवीर्विशः प्रायासिष्टाम् । सुप्रीते सुधिते अभूताम् । वसुवने वसुधेयस्य वीतां

नियमरूपयागे । वत्सः अत्यन्तबालः तरुणो युवा तयोर्मध्ये वर्तमानः कुमारः । चकारस्तेषां समुच्चये । आकारः कात्स्न्र्य-वाची सर्वैरपत्यैः सहितमिन्द्रमित्यर्थः । किंच एता द्वारदेवताः मीविताः बलाधिक्येन स्थौल्यमापन्नास्सत्य रेणुककाटं अपनुदन्ताम् । कल्यां भवं काटं लिङ्गं रेणुकं रमणशीलं काटं यस्य राक्षसादेः तं स्वैरचारिणं निराकुर्वन्तु । दृष्टान्तार्थोऽर्वच्छब्दः । दुर्दान्ताश्वो यथा विषयव्यसनेन यत्र क्वापि वडवामारोहति तादृशमित्यर्थः । ता देव्यो वियन्तु आज्यं पिबन्तु । वसुवन इत्यादि पूर्ववत् ॥

तृतीयमन्त्रमाह—उषासानक्तशब्दवाच्ये अहोरात्राभिमानिन्यौ तृतीयानुयाजदेव्यौ । ते उभे प्रयति प्रकर्षेण गच्छति वर्तमाने यज्ञे इन्द्रमह्वेतां इन्द्रस्याह्वानमकुरुताम् । दैवीर्विशः देवसंबन्धिनीः प्रजाः प्रायासिष्टां प्रकर्षेण प्रापितवत्यौ । स्वयं च सुप्रीते अत्यन्ततुष्टे सुधिते सुखप्राप्तियुक्ते अभूताम् । सुप्रीतसुधितशब्दौ सुखप्राप्तिवाचकौ । तादृशौ देव्यौ वीतां पिबताम् ॥

यजं । [4]देवी जोष्ट्री वसुधिती । देवमिन्द्रमवर्धताम् । अयाव्यन्याऽघा द्वेषा॑ंसि । आऽन्याऽवाक्षीद्वसु वार्याणि । यजमानाय शिक्षिते ॥४५॥ वसुवने वसुधेयस्य वीतां यजं । [5]देवी ऊर्जाहुती दुघे सुदुघे । पयसेन्द्रमवर्धताम् । इषमूर्जमन्याऽवाक्षीत् । सग्धि॑ सपीतिमन्या । नवेन पूर्वं दयमाने । पुराणेन नवम् । अधातामूर्जमूर्जाहुती वसु

[4] चतुर्थमन्त्रमाह—यथा तृतीयानुयाजदेवस्योषासानक्तशब्दवाच्ये द्वे स्त्रीमूर्ती तथा चतुर्थानुयाजदेवस्य जोष्ट्रीशब्दवाच्ये द्वे स्त्रीमूर्ती । ते च वसुधिती सुखप्राप्तियुक्ते । तादृश्यावुभे इन्द्रं देवं अवर्धतां वर्धितवत्यौ । तयोरुभयोर्मध्ये अन्या काचिद्देवी अघा द्वेषांसि द्वेष्याणि पापानि अयावि अस्मत्तः पृथक्कृतवती । अन्या इतरा देवता वार्याणि वसु वरणीयानि धनानि आऽवाक्षीत् सर्वतः प्रापितवती । किमर्थं? यजमानाय । कीदृश्यौ देव्यौ? शिक्षिते कुशले ॥

[5] पञ्चममन्त्रमाह—ऊर्जाहुतिशब्दवाच्ये पञ्चमानुयाजदेवते स्त्रीमूर्ती । ते च दुघे अपेक्षितस्य फलस्य दोहयित्र्यौ, सुदुघे सुष्ठु दोग्धुं शक्ये, तादृश्यावुभे पयसा क्षीरविकारेण हविषेन्द्रमवर्धतां वर्धितवत्यौ । तयोरन्या काचित् इषमन्नं ऊर्जं रसं च अवाक्षीत् प्रापितवती इतरा तु सग्धिं सहभोजनं सपीतिं सहपानं च उभयोः प्रापितवती । ते चोभे नवेन इदानीं क्रियमाणेन हविषा पुरा

वार्याणि। यजमानाय शिक्षिते। वसुवने वसुधेयस्य वीतां यज ॥४६॥ [6]देवा दैव्या होतारा। देवमिन्द्रमवर्धताम्। हताघशꣳसावाभार्ष्टां वसु वार्याणि। यजमानाय शिक्षितौ। वसुवने वसुधेयस्य वीतां यज। [7]देवीस्तिस्रस्तिस्रो देवीः। पतिमिन्द्रमवर्धयन्। अस्पृक्षद्भारती दिवम्। रुद्रैर्य-

कदाचित् अनुष्ठितं हविः दयमाने रक्षन्त्यौ पुराणेन च हविषा नवं हविः पालयन्त्यौ हविर्द्वयेनात्यन्ततुष्टे इत्यर्थः। ते च उर्जाहुती देव्यौ ऊर्जं क्षीरादिरसं अधातां संपादितवत्यौ। शेषं पूर्ववत् ॥

[6]षष्ठमन्त्रमाह—दैव्याहोतृशब्दवाच्यौ षष्ठानुयाजदेवस्य द्वौ देहौ। तथाविधौ देवौ इन्द्रं देवं अवर्धतां वर्धितवन्तौ। कीदृशौ देवौ? हताघशंसौ अघमस्मद्विषयं द्रोहं शंसतीत्यघशंसो वैरी स च हतो याभ्यां तौ हताघशंसौ। तादृशौ देवौ यजमानार्थं वरणीयानि वसूनि आभार्ष्टां आहृतवन्तौ। शिक्षितौ कुशलौ ॥

[7]सप्तममन्त्रमाह—इडा सरस्वती भारती इत्येतास्तिस्रो देव्यः सप्तमानुयाजदेवताः। परस्परवियोगः कदाचिदपि नास्तीति विवक्षया पुनरपि तिस्रो देवीरित्युक्तम्। तास्तिस्रः पतिं पालकं इन्द्रं अवर्धयन् वर्धितवत्यः। तासां मध्ये भारती देवी दिवं द्युलोकं अस्पृक्षत् स्पृष्टवती द्युलोके वर्तत इत्यर्थः। सरस्वती देवी रुद्रैर्देवैः सहिता यज्ञं अस्पृक्षत् अपालयदित्यर्थः। इडा

ज्ञꣳ सरस्वती । इडा वसुमती गृहान् ॥ ४७ ॥ वसुवने वसुधेयस्य वियन्तु यज । [8]देव इन्द्रो नराशꣳसः । त्रिवरूथस्त्रिवन्धुरः । देवमिन्द्रमवर्धयत् । शतेन शितिपृष्ठानामाहितः । सहस्रेण प्रवर्तते । मित्रावरुणेदस्य होत्रमर्हतः । बृहस्पतिस्स्तोत्रम् । अश्विनाऽऽध्वर्यवम् । वसुवने वसुधेयस्य वेतु यज ॥ ४८ ॥ [9]देव इन्द्रो वनस्पतिः ।

देवी वसुमती धनयुक्ता भूत्वा गृहान् अस्पृक्षत् अपालयत् । तास्तिस्रो देव्यो वियन्तु पिबन्तु ॥

[8]अष्टममन्त्रमाह—नराशंसशब्देनाष्टमानुयाजदेव उच्यते । स च परमैश्वर्ययोगादिन्द्रः । स च त्रिवरूथः त्रिविधसेनायुक्तः । त्रिबन्धुरः त्रिविधोन्नतावनतभावयुक्तः । समीपवर्तिनी काचित्सेनाऽत्युन्नता, ततो बहिर्भूता मध्यमा काचिदानता, ततोऽपि बहिर्भूताऽधमाऽत्यन्तमानता । तादृशो देवः प्रसिद्धमिन्द्रं देवं वर्धितवान् । स च नराशंसः शितिपृष्ठानां श्वेतपृष्ठानां गवां शतेन सहस्रेण च आहितः सर्वतो व्याप्तः प्रवर्तते । मित्रावरुणेत् मित्रावरुणावेव अस्य नराशंसस्य होत्रं होतृत्वमर्हतः । बृहस्पतिः स्तोत्रं स्तोतृत्वं उद्गातृत्वमर्हति । अश्विनौ च आध्वर्यवं अध्वर्युत्वं अर्हतः ॥

[9]नवममन्त्रमाह—नवमानुयाजदेवो वनस्पतिशब्दवाच्यः । स च परमैश्वर्ययोगादिन्द्रः । वृक्षाभिमानित्वेन तदाकारत्वाद्धिरण्यपर्णः सुवर्णमयपत्रयुक्तः, मधुशाखः मधुराभिः कोमलाभिः शाखाभिर्यु-

हिर॑ण्यपर्णो मधु॑शाखस्सुपिप्प॒लः । दे॒वमिन्द्र॑मव॒र्धयत् । दिव॒मग्रे॑णाप्रात् । आऽन्तरि॑क्षं पृथि॒वीमं॑हत्री॑त् । व॒सु॒वने॑ वसु॒धेयं॑स्य वेतु॒ यज॑ । [10] दे॒वं ब॒र्हिर्वारि॑तीनाम् । दे॒वमिन्द्र॑मवर्धयत् । स्वा॒स॒स्थमिन्द्रे॑णास॑न्नम् । अ॒न्या ब॒र्हीꣳष्य॒भ्य॑भूत् । व॒सु॒वने॑ वसु॒धेयं॑स्य वेतु॒ यज॑ । [11] दे॒वो अ॒ग्निस्स्वि॑ष्ट॒कृत् ।

---

क्तः, सुपिप्पलः शोभनेन फलेन युक्तः । सोऽयं वनस्पतिर्देव इन्द्रं देवं वर्धितवान् । स्वकीयेन वृक्षाग्रेण दिवं द्युलोकं आप्रात् पूरितवान् । तथाऽन्तरिक्षमाऽप्रान्मध्यभागेन पूरितवान् । पृथिवीमदृंहीत् मूलैर्दृढीकृतवान् ॥

[10] दशममन्त्रमाह—दशमानुयाजदेवो दर्भाभिमानी बर्हिश्शब्दवाच्यः । तच्च बर्हिः वारितीनां वारां जलानां इतयः प्राप्तयः वारितयः तासां वारितीनां देवं द्योतकं दर्भेषु प्ररूढेषु भूमौ जलप्राप्तिर्जातेत्यनुमातुं शक्यते, तादृशं बर्हिरिन्द्रमवर्धयत् वर्धितवत् । कीदृशं बर्हिः? इन्द्रेण स्वासस्थं शोभनमासनं स्वासः तस्मिन् स्थातुं योग्यं स्वासस्थम् । इन्द्रो हि बर्हिषि सुखेनोपविशति । अत एव आसन्नं इन्द्रस्य समीपवर्ति भूत्वा अन्यानि लौकिकानि बर्हींषि अभ्यभूत् तिरस्कृतवत् । न हि लौकिकानि बर्हींषि मन्त्ररहितानि इन्द्रेण स्थातुं योग्यानि ॥

[11] एकादशमन्त्रमाह—स्विष्टकृन्नामकोऽग्निरेकादशानुयाजदेवः । स इन्द्रं देवं वर्धितवान् । अत्र सर्वत्राशंसार्थत्वाद्भूतवन्निर्देशः ।

देवमिन्द्रमवर्धयत् । स्विष्टं कुर्वन्त्स्विष्टकृत् । स्विष्टमद्य करोतु नः। वसुवने वसुधेयस्य वेतु जय ॥

वियन्तु यज शिक्षिते शिक्षिते वसुवने वसुधेयस्य वीतां यज गृहान्वेतु यजाभूत्षट्‌च ॥ १० ॥

देवं बर्हिर्देवीर्द्वारो देवी उषासा नक्ता देवी जोष्ट्री देवी ऊर्जाहुती देवा दैव्या होतारा शिक्षितौ देवीस्तिस्रस्तिस्रो देवीः पतिं देव इन्द्रो नराशंसो देव इन्द्रो वनस्पतिर्देवं बर्हिर्वारितीनां देवो अग्निस्स्विष्टकृद्देवम् ॥

वेतु वियन्तु चतुर्वीतामेको वियन्तु चतुर्वेतु । अवर्धयदवर्धयान्त्रिरवर्धतामेकोऽवर्धयन्चतुरवर्धयत्। वस्तोरा'वत्सेन दैवीरयावीषं हुतास्पृक्षच्छतेन दिवमिन्द्रं स्वासस्थं स्विष्टम् । शिक्षिते शिक्षिते शिक्षितौ ॥

यत्पूर्वमिष्टं तत्सर्वं सुष्ठु कुर्वन् वर्तेत इति व्युत्पत्त्या स्विष्टकृदिति नाम संपन्नम् । तादृशो देवः नोऽस्मदर्थं अद्यास्मिन्यज्ञे स्विष्टं करोतु । वसुधेयस्य धनस्वामिनः वसुवने धनदाननिमित्तं वेतु अयं देव आज्यं पिबतु । हे होतः! तदर्थं याज्यां पठ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके षष्ठप्रपाठके दशमोऽनुवाकः ॥

[1]होता यक्षत्समिधाऽग्निमिडस्पदे । अश्विनेन्द्रꣳ सरस्वतीम् । अजो धूम्रो न गोधूमैः कुवलैर्भेषजम् । मधु शष्पैर्न तेज इन्द्रियम् । पयस्सोमः परिस्रुता

[1]निर्वापकालीनो योऽयमैन्द्रः पशुः सूत्रकारेणोक्तः—“निर्वपनकाल ऐन्द्रं पशुमालभते” इति, तत्रानुयाजार्था मैत्रावरुणप्रैषा दशमेऽनुवाकेऽभिहिताः । अथैकादशे चोदकप्राप्तपशुत्रये प्रयाजार्था मैत्रावरुणप्रैषा उच्यन्ते । अस्याः कौकिल्याः प्रकृतिभूतायां सौत्रामण्यां पशुत्रयं विहितम्—“आश्विनं धूम्रमालभते सारस्वतं मेषमैन्द्रमृषभम्”* इति । तदेतत्त्रयमत्र चोदकप्राप्तं, तदीयेषु प्रयाजप्रैषेषु प्रथममन्त्रमाह सर्वप्रयाजसाधारणो देवोऽग्निः । तस्य विशेषमूर्तयः समिदादयः । योऽयं दैव्यो होता सोऽयं इडस्पदे सोमक्रयणीपदपांसुयुक्त आहवनीये समिधाऽग्निं यक्षत् समिन्मूर्तिरूपेण वर्तमानमग्निं यक्षत् पूजयतु । तद्द्वारेणाश्विनौ द्वाविन्द्रं सरस्वतीं च देवतात्रयं पूजयतु । योऽयमजो धूम्रवर्णः “आश्विनं धूम्रललाममालभेत” †इति विहितः सोऽयमत्र ‘सक्तवैर्गोधूमैः कुवलैर्बदरफलैश्च सह भेषजमौषधं अनिष्टनिवारकमित्यर्थः । अत्र ‘अजो धूम्रो न गोधूमैः’ इत्युक्तो नकारः साहित्यार्थः । एवमुत्तरत्रापि यथोचितं साहित्यार्थ उपमार्थो वा योजनीयः । यानि शष्पाणि व्रीह्यङ्कुराणि तैः सहितं मधुरं इदं द्रव्यं तेजस इन्द्रियस्य च कारणत्वेन तद्रूपम् । येयं परिस्रुता धारया स्रवन्ती सुरा, यच्च पयः क्षीरं तदुभयमत्र सोमः सोमसदृशं मधु घृतं मधुरघृतस-

*सं. १-८-२१. †सं. २-१-१०.

घृतं मधु । वियन्त्वाज्यस्य होतर्यज । [2]होता यक्षत्तनूनपात्सरस्वती । अविर्मेषो न भेषजम् । पथा मधुमताऽऽभरन् । अश्विनेन्द्राय वीर्यम् ॥ ५० ॥ बदरैरुपवाकाभिर्भेषजं तोकमभिः । पयस्सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । [3]होता यक्षन्नराशꣳसं न नग्नहुम् । पतिꣳ सुरायै भेषजम् ।

दृशम्, अतस्तदीयं कर्म निष्पादयितुं योऽयं समिदाख्योऽग्निः येऽश्वीन्द्रसरस्वत्याख्या देवाः ते सर्वेऽप्याज्यस्य वियन्तु इदमाज्यं पिबन्तु। तदर्थं हे मानुष होतः! यज याज्यां पठ ॥

[2]द्वितीयमन्त्रमाह—योऽयं द्वितीयप्रयाजदेवस्तनूनपान्नामकः, या च सरस्वती, यौ च सरस्वत्युपलक्षितावश्विनौ, यश्च सरस्वत्युपलक्षित इन्द्रः तान्सर्वान्देवान् अयं दैव्यो होता यक्षत् पूजयतु । योऽयमत्राविजातीयो मेषः "सारस्वतं मेषम्"* इतिवाक्यविहितः सोऽयं मधुमता पथा सह भेषजमनिष्टनिवारकम् । कर्मानुष्ठानमेवात्र मधुरः पन्थाः । अत्र आश्विना तदुपलक्षिताः सर्वे देवा इन्द्राय वीर्यमाभरन् । कीदृशं वीर्यं? बदरैः सक्तुहेतुभिर्बदरफलैः उपवाकाभिर्हरितयवैः तोक्मभिरङ्कुरितव्रीहिभिश्च निष्पन्नं भेषजमनिष्टनिवारकम् । 'पयस्सोमः' इत्यादि पूर्ववत् ॥

[3]तृतीयमन्त्रमाह—तृतीयप्रयाजदेवो नराशंसः तमग्न्यादिदेवसंयुक्तं होता पूजयतु । साहित्यवाचिना नकारेण देवतान्तरयोगोऽवगम्यते ।

*सं. १-८-२१.

मेषस्सरस्वती भिषक्। रथो न चन्द्र्यश्विनोर्वपा इन्द्रस्य वीर्यम् । बदरैरुपवाकाभिर्भेषजं तोकमभिः । पयस्सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज ॥५१॥ 'होता यक्षदिडेडित आजुह्वानस्सरस्वतीम् । इन्द्रं बलेन वर्धयन् । ऋषभेण गवेन्द्रियम् । अश्विनेन्द्राय वीर्यम् । यवैः कर्कन्धुभिः । मधु लाजैर्न मासरम् । पयस्सोमः

---

नग्नहुशब्दः स्थूलयवनिष्पन्नसक्तुवाची । स च द्रव्यविशेषमेलनेन सुरायाः पतिः पालकः । तादृशसुरापतिं नग्नहुं भेषजं अनिष्टनिवारकं कर्तुं दैव्यो होता पूजयत्वित्यन्वयः । योऽयं विहितो मेषरूपः पशुः, या च तद्देवता सरस्वती तदुभयं भिषक् चिकित्सकसदृशं सर्वारिष्टनिवारकमित्यर्थः । येयं वपा सेयमश्विनोर्देवयोः रथः न चन्द्री चन्द्रवदाह्लादकारी, इन्द्रस्य तु वीर्यं सामर्थ्यहेतुः । बदरैरित्यादि पूर्ववत् ॥

[4] चतुर्थमन्त्रमाह—इट्शब्देन चतुर्थप्रयाजदेव उच्यते । इडा देवेन सहाश्विसरस्वतीन्द्रदेवान् होता यजतु । कीदृश इन्द्रः? ईडितः मन्त्रैः स्तुतः, सरस्वतीमाजुह्वानः इह कर्मण्याह्वयन् वर्तते । इन्द्रं बलेन वर्धयन्वर्तते । 'ऐन्द्रमृषभम्'* इति विहितेन गोजातीयेनर्षभेणेन्द्रियं वर्धयन्वर्तते । अश्विसहितायेन्द्राय वीर्यं वर्धयन्वर्तते । ये सक्त्वर्था यवाः, ये च कर्कन्धवः स्थूलबदरफलविशेषाः, ये च

---

* सं. १-८-२१.

परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । [5]होता यक्षद्बर्हिस्सुष्टरीमोर्णम्रदाः । भिषङ्नासत्या ॥ ५२ ॥ भिषजाऽश्विनाऽश्वा शिशुमती । भिषग्धेनुस्सरस्वती । भिषग्दुह इन्द्राय भेषजम् । पयस्सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । [6]होता यक्षद्दुरो दिशः । कवष्यो न व्यचस्वतीः । अश्विभ्यां न दुरो दिशः । इन्द्रो न

---

लाजसदृशा व्रीहिबीजविशेषाः तैः सर्वैर्युक्तं मधु मधुरं मासरं मासरद्रव्यं वर्धयन्वर्तते । मासरं तक्रामिश्रितं सूक्ष्मयवचूर्णम् ॥

[5]पञ्चममन्त्रमाह—दर्भाभिमानी बर्हिश्शब्दवाच्यः पञ्चमप्रयाजदेवः तं देवं होता यजतु । कीदृशो देवः? सुष्टरीमा शोभनः स्तरीमा वेद्यामास्तरणं यस्यासौ सुष्टरीमा, ऊर्णम्रदाः कम्बलवन्मृदुः । इह कर्मणि नासत्या भिषक् अश्विदेवौ चिकित्सकौ विघ्नरूपानिष्टनिवारकौ । न केवलमत्रैव किं तु सर्वत्र । भिषजाऽश्विना तौ देवौ चिकित्सकौ । कीदृशौ? अश्वा अश्ववन्तौ व्यापिनौ वा । शिशुमती निशितबुद्धिः येयं सरस्वती साऽपि धेनुः प्रीणयित्री सती भिषक् चिकित्सकसदृशी । योऽयमश्विरूपः सरस्वतीरूपश्च भिषक् सोऽयमिन्द्रार्थं भेषजमौषधसदृशमिदं कर्म दुहे दोग्धि निष्पादयतीत्यर्थः ॥

[6]षष्ठमन्त्रमाह—दुरश्शब्दाभिधेया द्वाराभिमानिन्यः षष्ठप्रयाजदेवताः ता होता यजतु । ताः कीदृश्यः? दिशः दिगात्मिकाः क-

रोदसी दुघे। दुहे कामान्थ्सरस्वती ॥ ५३ ॥ अश्विनेन्द्राय भेषजम्। शुक्रं न ज्योतिरिन्द्रियम्। पयस्सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज। [7]होता यक्षथ्सुपेशसोषे नक्तंदिवा। अश्विना संजानाने। समञ्जाते सरस्वत्या। त्विषिमिन्द्रे न भेषजम्। श्येनो न रजसा हृदा। पयस्सोमः परिस्रुता घृतं मधु ॥ ५४ ॥ वियन्त्वाज्य-

वष्यो न कवाटयुक्ता इव वर्तन्ते। व्यचस्वतीः व्याप्तिमत्यः। ईदृश्यो दिगात्मिका दुराख्या देवता अश्विभ्यां न अश्विदेवाभ्यां सह वर्तन्ते। इन्द्रो न इन्द्रस्तु रोदसी द्यावापृथिव्यौ दुघे दोग्धि तत्रत्यं सारं संपादयतीत्यर्थः। सरस्वती कामं दुहे दोग्धि संपादयति। अश्विनेन्द्राय अश्विभ्यां सहितायेन्द्राय भेषजमौषधसदृशमिदं कर्म शुक्रं न शुद्धमिव ज्योतिः प्रकाशकमिन्द्रियं संपाद्यत* इति शेषः॥

[7]सप्तममन्त्रमाह—उषाशब्देन सप्तमप्रयाजदेवस्य मूर्तिद्वयमहोरात्राभिमानिरूपमुच्यते। द्वे उषे होता यजतु। कीदृशे उषे? सुपेशसे शोभनरूपयुक्ते नक्तंदिवा अहोरात्ररूपे अश्विना संजानाने अश्विदेवाभ्यां संयुज्य सर्वं जानत्यौ। तथा सरस्वत्या सह समञ्जाते सम्यग्गच्छन्त्यौ, तादृश्यौ देव्यौ इन्द्रे भेषजं न औषधमिव त्विषिं दीप्तिं कृतवत्याविति शेषः। श्येनो न प्रबलपक्षीव रजसा रञ्जकेन हृदा हृदयेन संयुक्ते इति शेषः। यथा श्येनस्तीव्रवेगेन मनुष्याणां हृदयं रञ्ज-

* क. संपद्यत.

स्य होतर्यज। [8]होता यक्षद्दैव्या होतारा भिषजाऽश्विना। इन्द्रं न जागृवी दिवा नक्तं न भेषजैः। शूष५ँ सरस्वती भिषक्। सीसेन दुह इन्द्रियम्। पयस्सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज। [9]होता यक्षत्तिस्रो देवीर्न भेषजम्। त्रयस्त्रिधातवोऽपसः। रूपमिन्द्रे हिरण्ययम् ॥ ५५ ॥ अश्विनेडा न भारती। वाचा सरस्वती। मह इ-

यति तद्वदिमे अपि स्वकार्यनिष्पादनेन रञ्जयत इत्यर्थः ॥

[8] अष्टममन्त्रमाह—दैव्याहोतृशब्देनाष्टमप्रयाजदेवस्य द्वौ देहावुच्येते। तौ होता यजतु। भिषजाऽश्विना भिषग्रूपावश्विनावपि यजतु। इन्द्रं न इन्द्रमपि यजतु। नकारः समुच्चयार्थः। कीदृशौ होतारौ? दिवा नक्तं न दिवसे रात्रौ च भेषजैरौषधैः जागृवी जागरूकौ अनिष्टपरिहारेण निरन्तरं सावधानावित्यर्थः। येयं सरस्वती सा भिषक्समाना सती सीसेन सीसक्रीतेन शष्पद्रव्येण शूषं बलं इन्द्रियं चक्षुरादिपाटवं च दुहे दोग्धि संपादयतीत्यर्थः ॥

[9]नवममन्त्रमाह—इडा सरस्वती भारती इत्येतास्तिस्रो देव्यो नवमप्रयाजदेवताः तास्तिस्रो देवीर्होता यजतु। ताश्च देव्यः इज्यमानाः त्रयः लोकत्रयात्मिकाः त्रिधातवः त्रीणि शरीराणि धारयित्र्यः तत्तल्लोकप्राप्तिरूपात्रिविधफलधारिण्यस्सत्यः अपसः अस्मात्कर्मणः इन्द्रे हिरण्ययं हिरण्मयं रूपं दधुः। किमिव भेषजं न औषधमिव। यथा सर्वोपद्रवशमनहेतुरौषधं एवमिन्द्रे संपाद्यमानमिदं रूपमि-

न्द्राय दधुरिन्द्रियम् । पयस्सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । [10]होता यक्षत्त्वष्टारमिन्द्रमश्विना । भिषजं न सरस्वतीम् । ओजो न जूतिरिन्द्रियम् । वृको न रभसो भिषक् । यशस्सुरया भेषजम् ॥ ५६ ॥ श्रिया न मासरम् । पयस्सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । [11]होता यक्षद्वनस्पतिम् । शमितारꣳ शतक्रतुम् । भीमं न मन्युꣳ राजानं व्याघ्रं नमसाऽ-

त्यर्थः । यावेतावश्विनौ न, याश्चैता इडाद्यास्तिस्रो देव्यः ते सर्वे मिलित्वा इन्द्रार्थं मह इन्द्रियं अत्यधिकं बलं दधुः संपादितवन्तः ॥

[10]दशममन्त्रमाह—दशमप्रयाजदेवस्त्वष्टा । तमिन्द्रमश्विनौ सरस्वतीं च होता यजतु । देवतानामेव दृष्टान्तः । भिषजं न, यथा भेषजमनिष्टनिवारकं तद्वदेते देवा इत्यर्थः । एतद्देवप्रसादात् ओजआदि त्रयं संपद्यते । ओजः कर्मानुष्ठान उत्साहः । जूतिर्जवो वेगः तत्रालस्यराहित्यम् । इन्द्रियं करणपाटवम् । त्रितयसमुच्चयार्थो नकारः । योऽयमस्मिन्कर्मणि वृकोऽस्ति तल्लोम्नामत्र संपादितत्वाल्लोमोपलक्षको वृकशब्दः । स च वृकः रभसो भिषङ्न तीव्रश्चिकित्सक इव हितकारीत्यर्थः । यत्तु मासरं यवसक्तुरूपं द्रव्यं तच्छ्रिया न संपदा सममित्यर्थः ॥

[11]एकादशमन्त्रमाह—एकादशप्रयाजदेवो वनस्पतिः तं होता यजतु । कीदृशम्? शमितारं सर्वोपद्रवशमनहेतुं, शतक्रतुं शत-

श्विना भामम्। सरस्वती भिषक्। इन्द्राय दुह इन्द्रियम्। पयस्सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज ॥ ५७ ॥ [12]होता यक्षदग्निꣳ स्वाहाऽऽज्यस्य स्तोकानाम्। स्वाहा मेदसां पृथक्। स्वाहा छागमश्विभ्याम्। स्वाहा मेषꣳ सरस्वत्यै। स्वाहर्षभमिन्द्राय सिꣳहाय सहसेन्द्रियम्। स्वाहाऽग्निं न भेषजम्। स्वाहा सोममिन्द्रियम्। स्वाहेन्द्रꣳ सुत्रामाणꣳ सवितारं वरुणं

संख्याकक्रतुनिष्पादकं, भीमं भयंकरं, मन्युं क्रोधवन्तं, राजानं मृगराजं सिंहम्, भामं क्रोधवन्तं, व्याघ्रं न व्याघ्रमपि यजत्वित्यन्वयः। सिंहलोम्नां व्याघ्रलोम्नां चात्र हविषि प्रक्षिप्तत्वात्तद्योगोपन्यासः। यावेतावश्विनौ ताभ्यां सहिता सरस्वती इन्द्रार्थमिन्द्रियं दुहे दुग्धे ॥

[12]द्वादशमन्त्रमाह—स्वाहाशब्देन द्वादशप्रयाजाभिमानी देवोऽभिधीयते। यद्यप्येकादशैव प्रायाजा अनुष्ठेयाः तथाऽपि द्वितीयप्रयाजे तनूनपान्नराशंसमन्त्रयोः अधिकारिभेदेन विकल्पितत्वात् द्वादश मन्त्रा अत्राम्नाताः। अतोऽयं द्वादशमन्त्रप्रतिपाद्यो देवः तं स्वाहाशब्देन विवक्षितमग्निं देवं होता यजतु। आज्यस्य स्तोकानां स्तोकान्बिन्दून् स्वाहा सुष्ठु जुहुयात्, मेदसां मेदांसि पृथग्विभज्य स्वाहा सुष्ठु जुहुयात्, छागमश्विभ्यां स्वाहा सुष्ठु जुहुयात्, मेषं

भिषजां पतिम् । स्वाहा वनस्पतिं प्रियं पाथो न भेषजम् । स्वाहा देवा ँ आज्यपान् ॥ ५८ ॥ स्वाहाऽग्नि ँ होत्राज्जुषाणो अग्निर्भेषजम् । पयस्सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । [13]होता यक्षदश्विना सरस्वतीमिन्द्र ँ सु-

सरस्वत्यै जुहुयात्, ऋषभमिन्द्राय जुहुयात्, सिंहाय लोमहेतवे सहसा बलेन सह इन्द्रियं स्वाहा जुहुयात् उद्दिश्य त्यजेदित्यर्थः। भेषजंन औषधमिव वर्तमानमग्निं प्रथमाज्यभागदेवं स्वाहा होमेन तर्पयेत् । इन्द्रियं इन्द्रियपभिवृद्धिहेतुं सोमं द्वितीयाज्यभागदेवं होमेन तर्पयेत् । य एतेऽत्र पुरोडाशा विहिताः "ऐन्द्रमेकादशकपालं निर्वपति सावित्रं द्वादशकपालं वारुणं दशकपालम्" * इति, तानेतानिन्द्रसवितृवरुणान् होमेन तर्पयेत् । तत्रेन्द्रः सुष्ठु रक्षकत्वात्सुत्रामेति विशेष्यते । वरुणोऽनिष्टनिवारकत्वाद्भिषजां पतिरित्युच्यते । वनस्पतिं यूपदेवं होमेन तर्पयेत् । स विशेष्यते प्रियं पाथो न भेषजमिति । यथा प्रियमुदकं तृषाया औषधं एवमयं वनस्पतिरप्यनिष्टनिवारकत्वेनौषधरूपः । ये चाज्यपाः प्रयाजदेवताः ता होमेन तर्पयेत् । योऽयं स्विष्टकृद्देवोऽग्निः तं होमेन तर्पयेत् । होत्राद्धोमात् जुषाणः प्रीतः स्विष्टकृदग्निर्भेषजं क्रतुवैकल्यनिवारणेनौषधस्वरूपः ॥

[13]प्रधानदेवार्थः प्रैषः तमेतं त्रयोदशमन्त्रमाह—यौ देवावश्विनौ, या च सरस्वती, यश्च सुत्रामेन्द्रः तानेतान्मुख्यदेवान् दैव्यो

* सं १-८-२१.

त्रामाणम् । इमे सोमास्सुरामाणः । छागैर्न मेषैः-
रृषभैस्सुताः । शष्पैर्न तोक्मभिः । लाजैर्महं-
स्वन्तः । मदा मासरेण परिष्कृताः । शुक्राः पय-
स्वन्तोऽमृताः । प्रस्थिता वो मधुश्चुतः । तानश्विना
सरस्वतीन्द्रस्सुत्रामा वृत्रहा । जुषन्ताꣳ सौम्यं
मधु । पिबन्तु मदन्तु वियन्तु सोमम् । होत-
र्यज ॥ ५१ ॥

वीर्यं वियन्त्वाज्यस्य होतर्यज नासत्या सरस्व-
ती मधु हिरण्ययं भेषजं वियन्त्वाज्यस्य होतर्य-
जाज्यपानमृताः पञ्च च ॥ ११ ॥

समिधाऽग्निꣳ षट् । तनूनपात्सप्त । नराशꣳ-
समृषिः । इडेडितो यवैरष्टौ । बर्हिस्सप्त । दुरोऽश्वि-

---

होता यजतु पूजयतु । ये चाश्विनसारस्वतैन्द्रग्रहाः त इमे सोमाः सोमसदृशाः, सुरामाणः सुष्ठु रमणीयाः, मेषैः सारस्वतमेषावयवैः ऋषभैः ऐन्द्रर्षभावयवैः छागैर्न आश्विनच्छागावयवैरपि हविर्विशेषैः निमित्तभूतैः सुता उत्पादिताः । यानि व्रीह्यङ्कुरजन्यानि शष्पाणि बाल-तृणानि, यानि चाङ्कुरावस्थापन्नानि तोक्मानि, ये च बीजावस्था लाजाः तैस्त्रिभिरपि द्रव्यैः एते यागा महस्वन्तः तेजस्विनो भासन्ते मदा मदहेतुना मासरेण यवसक्तुद्रव्येण परिष्कृता अलंकृताः शुक्राः

ना नवं । सुपेशंसोषे नक्तमृषिंः । दैव्या होतारा-
सीसैन रसंः । तिस्रस्त्वष्टारमष्टावंष्टौ । वनस्पतिमृ-
षिः । अग्निं त्रयोदश । अश्विना द्वादंश त्रयोदश ।
समिधाऽग्निं बदरैर्बदरैर्यवैरश्विना त्विषिमश्विना न
भैषज२ रूपमश्विना भीमं भामम् ॥

[1]समिद्धो अग्निरश्विना । तप्तो घर्मो विराट्‌सु-
तः । दुहे धेनुस्सरंस्वती । सोम२ शुक्रमिहेन्द्रि-

नर्मला: पयस्वन्तः पयसा युक्ता अमृताः स्वादुत्वेन अमृतसमानाः हे अश्विसरस्वतीसुत्रामेन्द्ररूपा देवाः! वो युष्मदर्थं मधुश्चुतः माधुर्यं रसस्राविणो ग्रहाः प्रस्थिताः, तान्ग्रहान् अश्व्यादय एते देवाः जुषन्तां सेवन्तां,तत्रत्यं सौम्यं रमणीयं मधु मधुरं रसं पिबन्तु । ततो मदन्तु हृष्यन्तु । ततः सोमं वियन्तु सोमत्वेन स्वीकुर्वन्तु । तदर्थं हे मानुष होतः! यज याज्यां पठ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-
यजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
षष्ठप्रपाठके एकादशोऽनुवाकः ॥

[1]एकादशे प्रयाजप्रैषा उक्ताः । द्वादशे प्रयाजयाज्या आप्रियोऽभिधीयन्ते । तत्र प्रथमामाह—हे अश्विनौ! समिद्धः संदीप्तः समिन्नामकः प्रथमप्रयाजदेवोऽग्निः तप्तो घर्मः संतप्तमवर्ग्यसदृशः विराट् विशेषेण राजमानः सुत उत्पन्नः । तथा धेनुः प्रीणयित्री सरस्वती

यम् । [2]तनूपा भिषजा सुते । अश्विनोभा सरस्वती । मध्वा रजाꣳसीन्द्रियम् । इन्द्राय पथिभिर्वहान् । [3]इन्द्रायेन्दुꣳ सरस्वती । नराशꣳसेन नग्नहुः ॥ ६० ॥ अधातामश्विना मधु । भेषजं भिषजा सुते । [4]आजुह्वाना सरस्वती । इन्द्रायेन्द्रि-

शुक्रं शुद्धं इन्द्रियं इन्द्रियवृद्धिहेतुं सोमं सोमसदृशं हविः दुहे दोग्धि संपादयति ॥

[2]द्वितीयामाह—तनूपाः द्वितीयप्रयाजदेवः भिषजौ चिकित्सकावश्विनावुभौ सरस्वती इत्येते देवाः सुते प्रवृत्ते कर्मणि मध्वा मधुना रसेन युक्तानि रजांसि रञ्जकानि हवींषि विविधमिन्द्रियं हविर्जन्यं सामर्थ्यं च इन्द्रार्थं पथिभिः अनुष्ठानरूपैर्मार्गैः वहान् वहन्तु संपादयन्तु ॥

[3]तृतीयामाह—नराशंसः मन्त्रपाठक्रमेण तृतीयप्रयाजदेवः तेन सहिता सरस्वती इन्द्रार्थं इन्दुं ऐश्वर्यकरं हविस्सारं नग्नहुः एतच्छब्दवाच्यं स्थूलयवपिष्टसक्तुरूपं संपादयतीति शेषः । अश्विना भिषजा चिकित्सकावश्विनौ सुते प्रवृत्तेऽस्मिन्कर्माणि मधु भेषजं मधुरमौषधरूपं हविः अधातां संपादितवन्तौ ॥

[4]चतुर्थीमाह—चतुर्थप्रयाजदेवता इडाः ताभिः सहिता सरस्वती आजुह्वाना स्वयं कर्मण्याहूयमाना इन्द्रार्थमिन्द्रियाणि वीर्यं च संपादयितुं योग्यं हविः दधात्विति शेषः । अश्विनौ देवौ ताभिरिडा-

याणि वीर्यम् । इडाभिरश्विनाविषम् । समूर्ज॑स॑रयिं दधुः । [5]आश्विना नमुचेस्सुतम् । सोम॑शुक्रं परिस्रुता । सरस्वती तमाभरत् । बर्हिषेन्द्राय पातवे ॥ ६१ ॥ [6]कवष्यो न व्यचस्वतीः । अश्विभ्यां न दुरो दिशः । इन्द्रो न रोदसी दुघे । दुहे कामान्थ्सरस्वती । [7]उषासा नक्तमाश्विना । दिवेन्द्र॑सायमिन्द्रियैः । संजानाने सुपेशसा ।

भिस्सह इषमन्नं दधुः संपादितवन्तः । ऊर्जं क्षीरादिरसं संपादितवन्तः । रयिं धनं संपादितवन्तः ॥

[5]पञ्चमीमाह—बर्हिश्शब्दाभिधेयः पञ्चमप्रयाजदेवः । हे अश्विनौ! तेन बर्हिषा युक्ता सरस्वती सुतं अभिषुतं शुक्रं निर्मलं सोमं सोमत्वेन भावितं रसं नमुचेः सकाशात् आभरत् आहरत् । किमर्थं? इन्द्राय इन्द्रार्थं पातवे पातुम् ॥

[6]षष्ठीमाह—दुरश्शब्दाभिधेया या द्वाराभिमानिन्यः षष्ठप्रयाजदेवताः कवष्यो न कवाटवत्य इव व्यचस्वतीः अवकाशवत्यः अश्विभ्यां न अश्विभ्यामपि सह वर्तन्त इति शेषः । इन्द्रो न इन्द्रोऽपि रोदसी दुघे द्यावापृथिव्यौ दोग्धि । सरस्वती कामान् दुहे दोग्धि ॥

[7]सप्तमीमाह—हे अश्विनौ! उषासानक्तशब्दवाच्ये अहोरात्राभिमानिन्यौ सप्तमप्रयाजदेवते इन्द्रं दिवा इन्द्रियैः संजानाने संयोजयेते । सायं सुपेशसा शोभनरूपेण संजानाने संयोजयेते । तथा सरस्वत्या समञ्जाते संयोजयेते ॥

समञ्जाते सरस्वत्या । [8]पातं नो अश्विना दिवा । पाहि नक्तꣳ सरस्वति ॥ ६२ ॥ दैव्या होतारा भिषजा । पातामिन्द्रꣳ सचा सुते । [9]तिस्रस्त्रेधा सरस्वती । अश्विना भारतीडा । तीव्रं परिस्रुता सोमम् । इन्द्राय सुषवुर्मदम् । [10]अश्विना भेषजं मधु । भेषजं नस्सरस्वती । इन्द्रे त्वष्टा यशश्श्रियम् । रूपꣳरूपमधुस्सुते । [11]ऋतुथेन्द्रो वनस्पतिः ।

[8]अष्टमीमाह—हे अश्विनौ! दिवा नोऽस्मान्पातम् । हे सरस्वति! नक्तमस्मान्पाहि । दैव्यहोतृशब्दवाच्यौ हे अष्टमप्रयाजदेवौ! चिकित्सकौ सचा परस्परं संयुक्तौ सुते प्रवृत्तेऽस्मिन्कर्मणि इन्द्रं पातम् ॥

[9]नवमीमाह—हे अश्विनौ! सरस्वती भारती इडा इत्येतास्तिस्रो नवमप्रयाजदेवताः त्रेधा लोकत्रयरूपेण वर्तमानाः परिस्रुता परिस्रवन्त्या सुरया सहितं तीव्रं तीव्रगन्धोपेतं सोमं सोमसदृशं मदं मदकरं हविः इन्द्राय सुषवुः इन्द्रार्थं संपादितवत्यः ॥

[10]दशमीमाह—यावेतावश्विनौ, या च सरस्वती, योऽपि त्वष्टा दशमप्रयाजदेवः ते सर्वे मिलित्वा भेषजं सर्वेषामौषधरूपं मधु मधुरं नो भेषजं अस्माकं विशेषत औषधरूपं यशः श्रियं यशःप्रदं श्रीप्रदं रूपंरूपं बहुरूपकरं इदं हविः सुते प्रवृत्तेऽस्मिन्कर्माणि इन्द्रेऽस्मिन् अधुः स्थापितवन्तः ॥

[11]एकादशीमाह—योऽयं वनस्पतिरेकादशप्रयाजरूपो देवः सोऽ-

शशमानः परिस्रुता । कीलालमश्विभ्यां मधु । दुहे धेनुस्सरस्वती । [12]गोभिर्न सोममश्विना । मासरेण परिष्कृता । समधाताꣳ सरस्वत्या । स्वाहेन्द्रे सुतं मधु ॥ ६३ ॥

नग्नहुः पातवे सरस्वत्यधुस्सुतेऽष्टौ च ॥ १२ ॥

यमृतुथा तस्मिंस्तस्मिन्नृतौ इन्द्र इन्द्रेणाभिन्नस्सन् परिस्रुता परितः स्रवन्त्या सुरया सह शशमानः शश्वद्वर्तते । अश्विभ्यां युक्ता सरस्वती धेनुः प्रीणयित्री सती कीलालं उदकसदृशं मधु मधुरं हविर्दुहे दोग्धि ॥

[12]द्वादशीमाह—हे अश्विनौ ! गोभिर्न गवादिभिः ऋषभच्छागमेषैरपि सहितं मासरेण परिष्कृता यवसक्तुद्रव्येणालंकृतं सोमं सोमसदृशं मधु मधुरं इदं हविः सरस्वत्या चरमप्रयाजदेवेन स्वाहाशब्दवाच्येन च सहितौ युवां इन्द्रे समधातां सम्यक्स्थापितवन्तौ । तदेवं विकल्पितेन द्वितीयप्रयाजेन सहितानां प्रयाजानां याज्यारूपा द्वादश मन्त्रा अभिहिताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके षष्ठप्रपाठके द्वादशोऽनुवाकः ॥

अश्विना हविरिन्द्रियम् । नमुचेर्धिया सरस्वती । आ शुक्रमासुराद्वसु । मघमिन्द्राय जभ्रिरे । [2]यमश्विना सरस्वती । हविषेन्द्रमवर्धयन् । स बिभेद वलं* मघम् । नमुचावासुरे सचा । [3]तमिन्द्रं पशवस्सचा । अश्विनोभा सरस्वती ॥६४॥

[1]द्वादशे प्रयाजयाज्या आप्रियोऽभिहिताः । त्रयोदशे वपादीनां याज्यानुवाक्या उच्यन्ते—त्रिपशुके वपापुरोडाशहविर्योगानां पुरोनुवाक्यास्ता एव याज्याः । तत्र तिसृणां वपानां तिस्र ऋचः तासां चैकैका कस्यांचिद्वपायां पुरोनुवाक्या कस्यांचिद्याज्येत्येवं द्विरूपा । तत्र प्रथमायां पुरोनुवाक्यां तृतीयायां याज्यामृचमाह—यावेतावश्विनौ, या च सरस्वती ते त्रयो मिलित्वा धिया स्वबुद्ध्या इन्द्रार्थं नमुचिनाम्नोऽसुरात् हविराजभ्रिरे आहृतवन्तः । कीदृशं हविः? इन्द्रियं इन्द्रियवर्धकं शुक्रं निर्मलं वसु निवासकारणं मघं महनीयम् ॥

[2]अथ प्रथमायां याज्यां द्वितीयस्यां पुरोनुवाक्यामृचमाह—अश्विनावुभौ सरस्वती चेत्येते त्रयो हविषा यमिन्द्रमवर्धयन् सोऽयमिन्द्रः नमुचिनाम्नि आसुरे सचा संबद्धं मघं महनीयं वलं* बलनामानमसुरं बिभेद विदारितवान् ॥

[3]अथ द्वितीयस्यां याज्यां तृतीयस्यां पुरोनुवाक्यामाह—छागमेषर्षभा य एते पशवः, यावुभावश्विनौ, या च सरस्वती ते सर्वे सचा परस्परं संबद्धाः इन्द्रियं इन्द्रियवृद्धिहेतुं यज्ञं हविषा दधानाः तमिन्द्रमभ्यनूषत ॥

* बलं.

दधा॑ना अ॒भ्य॑नूषत । ह॒विषा॑ य॒ज्ञमि॑न्द्रि॒यम् । [4]य इन्द्र॑ इन्द्रि॒यं द॒धुः । स॒वि॒ता वरु॑णो॒ भगः॑ । स सु॒त्रामा॑ ह॒विष्प॑तिः । यज॑मानाय सश्चत । [5]स॒वि॒ता वरु॑णो॒ दध॑त् । यज॑मानाय दा॒शुषे॑ । आद॑त्त॒ नमु॑चे॒र्वसु॑ । सु॒त्रामा॒ बल॑मिन्द्रि॒यम् ॥ ६५ ॥ [6]वरु॑णः क्ष॒त्रमि॑न्द्रि॒यम् । भगे॑न सवि॒ता श्रिय॑म् । सु॒त्रामा॒

[4] अथ त्रिषु पुरोडाशेषु पूर्ववत्तिस्र ऋच आम्नाताः । तत्र प्रथमस्य पुरोडाशस्य पुरोनुवाक्यां तृतीयस्य याज्यामृचमाह—इन्द्रसवितृवरुणाः पुरोडाशदेवता भगोऽपि तत्सहचारी कश्चित् । ये यस्मिन् इन्द्रे सवितृवरुणभगा इन्द्रियं दधुः संपादितवन्तः सोऽयमिन्द्रः सुत्रामा सुष्ठु रक्षकः हविष्पतिः हविषां पालकः यजमानार्थं सश्चत संबद्धोऽभूत् ॥

[5] अथ प्रथमस्य याज्यां द्वितीयस्य पुरोनुवाक्यामृचमाह—यः सविता सोऽयं दाशुषे हविर्दत्तवते यजमानाय दधत् अपेक्षितं संपादयतु । तथा च वरुणोऽपि संपादयतु । सुत्रामा इन्द्रः बलमिन्द्रियं बलेन्द्रिययोः कारणं वसु हविस्स्वरूपं धनं नमुचेः सकाशादादत्त ॥

[6] अथ द्वितीयस्य याज्यां तृतीयस्य पुरोनुवाक्यामृचमाह—योऽयं वरुणः सोऽयं क्षत्रं बलं इन्द्रियं च दधाति । भगेन सह सविता श्रियं दधाति । सुत्रामा इन्द्रः यशसा सह बलं दधाति । त एते त्रयो देवाः त्रिविधं दधानाः यजमानस्य यज्ञमाशत प्राप्तवन्तः ॥

यशसा बलम् । दधाना यज्ञमाशत । [7]अश्विना गोभिरिन्द्रियम् । अश्वेभिर्वीर्यं बलम् । हविषेन्द्रꣳ सरस्वती । यजमानमवर्धयन् । [8]ता नासत्या सुपेशसा । हिरण्यवर्तनी नरा । सरस्वती हविष्मती । इन्द्र कर्मसु नोऽवत । [9]ता भिषजा सुकर्मणा । सा सुदुघा सरस्वती । स वृत्रहा शतक्रतुः ।

---

[7]अथ हविषस्तिस्र आम्नाताः । तत्र प्रथमस्य पुरोनुवाक्यां तृतीयस्य याज्यामाह—अश्विनोभौ सरस्वती च इत्येते त्रयो देवाः गोभिरिन्द्रियं संपाद्य अश्वेभिर्वीर्यं बलं च संपाद्य अनेनैन हविषा इन्द्रं यजमानं च अवर्धयन् । हविर्भोक्तृत्वमिन्द्रस्य वृद्धिः । हविर्दातृत्वं यजमानस्य वृद्धिः ॥

[8]अथ प्रथमस्य याज्यां द्वितीयस्य पुरोनुवाक्यामृचमाह—ता नासत्या तावश्विनौ सुपेशसा सुरूपौ हिरण्यवर्तनी आभरणैस्सह वर्तमानौ नरा जगद्व्यवहारस्य नेतारौ । सरस्वती चात्र हविष्मती हविर्युक्ता । हे इन्द्र ! त्वं च सरस्वती च अश्विनौ च इत्येते यूयं अनुष्ठीयमानेष्वेतेषु कर्मसु नोऽस्मान् अवत रक्षत ॥

[9]अथ द्वितीयस्य याज्यां तृतीयस्य पुरोनुवाक्यामृचमाह—ता भिषजा तौ चिकित्सकावश्विनौ सुकर्मणा शोभनकर्मयुक्तौ सा सरस्वती सुदुघा सुष्ठु दोहनयुक्ता स च वृत्रहा इन्द्रः शतक्रतुः शतसंख्याक-

इन्द्राय दधुरिन्द्रियम् ॥ ६६ ॥

उभा सरस्वती बलमिन्द्रियं नरा षट्च ॥१३॥

[1] देवं बर्हिस्सरस्वती । सुदेवमिन्द्रे अश्विना । तेजो न चक्षुरक्ष्योः । बर्हिषा दधुरिन्द्रियम् । वसु-

क्रतुयुक्तः । ते सर्वेऽपि इन्द्रार्थमिन्द्रियं संपादितवन्तः । इन्द्रोऽपि स्वार्थे प्रवर्तत इति भावः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-
यजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
षष्ठप्रपाठके त्रयोदशोऽनुवाकः



[1] त्रयोदशे वपापुरोडाशहविषां याज्यानुवाक्या उक्ताः । अथ चतुर्दशेऽनुयाजानां मैत्रावरुणप्रैषा उच्यन्ते । तत्र प्रथममन्त्रमाह— बर्हिश्शब्दवाच्यं प्रथमानुयाजदेवतास्वरूपं, तच्च देवं द्योतमानं सुदेवं शोभना देवा यस्य सर्वदेवप्रियमित्यर्थः । तादृशं यद्बर्हिः, या च सरस्वती, यौ चाश्विनौ देवौ ते सर्वेऽपि अक्ष्योः अक्षिगोलकयोः तेजश्चक्षुर्न तेजोरूपं चक्षुरिन्द्रियं यथा स्थापयन्ति तथा बर्हिषा बर्हिर्दे-वतामुखेन इन्द्रे इन्द्रियं दधुः स्थापितवन्तः । वसुधेयस्य द्रव्याधार-कस्य देवस्य वसुवने धनदाननिमित्तं ते बर्हिरादयो देवाः वि-यन्तु आज्यं पिबन्तु । तदर्थं हे होतः ! यज याज्यां पठ ॥

वनै वसुधेयस्य वियन्तु यजं । [2]देवीर्द्वारो अश्विना । भिषजेन्द्रे सरस्वती । प्राणं न वीर्यं नसि । द्वारो दधुरिन्द्रियम् । वसुवनै वसुधेयस्य वियन्तु यजं ॥ ६७ ॥ [3]देवी उषासावश्विना । भिषजेन्द्रे सरस्वती । बलं न वाचमास्ये । उषाभ्यां दधुरिन्द्रियम् । वसुवनै वसुधेयस्य वियन्तु यजं । [4]देवी जोष्ट्री अश्विना । सुत्रामेन्द्रे सरस्वती । श्रोत्रं न कर्णयोर्यशः । जोष्ट्रीभ्यां दधुरिन्द्रियम् । वसुवनै

---

[2]द्वितीयमन्त्रमाह—द्वार्शब्दवाच्या द्वितीयानुयाजदेवताः ताः देवीः द्योतमाना अश्विनौ भिषजौ चिकित्सकौ सरस्वती च इत्येते देवाः नसि नासिकायां वीर्यं वीर्यहेतुं प्राणं न प्राणमिव यथा प्राणवायुं नासिकायां स्थापयन्ति तथा द्वारः द्वार्देवता इतरैस्साहिताः इन्द्रे इन्द्रियं दधुः ॥

[3]तृतीयमन्त्रमाह—उषश्शब्दवाच्ये तृतीयानुयाजदेवते । देवी द्योतनात्मिके उभे भिषजावश्विनौ सरस्वती च आस्ये मुखे वाचं वागिन्द्रियं बलं न बलमिव यथा मुखे वागिन्द्रियसामर्थ्यं स्थापितवन्तः तथैव सर्वे देवा उषाभ्यां उषादेवतामुखेन इन्द्रे इन्द्रियं दधुः ॥

[4]चतुर्थमन्त्रमाह—जोष्ट्रीशब्दवाच्ये चतुर्थानुयाजदेवते । ते च देवी देव्यौ द्योतनात्मिके उभे अश्विनौ द्वौ सुत्रामाख्य इन्द्रः सरस्वती च इत्येता देवताः कर्णयोः कर्णगोलकयोः यशः यशःकारणं श्रोत्रं न

वसुधेयस्य वियन्तु यजं ॥ ६८ ॥ [5]देवी ऊर्जाहुती दुघे सुदुघे । पयसेन्द्रꣳ सरस्वत्यश्विना भिषजाऽवत । शुक्रं न ज्योतिस्स्तनयोराहुती धत्त इन्द्रियम् । वसुवने वसुधेयस्य वियन्तु यजं । [6]देवा देवानां भिषजा । होताराविन्द्रमश्विना । वषट्कारैस्सरस्वती । त्विषिं न हृदये मतिम् । होतृभ्यां दधुरिन्द्रियम् । वसुवने वसुधेयस्य वि-

---

श्रोत्रेन्द्रियमिव यथा श्रोत्रेन्द्रियं कर्णगोलकयोः स्थापयन्ति तथा जोष्ट्रीभ्यां जोष्ट्रीदेवतामुखेन तदिन्द्रे इन्द्रियं दधुः ॥

पञ्चममन्त्रमाह—ऊर्जाहुतिशब्दवाच्ये पञ्चमानुयाजदेवते । देवी द्योतनात्मिके दुघे अभीष्टफलस्य दोग्ध्र्यौ सुदुघे सुष्ठु दोग्धुं शक्ये तथाविधे उभे देव्यौ सरस्वती भिषजावश्विनौ च इत्येते यूयं पयसा हविषा इन्द्रमवत रक्षत । आहुतिदेव्यौ स्तनयोरुभयोः शुक्रं शुद्धं ज्योतिर्न ज्योतिरिव यथा स्त्रीस्तनयोर्ज्योतीरूपं क्षीरं स्थापयन्ति तद्वदिन्द्रियं धत्तः ॥

[6]षष्ठमन्त्रमाह—होतृशब्दवाच्यौ षष्ठानुयाजदेवौ । देवा द्योतनात्मकौ यौ विद्येते, यौ च देवानां भिषजावश्विनौ, या च सरस्वती वषट्कारदेवैः सहिता ते सर्वेऽपि यूयमिन्द्रमवतेति शेषः । पुनरपि ते सर्वे हृदये हृदयकमले मतिं बुद्धिरूपां त्विषिं न दीप्तिमिव यथा बुद्धिरूपां दीप्तिं हृदये स्थापयन्ति तथा होतृभ्यां होतृदेवमुखेन इन्द्रे इन्द्रियं दधुः ॥

यन्तु यजं ॥ ६९ ॥ [7]देवीस्तिस्रस्तिस्रो देवीः । सरस्वत्यश्विना भारतीडा । शूषं न मध्ये नाभ्याम् । इन्द्राय दधुरिन्द्रियम् । वसुवने वसुधेयस्य वियन्तु यजं । [8]देव इन्द्रो नराशꣳसः । त्रिवरूथस्सरस्वत्याऽश्विभ्यामीयते रथः । रेतो न रूपममृतं जनित्रम् । इन्द्राय त्वष्टा दधदिन्द्रियाणि । वसुवने वसुधेयस्य वियन्तु यजं ॥ ७० ॥ [9]देव इन्द्रो वन-

[7] सप्तममन्त्रमाह—सरस्वती भारती इडा इत्येतास्तिस्रः सप्तमानुयाजदेवताः । ताश्च परस्परं कदाचिदप्यवियुक्ता इति वक्तुं पुनस्तिस्रो देवीरित्युक्तम् । अथवा एकैकस्या देवताया मूर्तित्रयविवक्षया तदुक्तिः । ता एता देवताः सरस्वत्यश्विनौ च इत्येते सर्वे शरीरस्य मध्ये नाभ्यां शूषं न बलमिव यथा बलं स्थापयन्ति तथेन्द्रार्थं इन्द्रियं दधुः ॥

[8] अष्टममन्त्रमाह—नराशंसाख्योऽष्टमानुयाजदेवः । स च देवो द्योतनात्मक इन्द्रः परमैश्वर्ययुक्तः त्रिवरूथः सेनात्रययुक्तः रथः रथयुक्तः । स च सरस्वत्याऽश्विभ्यां च सह ईयते व्याप्रियते, रूपं रूपसंपादकं अमृतं सुखकारणं जनित्रं प्रजोत्पादकं रेतो न रेत इव यथा रेतः स्वस्थाने प्रापयन्ति तथेन्द्राय इन्द्रार्थं अयं त्वष्टा नराशंसाख्यो देव इन्द्रियाणि दधत् संपादयतु ॥

[9] नवममन्त्रमाह—नवमानुयाजदेवो वनस्पतिशब्दवाच्यः । स च देवो द्योतनात्मक इन्द्र इन्द्रेण सहितः हिरण्यपर्णः सुवर्णपत्रः

स्पतिः । हिरण्यपर्णो अश्विभ्याम् । सरस्वत्यास्सुपिप्पलः । इन्द्राय पच्यते मधु । ओजो न जूतिर्ऋषभो न भामम् । वनस्पतिर्नो दधदिन्द्रियाणि । वसुवने वसुधेयस्य वियन्तु यज । [10]देवं बर्हिर्वारितीनाम् । अध्वरे स्तीर्णमश्विभ्याम् । ऊर्णम्रदास्सरस्वत्याः ॥ ७१ ॥ स्योनमिन्द्र ते सदः । ईशायै मन्युꣳ राजानं बर्हिषा दधुरिन्द्रियम् । वसुवने वसुधेयस्य वियन्तु यज । [11]देवो अग्निस्स्विष्ट-

अश्विभ्यां देवाभ्यां च युक्तः सरस्वत्याश्च संबन्धी सुपिप्पलः शोभनफलोपेत इन्द्रार्थमस्मिन्यज्ञे मधु मधुरं हविः पच्यते । ओजो न जूतिं यथा शरीरमध्ये बलं शक्तिवेगमुत्पादयति, ऋषभो न भामं यथा लोके कश्चिद्वृषभो दृप्तः क्रोधमुत्पादयति तद्वदयं वनस्पतिः नः अस्मदर्थं इन्द्रियाणि दधत् संपादयतु ॥

[10]दशममन्त्रमाह—दशमानुयाजदेवस्वरूपं बर्हिर्नामकं, तच्च देवं द्योतनात्मकं वारितीनां जलप्राप्तीनां संबन्धि । यत्र भूमिर्जलेन सिच्यते तत्र बर्हिर्जायते । तच्चाश्विभ्यां अध्वरे यागे स्तीर्णं प्रसारितं ऊर्णम्रदाः कम्बलवन्मृदु सरस्वत्याः संबन्धि । हे इन्द्र! तादृशं बर्हिः ते तव स्योनं सुखकरं सदः उपनिवेशनस्थानं ईशायै जगदीश्वररूपेन्द्रदेवतायै मन्युं वैरिविषयं क्रोधं राजानं शरीरदीप्तिं इन्द्रियं चक्षुरादिपाटवं च बर्हिषा बर्हिर्देवतामुखेन दधुः सरस्वत्यादयः संपादितवत्यः ॥

[11]एकादशमन्त्रमाह—एकादशानुयाजदेवः स्विष्टकृच्छब्दवाच्योऽ-

कृत् । देवान्यंक्षद्यथायथम् । होतारा॒विन्द्रम॒श्विना । वा॒चा वाच॒ꣳ सर॑स्वतीम् । अ॒ग्निꣳ सोम॑ꣳ स्विष्ट॒कृत् । स्वि॑ष्ट॒ इन्द्र॑स्सु॒त्रामा॑ सवि॒ता वरु॑णो भि॒षक् । इ॒ष्टो दे॒वो वन॒स्पति॑ः । स्वि॑ष्टा दे॒वा आ॑ज्य॒पाः । इ॒ष्टो अ॒ग्निर॒ग्निना॑ । होता॑ हो॒त्रे स्वि॑ष्ट॒कृत् । यशो॒ न द॒धदि॑न्द्रि॒यम् । ऊर्ज॒मप॑चिति॒ꣳ स्व॒धाम् । व॒सु॒वने॑ वसु॒धेय॑स्य वियन्तु॒ यज॑ ॥ ७२ ॥

द्वारो॑ दधुरिन्द्रि॒यं व॑सु॒वने॑ वसु॒धेय॑स्य वियन्तु॒ यज॒ जोष्ट्री॑भ्यां दधुरिन्द्रि॒यं व॑सु॒वने॑ वसु॒धेय॑स्य वि॒यन्तु॒ यज॒ होतृ॑भ्यां दधुरिन्द्रि॒यं व॑सु॒वने॑ वसु॒धेय॑स्य वियन्तु॒ यजे॑न्द्रि॒याणि॑ वसु॒वने॑ वसु॒धेय॑स्य वि॒यन्तु॒ यज॒ सर॑स्वत्या॒ वन॒स्पति॒ष्षट्च॑ ॥ १४ ॥

दे॒वं ब॒र्हिर्दे॒वीर्द्वारो॑ दे॒वी उ॒षासा॑व॒श्विना॑ दे॒वी जोष्ट्री॑

ग्निः । सोऽयं देवः द्योतनात्मकः अन्यान्देवान्यथायथं यक्षत् यद्यस्य योग्यं तं तेन पूजितवान् । कं कं पूजितवानिति तदुच्यते—होतारौ दैव्यमानुषरूपौ देवौ स्वयं देहं धृत्वा वाचा मन्त्रेणेन्द्रं देवम्, अश्विनौ द्वौ देवौ वाचं सरस्वतीं वाग्रूपां सरस्वत्याख्यां देवतां पूजितवान् । तथा स्विष्टकृदयं अग्निं सोमं च उभावाज्यभागदेवौ पूजितवान् । सुत्रामा इन्द्रः स्विष्टः सुष्ठु पूजितः ।

देवी ऊर्जाहुती देवा देवानां भिषजां वषट्कारैर्देवी-स्तिस्रस्तिस्रो देवीस्सरस्वती देव इन्द्रो नराश१ँसो देव इन्द्रो वनस्पतिर्देवं बर्हिर्वारितीनां देवो अग्नि-स्स्विष्टकृद्देवान् ॥

समिधाऽग्निं देवं बर्हिस्सरस्वत्यश्विना सर्वे वियन्तु । द्वारस्तिस्रस्सर्वे वियन्तु । अज इन्द्रमो-जोऽग्निपरस्सरस्वतीम् । नक्तंपूर्वस्सरस्वति । अ-न्यत्र सरस्वती । भिषक्पूर्वं दुहे इन्द्रियम् । अ-न्यत्र दधुरिन्द्रियम् । सौत्रामण्या१ँ सुतासुती । अज्ञन्त्ययं यजमानः ॥

सविता च स्विष्टः । भिषग्रूपो वरुणोऽपि स्विष्टः । तथा यूप-देवो वनस्पतिरिष्टः । आज्यपाः प्रयाजानुयाजदेवाः स्विष्टाः । दैव्यो होता योऽयमग्निः सोऽयमनेनाग्निनेष्टः । स्विष्टकृदाख्योऽ-यमग्निः होत्रे होमकर्त्रे यजमानाय यशो न यश इव इन्द्रियं दधत् संपादयति । तथोर्जं क्षीरादिरसं संपादयति । तथाऽपचितिं पूजां संपादयति । तथा स्वधां अन्नं च संपादयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके षष्ठप्रपाठके चतुर्दशोऽनुवाकः.

[1]अग्निम॒द्य होता॑रमवृणीत । अ॒यꣳ सु॒तासु॑ती यज॑मानः । पच॒न्प॒क्तीः । पच॒न्पु॒रो॒डाशा॑न् । गृ॒ह्ण॒न्ग्रहा॑न् । ब॒ध्नन्न॒श्विभ्यां॒ छाग॒ꣳ सर॑स्वत्या॒ इन्द्रा॑य । ब॒ध्नन्थ्सर॑स्वत्यै मे॒षमिन्द्रा॑या॒श्विभ्या॑म् । ब॒ध्नन्निन्द्रा॑यर्ष॒भम॒श्विभ्या॒ꣳ सर॑स्वत्यै । सू॒प॒स्था अ॒द्य दे॒वो वन॒स्पति॑रभवत् । अ॒श्विभ्यां॒ छागे॑न॒ सर॑स्वत्या॒ इन्द्रा॑य ॥ ७३ ॥ सर॑स्वत्यै मे॒षेणेन्द्रा॑या॒श्विभ्या॑म् । इन्द्रा॑यर्ष॒भेणा॒श्विभ्या॒ꣳ सर॑स्वत्यै । अ॒क्ष॒ꣳस्तान्मे॑-

[1]चतुर्दशे प्रधानपशुत्रयार्था अनूयाजप्रैषा उक्ताः । अथ पञ्चदशे सूक्तवाकप्रैषोऽभिधीयते—अद्यास्मिन्कर्मणि अयं यजमानः अग्निरूपं देवं होतारं होमनिष्पादकं पुरुषं अवृणीत वृतवान् । कीदृशो यजमानः ? सुतासुती, सुतमभिषुतं सोमसुरादि, असुतमभिषवरहितं पयःप्रभृति तदुभयमस्यास्तीति सुतासुती । किं कुर्वन् ? पक्तीः पक्तव्यानि द्रव्याणि पचन् पक्वानि कुर्वन् तथा पुरोडाशान् ऐन्द्रसावित्रादीन् पचन्पक्वान्कुर्वन् ग्रहानाश्विनादीन् गृह्णन् पात्रेषु स्वीकुर्वन् योऽयं छागः तं सरस्वतीन्द्रयुक्ताभ्यामश्विभ्यां सर्वदेवार्थं यूपे बध्नन् तथा यो मेषः तं इन्द्राश्वयुक्तायै मुख्यायै सरस्वत्यै बध्नन् तथा यो वृषभः तमश्वसरस्वतीयुक्ताय मुख्यायेन्द्राय बध्नन् अद्यास्मिन्दिने वनस्पतिर्देवो यूपात्मकः सूपस्था अभवत् सुष्ठु स्थिरावस्थानयुक्तोऽभवत् । सरस्वतीन्द्रयुक्ताभ्यां मुख्याभ्यामाश्विभ्यां छागेन पशुना यजमानः परिचरति । इन्द्राश्वियुक्तायै मुख्यायै सरस्वत्यै मेषेण पशुना परिचरति ।

दुस्तः प्रति पचुताऽग्रभीषुः । अवीवृधन्त ग्रहैः । अपातामुश्विना सरस्वुतीन्द्रस्सुत्रामा वृत्रहा । सोमान्त्सुराम्णः । उपो उक्थामुदाश्श्रौद्विमदा अदन् । अवीवृधन्ताङ्गूषैः । त्वामुद्यऋष आर्षेयऋषीणां नपादवृणीत । अयꣳ सुतासुती यजमानः । बहुभ्य आसंगतेभ्यः । एष मे देवेषु वसु वार्या यक्ष्यत इति । ता या देवा देवदानान्यदुः । तान्य-

अश्विसरस्वतीयुक्तायेन्द्राय वृषभेण पशुना परिचरति । तान्पशूनिन्द्रादयो देवा अक्षन् अशितवन्तः । मेदस्तः मेदांसि पचता पक्वानि हवींषि प्रत्यग्रभीषुः प्रतिगृहीतवन्तः । ग्रहैरनुष्ठितैः अवीवृधन्त वर्धितवन्तः । अश्विनौ देवौ सोमान् सुराम्णः सुरासदृशानि सोमद्रव्याणि अपातां पीतवन्तौ । सरस्वती च पीतवती । सुत्रामा वृत्रहेन्द्रश्च पीतवान् । उपो समीपे उक्थामदाः शस्त्रवद्धर्षहेतुमन्त्रान् श्रौदश्रौषुः । विमदाः विशेषेण हर्षयुक्ता अदन् भक्षितवन्तः । आङ्गूषैरङ्गविशेषैः अवीवृधन्त सम्यग्वर्धितवन्तः । अद्यास्मिन्कर्मणि हे ऋषे ! अतीन्द्रियार्थदर्शिन् ? हे होतः ! त्वामयं यजमानोऽवृणीत वृतवान् । आर्षेय ! हे ऋषिकुलोत्पन्न ! ऋषीणां नपात् ! हे ऋषिनप्तः ! गोत्रप्रवर्तकमृषिं प्रति चतुर्थ ! इत्यर्थः । एतदुभयमप्यृषिविशेषणम् । कीदृशो यजमानः ? सुतासुती अभिषुतानभिषुतद्रव्यद्वयवान् । किमर्थं वृतवानिति तदुच्यते—आसंगतेभ्यो बहुभ्य आगत्यास्मिन्कर्मणि संबद्धानां बहूनां देवानामर्थे । केनाभिप्रायेण वृतवानिति

स्मा आ च शास्स्व । आ च गुरस्व । इषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः । सूक्तवाकाय सूक्ता ब्रूहि ॥ ७४ ॥

इन्द्राय यजमानस्सप्त च ॥ १५ ॥

सोऽभिप्राय उच्यते—एष होता मे वसु वारि पुरोडाशरूपं वसु पयस्सुरारूपं वारि च देवेष्वायक्ष्यते समन्ताद्यागं करिष्यतीति । ता या देवदानानि यानि तानि देवेभ्यो दत्तानि हवींषि देवा अदुः ऋत्विजो दत्तवन्तः तानि सर्वाणि हविष्फलानि अस्मै यजमानाय आशास्व च सिध्यान्त्वित्येवमाशिषं च कुरु । आगुरस्व च तत्सिद्ध्यर्थमुद्यमं च कुरु । हे होतः! इषितो मयाऽभिलषितः प्रेषितश्चासि । भद्रवाच्याय कल्याणवचनाय प्रेषितो मानुषो होता त्वं सूक्तस्य वचनं वाको यस्य देवस्य सोऽयं देवः सूक्तवाकः तस्मै सूक्तवाकदेवाय सूक्ता ब्रूहि "इदं द्यावापृथिवी" * इत्येतदनुवाकोक्तानि शोभनानि वचनानि कथय ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके षष्ठप्रपाठके पञ्चदशोऽनुवाकः

---

*तै. ब्रा. ३-५-१०.

[1]उशन्तस्त्वा हवामह [2]आ नो अग्ने सुकेतुना। [3]त्वꣳ सोम महे भगं [4]त्वꣳ सोम प्रचिकितो मनीषा। [5]त्वया हि नः पितरस्सोम पूर्वे [6]त्वꣳ सोम पितृभिस्संविदानः। [7]बर्हिषदः पितर [8]आऽहं पितॄन्। [9]उपहूताः पितरो[10]ऽग्निष्वात्ताः

[1—10]पञ्चदशे सूक्तवाकप्रैषोऽभिहितः। षोडशे पितृयज्ञविषया मन्त्रा उच्यन्ते। पितृयज्ञश्च सूत्रकारेण निर्दिष्टः—"पूर्ववत्पितृयज्ञः" इति। स च राजसूयप्रकरणे चातुर्मास्येषु "सोमाय पितृमते" * इत्यनुवाके व्याख्यातः। तदर्थानां मन्त्राणां दशानां प्रतीकानि दर्शयति—एतास्वृक्षु "उशन्तस्त्वा हवामहे" ‡ एषा सामिधेनी, सेयं संहितायां द्वितीयकाण्डे व्याख्याता ‡। "आ नो अग्ने" † "त्वं सोम महे" † इत्युभे आज्यभागयोः पुरोनुवाक्ये, ते च "वृषासो अंशुः पवते" † इत्यनुवाके व्याख्याते। "सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपति" * इत्यस्मिन् कर्मणि "त्वं सोम प्रचिकितः" ‡ "त्वया हि नः पितरः" ‡ इत्येते पुरोनुवाक्ये। तत्रैव "त्वं सोम पितृभिः" ‡ इति याज्या। "पितृभ्यो बर्हिषद्भ्यो धानाः" * इत्यस्मिन्कर्मणि "बर्हिषदः पितर ऊत्यर्वाक्" ‡ "आऽहं पितॄन्सुविदत्रान्" ‡ इत्येते पुरोनुवाक्ये। "उपहूताः पितरः" ‡ इत्येषा याज्या। "पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्" * इत्यत्र "अग्निष्वात्ताः पितरस्सोम्यासः" ‡ इत्येषा पुरोनुवाक्या। ता एताः 'त्वं सोम प्रचिकितः' ‡ इत्याद्यास्सप्त संहितायां "उशन्तस्त्वा" इत्यनुवाके व्याख्याताः॥

* सं. १-८-५. † ब्रा. २-४-५. ‡ सं २-६-१२.

पितरः । [11] अग्निष्वात्तानृतुमतो हवामहे । नराशꣳसे सोमपीथं य आशुः । ते नो अर्वन्तस्सुहवा भवन्तु । शं नो भवन्तु द्विपदे शं चतुष्पदे । [12] ये अग्निष्वात्ता येऽनग्निष्वात्ताः ॥ ७५ ॥ अꣳहोमुचः पितरस्सोम्यासः । परेऽवरेऽमृतासो भवन्तः । अ-

[11] अथ द्वितीयां पुरोनुवाक्यामाह—अग्निष्वात्ता अग्निष्वात्त नामकाः पितरः पितृविशेषाः । ते च चातुर्मास्यगतपितृयज्ञब्राह्मणे स्पष्टमभिहिताः—"ये वा अयज्वानो गृहमेधिनः । ते पितरोऽग्निष्वात्ताः"* इति । मनुष्यजन्मन्यग्निष्टोमादियागमकृत्वा स्मार्तकर्मनिष्ठाः सन्तो मृत्वा च पितृत्वं गताः तानग्निष्वात्तानृतुमत ऋतुरूपेण यज्ञकालेन युक्तान् हवाहमे आह्वयामः । ये पितरो नराशंसे नरैः शंसनीये यज्ञे सोमादिरूपेण सोमपीथं सोमपानमाशुः प्राप्तवन्तः ते पितरो नोऽस्माकं सुहवाः सुखेनाह्वातुं शक्या अर्वन्तः शीघ्रगातिमन्तो भवन्तु । नोऽस्माकं द्विपदे मनुष्याय शं सुखकरा भवन्तु । चतुष्पदे पशवे च शं भवन्तु ॥

[12] अथ विकल्पितामन्यां द्वितीयां पुरोनुवाक्यामाह—अग्निष्वात्ताः पूर्वोक्तलक्षणाः पितरो ये सन्ति ये च यागं कृत्वा पितृलोकं प्राप्ता अनग्निष्वात्ताः पितरः ते सर्वेऽप्यंहोमुचः पापान्मोचयितारः सोम्यासः सोमपानार्हाः परे कृतयागा अवरे यागरहिताः द्विधा अप्यमृतासः मनुष्यवच्छीघ्रमरणरहिताः ते भवन्तः पितरोऽधिब्रुवन्तु देवानां समीपे यजमानमाधिकं ब्रुवन्तु । यजमानानस्मानवन्तु॥

*ब्रा १-६-९.

धिब्रुवन्तु ते अवन्त्वस्मान् । [13]वान्यायै दुग्धे जुषमाणाः करम्भम् । उदीराणा अवरे परे च । अग्निष्वात्ता ऋतुभिस्संविदानाः । इन्द्रवन्तो हविरिदं जुषन्ताम् । [14]यदग्ने कव्यवाहन [15]त्वमग्न ईडितो जातवेदः । [16]मातली कव्यैः । [17]ये तातृपुर्देवत्रा

[13]अथ तत्रैव याज्यामाह—अग्निष्वात्तनामकाः पितरो मदीयमिदं हविर्जुषन्ताम् । कीदृशा अग्निष्वात्ताः? वान्यायै मृतवत्साया धेनोर्दुग्धे प्रक्षिप्तं करम्भं यवपिष्टरूपं मन्थं जुषमाणाः। तेषु मध्ये ये परे उत्कृष्टाः ये चावरे निकृष्टाः ते सर्वेऽप्युदीराणा अस्मिन्कर्मणि उत्कर्षेण प्राप्ता ऋतुभिर्यज्ञकालाभिमानिदेवैः सह संविदाना एकमत्यं गताः इन्द्रवन्तः परमैश्वर्ययुक्तेन पितृराजेन यमेन संयुक्ताः ॥

[14—16]अत्र शाखान्तरानुसारेण हविरन्तरं सूत्रकार उदाजहार—"अग्नये कव्यवाहनाय यमाय वा मन्थम्" इति । तत्र द्वयोः पुरोनुवाक्ययोरेकस्या याज्यायाश्च प्रतीकानि दर्शयति—एतास्तिस्रः "उशन्तस्त्वा हवामहे" * इत्यनुवाके संहितायां व्याख्याताः ॥

[17]अथ तत्रैव स्विष्टकृतः पुरोनुवाक्यामाह—ये पितरो देवत्रा देवेषु मध्ये जेहमानाः प्रथमानाः होत्रावृधः होमकर्तृन्वर्धयन्तः स्तोमतष्टासः स्तोत्ररूपैर्मन्त्रैः संस्कृतास्सन्तः अर्कैरर्चनीयैर्हविर्भिः तातृपुः तृप्तिं गताः हे अग्ने! तैः पितृभिः सार्धमर्वाङायाहि अस्म-

* सं-१-६-१२.

जेहमानाः । होत्रावृधस्स्तोमतष्टासो अर्कैः । आऽग्ने याहि सुविदत्रेभिरर्वाङ् । सत्यैः कव्यैः पितृभिर्घर्मसद्भिः । [18] हव्यवाहमजरं पुरुप्रियम् । अग्निं घृतेन हविषा सपर्यन् । उपासदं कव्यवाहं पितृ-

दभिमुखं आगच्छ । कीदृशैः पितृभिः? सुविदत्रेभिः सम्यगभिज्ञैः सत्यैः सत्यवादिभिः कव्यैः कव्याख्येन पितृणामन्नेन युक्तैः घर्मसद्भिः घर्मे दीप्यमानेऽस्मिन्कर्मणि निवसद्भिः ॥

[18] अथ तत्रैव याज्यामाह—अहं स्विष्टकृदाख्यामिममग्निं उपासदं उपसन्नोऽस्मि । किं कुर्वन्? घृतेन हविषा सपर्यन् पूजयन् । कीदृशमग्निं? हव्यवाहं देवार्थं हव्यस्य वोढारं अजरं जरारहितं पुरुप्रियं पुरूणां बहूनां यजमानानां प्रियं पितृणामर्थे कव्यवाहं कव्याख्यस्य हविषो वोढारम् । स तादृशोऽग्निः नोऽस्माकं वीरवतीं वीरैर्भृत्यैर्युक्तां प्रजां पुत्रपौत्रादिरूपां समृण्वतु सम्यक्प्रापयतु ॥

अथ विनियोगसंग्रहः—

पितृयज्ञे सामिधेनी ह्युशन्तस्त्वेति वर्णिता ।
आ नस्त्वं सोम इत्याज्यभागयोर्द्वे पुरोरुचौ ॥
पितृमत्सोमयागे तु त्वं सोम प्रेत्युभे मते ।
पुरोनुवाक्ये याज्या तु त्वं सोमेत्यादिका मता ॥
बर्हिषः पितृयागे तु बर्हिष्यादित्रयं तथा ।
अग्निष्वेति चतस्रस्स्युरग्निष्वात्तयजौ तथा ॥

णाम् । स नः प्रजां वीरवतीꣳ समृण्वतु ॥ ७६ ॥

अनेग्निष्वात्ता जेहमानास्सप्त च ॥ १६ ॥

¹होता यक्षदिडस्पदे । समिधानं महद्यशः । सुषमिद्धं वरेण्यम् । अग्निमिन्द्रं वयोधसम् । गायत्रीं

यदग्ने कव्यवाहेति कव्यवाहयजौ त्रयम् ।
येता ह्वे स्विष्टकृद्यागे मन्त्रा अष्टादशेरिताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-
यजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
षष्ठप्रपाठके षोडशोऽनुवाकः

¹षोडशे पितृयज्ञयाज्यानुवाक्या उक्ताः । अथ यत्पश्वन्तरं सूत्रकारेणोदाहृतम् "इन्द्राय वयोधसे पशुमालभेत" इति, तत्र प्रयाजार्थो मैत्रावरुणप्रैषाः सप्तदशेऽभिधीयन्ते । तत्र प्रथममन्त्रमाह—योऽयं दैव्यो होता सोऽयमिडस्पदे सोमक्रयणीपदपांसुयुक्ते आहवनीये समिधानं समिन्नामकं प्रथमप्रयाजदेवं यक्षत् यजतु । कीदृशं देवं? महद्यशः महतो यशसः कारणम् । सुषमिद्धं सुखेन सम्यक्प्रज्वालितम् । वरेण्यं सर्वैर्वरणीयम् । तद्देवद्वारा अग्निं तदग्निरूपं वयोधसं वय आयुष्यं धारयतीति वयोधाः तादृशमिन्द्रं पशुस्वामिनं देवं यजतु । तथा गायत्रीं छन्दः चतुर्विंशत्यक्षरं छन्दोदेवं यजतु । ततो यजमानाय इन्द्रियं चक्षुरादिपाटवं त्र्यविं गाम्, अविशब्दो मास-

छन्द॑ इन्द्रि॒यम् । त्र्य॑वि॒ गां वयो॒ दध॑त् । वेत्वा-ज्य॑स्य॒ होत॒र्यज॑ । [2]होता॑ यक्ष॒च्छुचि॑व्रतम् । तनून-पा॑तमु॒द्भिद॑म् । यं गर्भ॒मदि॑ति॒र्द॒धे ॥ ७७॥ शुचि॒-मिन्द्रं॑ वयो॒धस॑म् । उ॒ष्णिह॒ छन्द॑ इन्द्रि॒यम् । दि॒-त्य॒वाह॒ गां वयो॒ दध॑त् । वेत्वाज्य॑स्य॒ होत॒र्यज॑ । [3]होता॑ यक्षदी॒डेन्य॑म् । ई॒डि॒तं वृ॑त्र॒हन्त॑मम् । इडा॑-भि॒रीड्य॒ꣳ सह॑ः । सोम॒मिन्द्रं॑ वयो॒धस॑म् । अ॒नु॒ष्टु-

षट्कोपलक्षक इति चतुर्थकाण्डे प्रतिपादितम्,* त्रीणि मासषट्-कानि यस्याः गोः सेयं त्र्यविः तादृशीं गां वय आयुष्यं च दधत् संपादयतु । अयं प्रयाजदेवः आज्यस्य वेतु हूयमानमाज्यं पिबतु । तदर्थं हे मानुष होतः! यज याज्यां पठ ॥

[2]अथ द्वितीयमन्त्रमाह—तनूनपान्नामको द्वितीयप्रयाजदेवः तं होता यक्षत् यजतु । कीदृशं? शुचिव्रतं शुद्धं एतत्कर्मरूपं व्रतं यस्य तादृशम् । उद्भिदं फलस्योद्भेत्तारं उत्पादयितारम् । यं तनूनपादा-ख्यमाग्निं अदितिः इयं भूमिः गर्भं दधे तं यजात्वित्यन्वयः । तद्वा-रेण शुचिं शुद्धात्मानं वयोधसं इन्द्रं पशुदेवं उष्णिक्छन्दोदेवं च यजतु । ततः इन्द्रियं दित्यवाहं गां द्विवर्षां गां आयुष्यं च संपाद-यतु । वेत्वित्यादि पूर्ववत् ॥

[3]अथ तृतीयमन्त्रमाह—ईडेन्यस्तृतीयप्रयाजदेवः तं होता यजतु । कीदृशम्? ईडितं सर्वैः ऋत्विग्भिः स्तुतम् । वृत्रहन्तमं अतिशयेन

* सं. ७-१-६.

भं छन्द॑ इन्द्रि॒यम् । त्रि॒व॒थ्सं गां वयो॒ दध॑त् ॥७८॥
वेत्वाज्य॑स्य॒ होत॒र्यज॑ । [4]होता॑ यक्षथ्सु॒बर्हि॑षद॑म् ।
पू॒ष॒ण्वन्त॒मम॑र्त्यम् । सीद॑न्तं ब॒र्हिषि॑ प्रि॒ये । अ॒मृ-
तेन्द्रं॑ व॒यो॒धसं॑म् । बृ॒ह॒तीं छन्द॑ इन्द्रि॒यम् । प॒ञ्चा॒विं
गां वयो॒ दध॑त् । वेत्वाज्य॑स्य॒ होत॒र्यज॑ । [5]होता॑
यक्ष॒द्व्यच॑स्वतीः । सु॒प्रा॒य॒णा ऋ॑ता॒वृध॑ः ॥ ७९ ॥
द्वारो॑ दे॒वीर्हि॑र॒ण्ययी॑ः । ब्र॒ह्माण॒ इन्द्रं॑ व॒यो॒धसं॑म् ।
प॒ङ्क्तिं छन्द॑ इ॒हेन्द्रि॒यम् । तु॒र्य॒वाहं॑ गां वयो॒ दध॑त् ।

---

वैरिघातिनम् । इडाभिरीड्यं स्तुतिपराभिः ऋग्भिः स्तुत्यम् । सहः बलहेतुम् । इन्द्रमित्यादि पूर्ववत् । तस्य विशेषणं सोमे सोमपानार्हमित्यर्थः । त्रिवत्सं त्रिवर्षम् ॥

[4]अथ चतुर्थमन्त्रमाह—बर्हिश्शब्देन चतुर्थप्रयाजदेव उच्यते, तं होता यक्षत् यजतु । कीदृशम्? पूषण्वन्तं पोषणसामर्थ्ययुक्तम् । अमर्त्यं मरणरहितम् । प्रिये बर्हिषि यज्ञे सीदन्तं उपविष्टम् । अमृतशब्दो मरणराहित्यवाची इन्द्रस्य विशेषणम् । पञ्चाविं सार्धसंवत्सरद्वयोपेतम् ॥

[5]अथ पञ्चममन्त्रमाह—द्वारशब्दवाच्याः पञ्चमप्रयाजदेवताः । ताश्च व्यचस्वतीः व्याप्तिमत्यः अवकाशवत्यः । सुप्रायणाः सुष्ठु प्रायणं गमनागमनरूपं यासु ताः । ऋतं सत्यं वर्धयन्तीत्यृतावृधः । हिरण्ययीः सुवर्णाभरणयुक्ताः । ब्रह्माणः परिवृढाः । तादृशीर्होता यजतु । इन्द्रमित्यादि पूर्ववत् । इह कर्मणि तुर्यवाहं सार्धसंवत्सरत्रयोपेतम् ॥

वेत्वाज्यस्य होतर्यज । [6]होता यक्षथ्सुपेशसे । सु-
शिल्पे बृहती उभे । नक्तोषासा न दर्शते । विश्व-
मिन्द्रं वयोधसम् । त्रिष्टुभं छन्द इन्द्रियम् ॥८०॥
पष्ठवाहं गां वयो दधत् । वेत्वाज्यस्य होतर्यज ।
[7]होता यक्षत्प्रचेतसा । देवानामुत्तमं यशः । हो-
तारा दैव्या कवी । सयुजेन्द्रं वयोधसम् । जगतीं
छन्द इहेन्द्रियम् । अनड्वाहं गां वयो दधत् । वेत्वा-
ज्यस्य होतर्यज । [8]होता यक्षत्पेशस्वतीः ॥८१॥
तिस्रो देवीर्हिरण्ययीः । भारतीर्बृहतीर्महीः । पति-

[6]अथ षष्ठमन्त्रमाह—नक्तोषासाशब्दवाच्ये षष्ठप्रयाजदेवते । ते च सुपेशसे शोभनरूपयुक्ते । सुशिल्पे शोभनशिल्पोपेते । शिल्पशब्देन कलाविद्या उच्यन्ते । बृहती महत्यौ । न दर्शते दर्शनीये च । ते उभे होता यजतु । विश्वं विश्वस्वामिनम् । इन्द्रमित्यादि पूर्ववत् । पष्ठवाहं संवत्सरचतुष्टयोपेतम् ॥

[7]अथ सप्तममन्त्रमाह—दैव्यौ होतारौ सप्तमप्रयाजदेवौ । तौ च प्रचेतसौ प्रकृष्टज्ञानयुक्तौ । देवानां सर्वेषामुत्तमं यशः संपादयन्तौ । कवी विद्वांसौ । सयुजा सहैव वर्तमानौ । इह कर्मणि अनड्वाहं शकटवहनक्षमं गाम् । अन्यत् पूर्ववत् ॥

[8]अष्टममन्त्रमाह—तिस्रो देव्योऽष्टमप्रयाजदेवताः ताश्च पेशस्वतीः रूपवत्यः । हिरण्ययीः सुवर्णाभरणोपेताः । भारतीरिति बहुवचनेनेडा-

मिन्द्रं वयोधसंम् । विराजं छन्दं इहेन्द्रियम् । धेनुं गां न वयो दधत् । वेत्वाज्यस्य होतर्यज । [9]होता यक्षत्सुरेतसम् । त्वष्टारं पुष्टिवर्धनम् । रूपाणि बिभ्रतं पृथक् । पुष्टिमिन्द्रं वयोधसंम् ॥८२॥ द्विपदं छन्दं इहेन्द्रियम् । उक्षाणं गां न वयो दधत् । वेत्वाज्यस्य होतर्यज । [10]होता यक्षच्छतक्रतुम् । हिरण्यपर्णमुक्थिनम् । रशनां बिभ्रतं वशिम् । भगमिन्द्रं वयोधसंम् । ककुभं छन्दं इहेन्द्रियम् । व-

---

सरस्वत्यावपि गृह्येते । बृहतीः प्रौढाः । महीः पूज्याः । पातिं पालकम् । धेनुं गां न नवप्रसूतिकां गामपि । अन्यत्पूर्ववत् ॥

[9] नवममन्त्रमाह—त्वष्टृशब्देन नवमप्रयाजदेव उच्यते । स च सुरेताः शोभनरेतस्को बहुप्रजाप्रदः । शरीरस्य पुष्टिं वर्धयतीति पुष्टिवर्धनः । स च प्रतिशरीरं पृथग्विलक्षणानि रूपाणि बिभ्रद्वर्तते । तादृशं देवं होता यक्षत् यजतु । पुष्टिं पुष्टिप्रदमिन्द्रम् । इह कर्मणि उक्षाणं गां न सेचनक्षमं वृषभमपि । अन्यत्पूर्ववत् ॥

[10] दशममन्त्रमाह—हिरण्यपर्णशब्देन सुवर्णपर्णयुक्तो दशमप्रयाजदेवो वनस्पतिरुच्यते । स च शतक्रतुः शतसंख्याकक्रतुहेतुः । उक्थी शस्त्रोपेतः मन्त्रेण प्रशस्यमान इत्यर्थः । स च वशि स्ववशां रशनां यूपावस्थां बिभ्रद्वर्तते । तादृशं होता यजतु । भगं भाग्ययुक्तम् । वशां वन्ध्यम् । वेहतं गां न गर्भघातिनीं गामपि । अन्यत्पूर्ववत् ॥

शां वेहतं गां न वयो दधत् । वेत्वाज्यस्य होतर्यज । [11]होता यक्षथ्स्वाहाकृतीः । अग्निं गृहपतिं पृथक् । वरुणं भेषजं कविम् । क्षत्रमिन्द्रं वयोधसम् । अतिच्छन्दसं छन्द इन्द्रियम् । बृहदृषभं गां वयो दधत् । वेत्वाज्यस्य होतर्यज ॥ ८३ ॥

दधे दधद्धृतावृध इन्द्रियं पेशस्वतीर्वयोधसं वेत्वाज्यस्य होतर्यज सप्त च ॥ १७ ॥

इडस्पदेऽग्निं गायत्रीं त्र्यविम् । शुचिंव्रतꣳ शुचिमुष्णिहं दित्यवाहम् । ईडेन्यꣳ सोममनुष्टुभं त्रिवथ्सम् । सुबर्हिषदममृतेन्द्रं बृहतीं पञ्चाविम् । व्यचस्वतीस्सुप्रायणा द्वारो ब्रह्माणः पङ्क्तिमिह तुर्यवाहम् । सुपेशसे विश्वमिन्द्रं त्रिष्टुभं पष्ठवाहम् । प्रचेतसा सयुजेन्द्रं जगतीमिहानड्वाहम् । पेशस्वतीस्तिस्रो भारतीः पातिं विराजमिह धेनुं न । सुरेतसं त्वष्टारं पुष्टिं द्विपदामिहोक्षाणं न । शतक्रतुं भगमिन्द्रं ककुभमिह वशां वेहतं गां न । स्वाहा-

11 एकादशमन्त्रमाह—स्वाहाकृतिशब्देनैकादशप्रयाजेदेव उच्यते । स च पृथग्गृहपतिः प्रत्येकं गृहस्य पालकः । वरुणः पाप-

कृतीः क्षत्रमतिच्छन्दसं बृहदृषभं गां वयः। इन्द्रियमृषिवसुनवद्दशेहैन्द्रियमष्ट नव दश गां न वयो दधुथ्सर्वैवेतु ॥

[1]समिद्धो अग्निस्समिधा। सुषमिद्धो वरेण्यः। गायत्री छन्द इन्द्रियम्। त्र्यविर्गौर्वयो दधुः। [2]तनूनपाच्छुचिव्रतः। तनूपाच्च सरस्वती। उष्णिक्छ-

वारकः। कविः विद्वान्। तादृशमग्निं होता यजतु। क्षत्रं बलवन्तम्। बृहत् प्रौढम्। अन्यत्पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके षष्ठप्रपाठके सप्तदशोऽनुवाकः.

---

[1]ऐन्द्रे पशावेकादश प्रयाजप्रैषाः सप्तदशेऽभिहिताः। अष्टादशे आप्रिनामिकाः प्रयाजयाज्या उच्यन्ते। तत्र प्रथमामृचमाह—समिन्नामकः प्रथमप्रयाजदेवोऽग्निः। स च समिधा समिद्यागेन सुषमिद्धः सुष्ठु प्रज्वलितः। योऽयं तादृशोऽग्निः, यच्च गायत्र्याख्यं छन्दः, योऽपि त्र्यविः सार्धसंवत्सरो गौः त एते देवाः इन्द्रियं चक्षुरादिपाटवं, वय आयुष्यं च दधुः संपादितवन्तः ॥

[2]अथ द्वितीयामाह—तनूनपाच्छब्देन द्वितीयप्रयाजदेव उच्यते। स च शुचिव्रतः शुद्धेन व्रतकर्मणा युक्तः तादृशः तनूपात् शरीरप्राप्तिहेतुः। सरस्वती च, उष्णिक्छन्दश्च दित्यवाट्, संवत्सरद्वयोपेतो गौश्च इत्येते देवा इन्द्रियं, वयश्च संपादयन्तु ॥

न्दं इन्द्रियम् । दित्यवाड्गौर्वयो दधुः । [3]इडाभिरग्निरीड्यः । सोमो देवो अमर्त्यः ॥८४॥ अनुष्टुप्छन्द इन्द्रियम् । त्रिवथ्सो गौर्वयो दधुः । [4]सुबर्हिरग्निः पूषण्वान् । स्तीर्णबर्हिरमर्त्यः । बृहती छन्द इन्द्रियम् । पञ्चाविर्गौर्वयो दधुः । [5]दुरो देवीर्दिशो महीः । ब्रह्मा देवो बृहस्पतिः । पङ्क्तिश्छन्द इहेन्द्रियम् । तुर्यवाड्गौर्वयो दधुः ॥८५॥ [6]उषे

[3]अथ तृतीयामाह—इडाभिः मन्त्रोक्ताभिः स्तुतिभिः ईड्यः स्तुत्यः । ईड्यनामकोऽग्निस्तृनीयप्रयाजदेवः । यश्च अमर्त्यो मरणरहितः सोमो देवः, यदप्यनुष्टुप्छन्दः, योऽपि संवत्सरत्रयोपेतो गौः त एते देवाः इन्द्रियं, वयश्च दधुः ॥

[4]अथ चतुर्थीमाह—सुष्ठु बर्हिः यस्यासौ सुबर्हिः एतन्नामकश्चतुर्थप्रयाजदेवोऽग्निः। पूषण्वान् पूष्णा देवेन युक्तः पोषणसामर्थ्ययुक्तो वा । स्तीर्णबर्हिः वेदिप्रसारितबर्हिर्युक्तः। अमर्त्यो मरणरहितः । ईदृशो योऽग्निः, यच्च बृहती छन्दः, योऽपि सार्धसंवत्सरद्वयोपेतो गौः एते देवा इन्द्रियं, वयश्च दधुः ॥

[5]अथ पञ्चमीमाह—दुरः पञ्चमप्रयाजदेवताः । ताश्च देवीः द्योतमानाः। दिशो दिग्रूपाः । महीर्महत्यः । यश्च ब्रह्मा ब्राह्मणस्वामी बृहस्पतिर्देवः, यदपि पङ्क्तिश्छन्दः, योऽपि सार्धसंवत्सरत्रयोपेतो गौः एते देवा इन्द्रियं, वयश्च दधुः ॥

[6]अथ षष्ठीमाह—उषे षष्ठप्रयाजदेवते । यह्वी प्रयतमाने । सुपे-

यह्वी सुपेशसा । विश्वे देवा अमर्त्याः । त्रिष्टुप्छन्द इन्द्रियम् । पष्ठवाड्गौर्वयो दधुः । [7]दैव्या होतारा भिषजा । इन्द्रेण सयुजा युजा । जगती छन्द इहेन्द्रियम् । अनड्वान्गौर्वयो दधुः । [8]तिस्र इडा सरस्वती । भारती मरुतो विशः ॥८६॥ विराट्छन्द इहेन्द्रियम् । धेनुर्गौर्न वयो दधुः । [9]त्वष्टा तुरीपो अद्भुतः । इन्द्राग्नी पुष्टिवर्धना । द्विपाच्छन्द इहेन्द्रि-

---

शसा शोभमानरूपे । ईदृश्यौ ये देव्यौ, ये चामर्त्या मरण-धर्मरहिता विश्वे देवाः, यच्च त्रिष्टुप्छन्दः, योऽपि संवत्सरचतु ष्टयोपेतो गौः एते देवा इन्द्रियं वयश्च दधुः ॥

[7]अथ सप्तमीमाह—दैव्यौ होतारौ सप्तमप्रयाजदेवौ । तौ च भिषजौ चिकित्सकौ इन्द्रेण सयुजा सह वर्तमानौ युजा परस्परमपि संयुक्तौ । ईदृशौ यौ देवौ, यच्च जगती छन्दः, योऽपि शकटवहनक्षमो गौः एते देवा इन्द्रियं वयश्च दधुः ॥

[8]अथाष्टमीमाह—इडा सरस्वती भारती च अष्टमप्रयाजदेवतास्तिस्रो याःसन्ति, येऽपि देवानां मध्ये विशो मरुतः, यदपि विराट्छन्दः, नवप्रसूतिका गौरपि या विद्यते एते देवा इह कर्माणि इन्द्रियं वयश्च दधुः ॥

[9]अथ नवमीमाह—त्वष्टा नवमप्रयाजदेवः । स च तुरीपः शीघ्रप्राप्तिमान् अद्भुत आश्चर्यविग्रहः तादृशो यो देवः, यौ च पुष्टिवर्धना पुष्टिं वर्धयितारौ ताविन्द्राग्नी, यदपि द्विपात् पादद्वयो

यम् । उक्षा गौर्न वयो दधुः । [10]शमिता नो वनस्पतिः । सविता प्रसुवन्भगम् । ककुच्छन्द इहेन्द्रियम् । वशा वेहद्गौर्न वयो दधुः । [11]स्वाहा यज्ञं वरुणः । सुक्षत्रो भेषजं करत् । अतिच्छन्दाच्छन्द इन्द्रियम् । बृहदृषभो गौर्वयो दधुः ॥ ८७ ॥

अमर्त्यस्तुर्यवाड्गौर्वयो दधुर्विंशो वशा वेहद्गौर्न वयो दधुश्चत्वारि च ॥ १८ ॥

पेतं छन्दः, उक्षा गौर्न सेचनसमर्थो गौरपि यो विद्यते, ते देवा इह कर्मणि इन्द्रियं वयश्च दधुः ॥

[10]अथ दशमीमाह—वनस्पतिर्दशमप्रयाजदेवः । स च नोऽस्माकं शमिता सर्वोपद्रवशमनहेतुः । तादृशो यो देवः, यश्च सविता भगं सौभाग्यं प्रसुवन् प्रेरयन्वर्तते, गौर्न गौरपि वेहत् गर्भघातिनी सती वशा वन्ध्या या विद्यते एते देवा इन्द्रियं वयश्च दधुः ॥

[11]अथैकादशीमाह—स्वाहाकाराख्य एकादशप्रयाजदेवो यज्ञं निष्पादयति । स च वरुणः अनिष्टवारकः सुक्षत्रः शोभनबलोपेतः भेषजं करत् औषधं करोति । तादृशो यो देवः, यश्चातिच्छन्द-आख्यं च्छन्दः, योऽपि प्रौढ ऋषभो गोः एते देवा इन्द्रियं वयश्च दधुः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण यजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके षष्ठप्रपाठकेऽष्टादशोऽनुवाकः

[1] वसन्तेनर्तुना देवाः । वसवस्त्रिवृता स्तुतम् । रथन्तरेण तेजसा। हविरिन्द्रे वयो दधुः। [2] ग्रीष्मेण देवा ऋतुना । रुद्राः पञ्चदशे स्तुतम् । बृहता यशसा बलम् । हविरिन्द्रे वयो दधुः । [3] वर्षाभिर् ऋतुनाऽऽदित्याः । स्तोमे सप्तदशे स्तुतम् ॥८८॥ वैरूपेण विशौजसा । हविरिन्द्रे वयो दधुः । [4] शारदेनर्तुना देवाः । एकविंश ऋभवस्स्तुतम् । वै-

[1] ऐन्द्रस्य पशोः प्रयाजयाज्या अष्टादशेऽभिहिताः । एकोनविंशे वपापुरोडाशहविषां याज्यानुवाक्या उच्यन्ते । तत्र वपायाः पुरोनुवाक्यामाह—वसन्ताख्येनर्तुदेवेन सहिता वसवो देवा इन्द्रे हविरिदं समर्प्यमाणं वय आयुष्यं च दधुः संपादितवन्तः । कीदृशं हविः ? त्रिवृदाख्येन स्तोमेन स्तुतम् । तथा तेजसा तेजस्विना रथंतराख्येन साम्ना स्तुतम् ॥

[2] अथ वपाया याज्यामाह—ग्रीष्मर्तुना सहिता इन्द्राः पञ्चदशस्तोमे यशस्विना बृहत्साम्ना स्तुतं बलकरं हविर्वयश्चेन्द्रे दधुः ॥

[3] अथ पुरोडाशस्य पुरोनुवाक्यामाह—वर्षर्तुना सहिता आदित्याः सप्तदशस्तोमे वैश्यानुग्राहकेण ओजस्विना वैरूपसाम्ना स्तुतं हविर्वयश्चेन्द्रे दधुः ॥

[4] अथ पुरोडाशस्य याज्यामाह—शरदृतुसहिता ऋभुनामका देवा एकविंशस्तोमे श्रिया श्रीप्रदेन वैराजेन साम्ना स्तुतं श्रियं श्रीप्रदं हविर्वयश्चेन्द्रे दधुः ॥

राजेन श्रिया श्रियम्। हविरिन्द्रे वयो दधुः। [5]हेमन्तेनर्तुना देवाः। मरुतस्त्रिणवे स्तुतम्। बलेन शक्करीस्सहः। हविरिन्द्रे वयो दधुः। [6]शैशिरेणर्तुना देवाः। त्रयस्त्रिꣳशेऽमृतꣳ स्तुतम्। सत्येन रेवतीः क्षत्रम्। हविरिन्द्रे वयो दधुः॥ ८१॥

स्तोमे सप्तदशे स्तुतꣳसहो हविरिन्द्रे वयो दधुश्चत्वारि च॥ १९॥

वसन्तेन ग्रीष्मेण वर्षाभिश्शारदेन हेमन्तेन शैशिरेण षट्॥

---

[5]अथ हविषः पुरोनुवाक्यामाह—हेमन्तर्तुसहिता मरुन्नामका देवाः त्रिणवस्तोमे बलेन बलप्रदेन शक्करीः शक्करसाम्ना स्तुतं सहो बलप्रदं हविर्वयश्चेन्द्रे दधुः॥

[6]अथ हविषो याज्यामाह—शैशिरर्तुसहिता देवास्त्रयस्त्रिंशाख्ये स्तोमे सत्येन सत्यवाक्येन हेतुना रेवतीः रेवत्याख्येन साम्ना स्तुतं अमृतं अविनश्वरं क्षत्रं बलप्रदं हविर्वयश्चेन्द्रे दधुः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके षष्ठप्रपाठके एकोनविंशोऽनुवाकः.

[1]देवं बर्हिरिन्द्रं वयोधसम् । देवं देवमवर्धयत् । गायत्रिया छन्दसेन्द्रियम् । तेज इन्द्रे वयो दधत् । वसुवने वसुधेयस्य वेतु यज । [2]देवीर्द्वारो देवमिन्द्रं वयोधसम् । देवीर्देवमवर्धयन् । उष्णिहा छन्दसेन्द्रियम् । प्राणमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वियन्तु यज ॥ १० ॥ [3]देवी देवं वयोधसम् । उषे इन्द्रमवर्धताम् । अनुष्टुभा छन्दसेन्द्रि-

---

[1]एकोनविंशे वपापुरोडाशहविषां याज्यानुवाक्या उक्ताः । अथ विंशेऽनूयाजानां मैत्रावरुणप्रैषा उच्यन्ते । तत्र प्रथममन्त्रमाह—बर्हिश्शब्देन प्रथमानूयाजदेवस्वरूपमुच्यते । तच्च देवं द्योतनशीलम् । योऽयमिन्द्रो वयोधा आयुष्याधारकः तं देवमिन्द्रं पूर्वोक्तदेवनशीलं बर्हिस्स्वरूपमवर्धयद्वार्धितवत् । तच्च गायत्र्याख्येन छन्दसा सहितं सत् इन्द्रियं चक्षुरादिपाटवं तेजः शरीरकान्तिः वय आयुष्यं च दधत् संपादयति । वसुधेयस्य धनधारकस्य देवस्य वसुवने धनदाननिमित्तं अयं प्रथमानूयाजदेवो वेतु आज्यं पिबतु । तदर्थं हे होतः! यज याज्यां पठ ॥

[2]अथ द्वितीयमन्त्रमाह—द्वारशब्दवाच्या देव्यो द्वितीयानुयाजदेवता यास्सन्ति ता देव्यो देवं द्योतमानं वयोधसमिन्द्रं देवमवर्धयन् । ताश्च देव्य उष्णिहा छन्दसा सहेन्द्रियपाटवं प्राणं स्थैर्यमायुष्यं चेन्द्रे संपादयन्तु ॥

[3]अथतृतीयमन्त्रमाह—उषे देवी उषाख्ये देव्यौ तृतीयानुयाज-

यम् । वाचमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वीतां यज । [4]देवी जोष्ट्री देवमिन्द्रं वयोधसम् । देवी देवमवर्धताम् । बृहत्या छन्दसेन्द्रियम् । श्रोत्रमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वीतां यज ॥ ११ ॥ [5]देवी ऊर्जाहुती देवमिन्द्रं वयोधसम् । देवी देवमवर्धताम् । पङ्क्त्या छन्दसेन्द्रियम् । शुक्रमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वीतां यज । [6]देवा दैव्या होतारा देवमिन्द्रं वयोधसम् ।

---

देवते । ते उभे वयोधसमिन्द्रं देवं वर्धितवत्यौ । ते चानुष्टुभा छन्दसा सहेन्द्रियं वाग्वयांसीन्द्रे संपादयतः ॥

[4]अथ चतुर्थमन्त्रमाह—जोष्ट्री देवी जोष्ट्र्याख्ये देव्यौ ये विद्येते ते देव्यौ द्योतमानं वयोधसं इन्द्रं देवं वर्धितवत्यौ । ते च बृहत्या छन्दसा सहेन्द्रियं श्रोत्रवयांसीन्द्रे संपादयतः । इन्द्रियशब्दः सामान्यवाची वाक्श्रोत्रादयो विशेषवाचिनः ॥

[5]अथ पञ्चममन्त्रमाह—ऊर्जाहुत्याख्ये ये देव्यौ द्योतमानं वयोधसमिन्द्रं देवं वर्धितवत्यौ । ते च पङ्क्त्या छन्दसा सहेन्द्रियं शुक्रं वयांसीन्द्रे संपादयतः । शुक्रशब्देन दीप्तिरुच्यते ॥

[6]अथ षष्ठमन्त्रमाह—दैव्यहोतृनामकौ यौ देवौ विद्यते तौ देवौ द्योतमानं वयोधसमिन्द्रं देवं वर्धितवन्तौ । तौ च त्रिष्टुभा छन्दसा

देवा देवमंवर्धताम् । त्रिष्टुभा छन्दसेन्द्रियम् । त्विषिमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वीतां यजं ॥ १२ ॥ [7]देवीस्तिस्रस्तिस्रो देवीर्वयोधसम् । पतिमिन्द्रमवर्धयन् । जगत्या छन्दसेन्द्रियम् । बलमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वियन्तु यजं । [8]देवो नराशंसो देवमिन्द्रं वयोधसम् । देवो देवमंवर्धयत् । विराजा छन्दसेन्द्रियम् । रेत इन्द्रे वयो दधत् । वसुवने वसुधेयस्य वेतु यजं ॥ १३ ॥ [9]देवो वनस्पतिर्देवमिन्द्रं वयोधसम् । देवो देवमंवर्धयत् । द्विपदा छन्दसेन्द्रियम् । भगमिन्द्रे

सहेन्द्रियं त्विषिं वयांसीन्द्रे दधतु: । पूर्वत्र शुक्रशब्देन शरीरकान्तिरुक्ता, इह त्विषिशब्देन रश्मिरुच्यते ॥

[7] अथ सप्तममन्त्रमाह—या देव्यस्तिस्रास्त्रिसंख्याका एकैकस्यास्त्रिमूर्तित्वात्पुनरपि तिस्र इत्युच्यन्ते । तास्सर्वाः वयोधसं पालकमिन्द्रं वर्धितवत्यः । ताः पुनर्जगत्या छन्दसा सह इन्द्रियं बलं वयांसीन्द्रे संपादयन्ति ॥

[8] अथाष्टममन्त्रमाह—नराशंसाख्यो यो देवोऽस्ति स देवो द्योतमानं वयोधसमिन्द्रं देवं वर्धितवान् । स च विराजा छन्दसा युक्त इन्द्रियं रेतो वयांसीन्द्रे संपादयति ॥

[9] अथ नवममन्त्रमाह—वनस्पत्याख्यो यो देवोऽस्ति स देवो

वयो दधत् । वसुवने वसुधेयस्य वेतु यज । [10]देवं बर्हिर्वारितीनां देवमिन्द्रं वयोधसम् । देवो देवमवर्धयत् । ककुभा छन्दसेन्द्रियम् । यश इन्द्रे वयो दधत् । वसुवने वसुधेयस्य वेतु यज । [11]देवो अग्निः स्विष्टकृद्देवमिन्द्रं वयोधसम् । देवो देवमवर्धयत् । अतिच्छन्दसा छन्दसेन्द्रियम् । क्षत्रमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वेतु यज ॥ १४ ॥

वियन्तु यज वीतां यज वीतां यज वेतु यज वेतु यज पञ्च च ॥ २० ॥

देवं बर्हिर्गायत्रिया तेजः । देवीर्द्वार उष्णिहा प्राणम् । देवी देवमुषे अनुष्टुभा वाचम् । देवी जोष्ट्री

---

द्योतमानं वयोधसमिन्द्रं वर्धितवान् । स च द्विपदा छन्दसा सह इन्द्रियसौभाग्यवयांसीन्द्रे संपादयति ॥

[10]अथ दशममन्त्रमाह—वारितीनां जलमासीनां संबन्धि बर्हिराख्यं यद्देवस्वरूपमस्ति तदिदं बर्हिस्स्वरूपं द्योतमानं वयोधसमिन्द्रं देवं वर्धितवत् । तच्च ककुभा छन्दसा सह इन्द्रियं यशोवयांसीन्द्रे संपादयति ॥

[11]अथैकादशमन्त्रमाह—स्विष्टकृदाख्योऽग्निर्देवो योऽस्ति स देवो द्योतमानं वयोधसं इन्द्रं देवं वार्धितवान् । स च अतिच्छन्दोरूपेण छन्दसा सह इन्द्रियबलवयांसि इन्द्रे संपादयति । अतो धनधा-

बृहत्या श्रोत्रम् । देवी ऊर्जाहुती पङ्क्त्या शुक्रम् ।
देवा दैव्या होतारा त्रिष्टुभा त्विषिम् । देवीस्तिस्र-
स्तिस्रो देवीः पतिं जगत्या बलम् । देवो नराशꣳ-
सो विराजा रेतः । देवो वनस्पतिर्द्विपदा भर्गम् ।
देवं बर्हिर्वारितीनां ककुभा यशः । देवो अग्निस्स्विष्ट-
कृदतिच्छन्दसा क्षत्रम् । वेतु वियन्तु चतुर्वीता-
मेको वियन्तु चतुर्वैतु । अवर्धयदवर्धयंश्चतुरवर्ध-
तामेकोऽवर्धयंश्चतुरवर्धयत् ॥

स्वाद्वीं त्वा सोमस्सुरावन्तꣳ सीसेन मित्रोऽसि
यद्देवा होता यक्षत्समिधेन्द्रꣳ समिद्ध इन्द्र आच-
र्षणिप्रा देवं बर्हिरिन्द्रꣳ सुदेवꣳ होता यक्षत्समि-
धाऽग्निꣳ समिद्धो अग्निरश्विनाऽश्विना हविरिन्द्रियं
देवं बर्हिस्सरस्वत्यग्निमद्योशन्तो होता यक्षदिड-
स्पदे समिद्धो अग्निस्समिधा वसन्तेन देवं बर्हिरि-
न्द्रं वयोधसं विꣳशतिः ॥ २० ॥

रकस्य धनदाननिमित्तं अयं स्विष्टकृद्देवः आज्यं वेतु पिबतु । तदर्थं हे होतः! यज याज्यां पठ ॥ अस्य प्रपाठकस्यानुवाकार्थसंग्रहः—

स्वाद्वीं त्वाऽमीं मदन्त पितरस्साम्राज्याय पूतं पवित्रेणेवाज्यंमुषासानक्ता बदरैरधातामश्विना देव इन्द्रो वनस्पतिः पष्ठवाहं गां देवी देवं वयोधसं चतुर्नवतिः ॥ १४ ॥ हरिः ओं तत्सत्.

[1]त्रिवृथ्स्तोमो भवति । ब्रह्मवर्चसं वै त्रिवृत् ।

ग्रहा उपस्थितिर्होम उपहोमोऽभिषेचनम् ।
तथाऽवभृथ ऐन्द्रे तु पशौ चत्वार ईरिताः ॥ १ ॥
पशुत्रयेऽथ चत्वारः सूक्तवाके त्वनन्तरः ।
पितृयज्ञे तूत्तरः स्यात्पशावैन्द्रे चतुष्टयम् ॥ २ ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-
यजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
षष्ठप्रपाठके विंशोऽनुवाकः.
षष्ठप्रपाठकस्समाप्तः.

## अथ द्वितीयाष्टके सप्तमप्रपाठकारम्भः.

यस्य निश्श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
षष्ठे प्रपाठके सौत्रामणिः कौकिल्युदीरिता ।
सवनामान एकाहाः कथ्यन्ते सप्तमे स्फुटम् ॥ २ ॥

[1] सूयत इश्वरत्वेनाभिषिच्यत एष्विति सवा एकाहविशेषाः ।

ब्रह्मवर्चसमेवावरुन्धे । [2-3]अग्निष्टोमस्सोमो भवति । ब्रह्मवर्चसं वा अग्निष्टोमः । ब्रह्मवर्चसमेवावरुन्धे । रथंतरꣳ साम भवति । ब्रह्मवर्चसं वै रथंतरम् । ब्रह्मवर्चसमेवावरुन्धे । [4]परिस्रजी होता भवति ॥ १ ॥ अरुणो मिर्मिरस्त्रिशुक्रः । एतद्वै ब्रह्मवर्चसस्य रूपम् । रूपेणैव ब्रह्मवर्चसमवरुन्धे ।

तत्रादौ बृहस्पतिसव उच्यते । तस्मिंश्च बृहस्पतिसवे चोदकप्राप्तांस्त्रिवृदादिस्तोमान्द्वादशस्वपि स्तोत्रेषु बाधितुमेकं स्तोमं विधत्ते—प्रकृतौ बहिष्पवमानस्तोत्रे त्रिवृत्स्तोमः, चतुर्ष्वाज्यस्तोत्रेषु माध्यंदिनपवमानस्तोत्रे च पञ्चदशस्तोमः, चतुर्षु पृष्ठस्तोत्रेष्वार्भवपवमानस्तोत्रे च सप्तदशस्तोमाः, यज्ञायज्ञीयस्तोत्र एकविंशस्तोमः । तान्बाधित्वा सर्वेषु स्तोत्रेषु त्रिवृत्स्तोम एकः कर्तव्यः । तस्य ब्रह्मवर्चसहेतुत्वाद्ब्रह्मवर्चसप्राप्तिर्भवति ॥

[2-3]सोमयागसंस्थाविशेषं विधत्ते । पृष्ठस्तोत्रे विकल्पितबृहत्सामव्यावृत्त्यर्थं रथंतरसाम विधत्ते ॥

[4]होतरि कंचिद्विशेषं विधत्ते—परिस्रजी खलतिः, शिरसि स्रगाकारेण परित एव केशा न तु मध्य इत्यर्थः । अरुणः संध्यावर्णः । मिर्मिरः पुनःपुनरतिवेगेन चक्षुर्मीलनयुक्तः । त्रिशुक्रः त्रिषु वेदेषु शुद्धो मातृवंशपितृवंशनिजाचारेषु वा शुद्धः । यदेतद्विजवेषस्य लक्षणं खलत्यादि, यच्च त्रिशुक्रत्वं तदुभयमपि ब्रह्मवर्चसस्वरूपम् । अतस्तदनुकूलेन रूपेण ब्रह्मवर्चसं प्राप्नोति ॥

[5]बृहस्पतिरकामयत देवानां पुरोधां गच्छेयमिति । स एतं बृहस्पतिसवमपश्यत् । तमाहरत् । तेनायजत । ततो वै स देवानां पुरोधामगच्छत् । यः पुरोधाकामस्स्यात् । स बृहस्पतिसवेन यजेत ॥२॥ पुरोधामेव गच्छति । [6]तस्य प्रातस्सवने सन्नेषु नाराशꣳसेषु । एकादश दक्षिणा नीयन्ते । एकादश माध्यंदिने सवने सन्नेषु नाराशꣳसेषु । एकादश तृतीयसवने सन्नेषु नाराशꣳसेषु । त्रयस्त्रिꣳशथ्सं पद्यन्ते । त्रयस्त्रिꣳशद्वै देवताः । देवता एवावरुन्धे । [7]अश्वश्चतुस्त्रिꣳशः । प्राजापत्यो वा अश्वः ॥३ प्रजापतिश्चतुस्त्रिꣳशो देवतानाम् । यावतीरेव दे-

[5]बृहस्पतिसवस्योत्पत्तिविधिमुक्त्वा प्रयोगं विधत्ते । बृहस्पतिः पुरोधां देवगुरुत्वलक्षणं मुख्यत्वं पौरोहित्यं वा ॥

[6]दक्षिणायां विशेषं विधत्ते—भक्षिताप्यायितचमसा नराशंसाः तेषु दाक्षिणस्य हविर्धानस्याधस्तात्सन्नेषु सत्स्वेकादश गावो दक्षिणात्वेन नीयन्ते दातव्याः । एवमुत्तरयोरपि सवनयोः । स्ता मिलित्वा त्रयस्त्रिंशत्संख्यया देवतासाम्यात्तत्प्रीतिहेतवो भवन्ति "ये देवा दिव्येकादश स्थ" इति मन्त्रे त्रयस्त्रिंशद्देवा आम्नाताः ॥

[7]दक्षिणायामपरं विशेषमाह—पूर्वोक्तगवापेक्षया चतुस्त्रिंशत्संख्यापूरकोऽश्वो दातव्यः । प्रजापतिजन्यत्वात्प्राजापत्यत्वम् । प्रजा-

वताः । ता एवावरुन्धे । [8]कृष्णाजिनेऽभिषिञ्चति । ब्रह्मणो वा एतद्रूपम् । यत्कृष्णाजिनम् । ब्रह्मवर्चसेनैवैनꣳसमर्धयति । [9]आज्येनाभिषिञ्चति । तेजो

पतिश्च पूर्वोक्तदेवतापेक्षया चतुस्त्रिंशः । अतोऽन्नदानेन सर्वदेवताप्राप्तिर्भवति ।

[8] एतस्य कर्मणः सवत्वादभिषेकं विधत्ते—कृष्णाजिनमास्तीर्य तत्रोपविष्टं यजमानमभिषिञ्चेत् । ऋक्सामयोः कृष्णमृगरूपत्वसाधारणत्वाद्ब्रह्मरूपत्वम् । तेन ब्रह्मवर्चससमृद्धिः ।

[9] अभिषेकद्रव्यं विधत्ते । आज्यस्य स्निग्धत्वात्तेजस्त्वम् ॥

अत्र मीमांसा । चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

"इष्ट्वा तु वाजपेयेन बृहस्पतिसवं यजेत् ।
कालं वा बोधयेद्वाक्यमुताङ्गत्वस्य बोधकम् ॥
क्त्वाश्रुत्या भाति कालोऽत्र नैवमङ्गत्वबोधनम् ।
श्रुतेर्मुख्यं प्रक्रिया च तथा सत्यनुगृह्यते ॥

इदमाम्नायते—"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत । अग्निं चित्वा सौत्रामण्या यजेत" इति । तत्रेष्ट्वेति क्त्वाप्रत्ययो वाजपेयस्य पूर्वकालिकतां ब्रूते । तस्माद्वाक्यमिदं बृहस्पतिसवस्योत्तरकालीनतां बोधयतीति चेन्नैवम् । वाजपेयाङ्गत्वबोधनमेव क्त्वाश्रुतेर्मुख्योऽर्थः । "समानकर्तृकयोः पूर्वकाले" इति सूत्रेण क्रियाद्वयस्यैककर्तृकतायां तद्विधानात् । यद्यपि सूत्रे पूर्वकाल इत्युक्तम्, तथाऽपि तन्न नियतं, मुखं व्यादाय स्वपितीत्यत्र कालैक्येऽपि प्रयोगदर्शनात् ।

वा आज्यम् । तेज एवास्मिन्दधाति ॥ ४ ॥

होता भवति यजेत वा अश्वो दधाति ॥ १ ॥

[1]यदाग्नेयो भवति । अग्निमुखा ह्यृद्धिः । [2]अथ यत्पौष्णः । पुष्टिर्वै पूषा । पुष्टिर्वैश्यस्य । पुष्टिमे-

वाजपेयप्रकरणमप्यङ्गत्वेन गृह्यते । अन्यथा त्वप्रकृते बृहस्पतिसवे कालविधानात्प्रकरणं बाध्येत । अङ्गत्वे कर्मान्तरत्वेन प्रसिद्धबृहस्पतिसवत्वाभावात्तच्छब्दोऽनुपपन्न इति चेन्न । मासाग्निहोत्रन्यायेन तद्धर्मातिदेशार्थत्वात् । तस्माद्वाक्यमिदमङ्गत्वबोधकम् । आग्नेचित्वेत्यत्राप्येवं योजनीयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके सप्तमप्रपाठके प्रथमोऽनुवाकः.

---

[1] प्रथमे बृहस्पतिसवोऽभिहितः । द्वितीये वैश्यसवोऽभिधीयते । स च सूत्रकारेण स्पष्टमभिहितः—"अथ सवानां व्याख्यातो बृहस्पतिसवः । वैश्यः पुष्टिकाम आग्नेयादीनि सप्त हवींषि निर्वपति । पृश्निः पष्ठौही मारुत्यालभ्यते । तस्याः पुरस्तात्स्विष्टकृतो यजमानायतन ऋषभचर्म प्राचीनग्रीवमुत्तरलोममास्तीर्य तस्मिन्नासीनं यजमानं दध्नाऽभिषिञ्चति" इति । तत्र प्रथमं हविर्विधत्ते—आग्नेयोऽष्टाकपालः कर्तव्यः, समृद्धेरग्निपूर्वकत्वात् । आद्यानाग्नेयेन तत्समृद्धं कर्म भवति ।

[2] द्वितीयं हविर्विधत्ते—पौष्णश्चरुः कर्तव्यः, पूषदेवतायाः पुष्टि-

वावरुन्धे । [3-5]प्रसवाय सावित्रः । अथ यत्त्वाष्ट्रः । त्वष्टा हि रूपाणि विकरोति । निर्वरुणत्वाय वारुणः ॥५॥ अथो य एव कश्च सन्प्सूयते । स हि वारुणः । [6]अथ यद्वैश्वदेवः । वैश्वदेवो हि वैश्यः । [7]अथ यन्मारुतः । मारुतो हि वैश्यः । [8]सप्तैतानि

हेतुत्वात् । वैश्यस्य पुष्टिकामत्वात्पुष्टिमेव प्राप्नोति ।

[3-5]अथ तृतीयं हविर्विधत्ते—सावित्रोऽष्टाकपालः पुरोडाशः कार्यः । स च सवितुः प्रसवाय प्रेरणाय संपद्यते । चतुर्थं हविर्विधत्ते—अष्टाकपालः त्वाष्ट्रः कार्यः । तस्मात्त्वष्टा निषिक्ते रेतसि विविधानि रूपाणि करोति । पञ्चमं हविर्विधत्ते—अष्टाकपालो वारुणः कार्यः । स च निर्वरुणत्वाय वरुणपाशराहित्याय संपद्यते । अपिच पूर्वं यः को ह्यल्पः पुरुषः सन्सूयतेऽभिषिच्यते स हि तदा वारुणो वरुणेनानुगृहीत इत्युच्यते । तस्माद्वारुणयागोऽभिषेकयोग्यः ॥

[6]षष्ठं हविर्विधत्ते—एकादशकपालो वैश्वदेवः कार्यः । यस्माद्वैश्यः विश्वैर्देवैः सह प्रजापतेर्मध्यभागादुत्पन्नः । तं विश्वे देवा देवता अन्वसृज्यन्त । "जगती छन्दो वैरूपं साम वैश्यो मनुष्याणाम्" इति श्रुत्यन्तरविधानात् । ततस्तदीयत्वाद्वैश्वदेवस्तत्र योग्यः ॥

[7]सप्तमं हविर्विधत्ते—एकादशकपालो मारुतः कार्यः । मरुतां देवविट्त्वेन वैश्ययागे योग्यत्वात् । मरुतां विट्त्वम् "मारुता वै देवानां विशः" इति विस्पष्टश्रुतेः ।

[8]अधिकशङ्कानिवृत्तये हविस्संख्यां दर्शयति—"ईदृङ् चान्यादृङ्

हुवी॑ꣳषि भवन्ति । स॒प्त ग॑णा॒ वै म॒रुत॑ः । पृश्नि॑ः पष्ठौ॒ही मा॑रु॒त्याल॑भ्यते । वि॒ड्वै म॒रुत॑ः । [9]विश॑ ए॒वैतन्म॑ध्य॒तो॑ऽभिषि॑च्यते । तस्मा॑द्वा ए॒ष वि॒शः प्रि॒यः । वि॒शो हि म॑ध्य॒तो॑ऽभिषि॒च्यते॑ । [10]ऋ॒ष॒भ॒च॒र्मेऽध्या॒भिषि॑ञ्चति । स हि प्र॑जनायि॒ता । द॒ध्नाऽभि॑षि॑ञ्चति । ऊर्ग्वा अ॒न्नाद्य॒ं दधि॑ । ऊ॒र्जैवैन॑म॒न्नाद्ये॑न॒ सम॑र्धयति ॥ ६ ॥

वा॒रु॒णो वि॒ड्वै म॒रु॒तो॒ऽष्टौ च॑ ॥ २ ॥

---

च" इत्यादयः सप्त गणाः । अथ पशुं विधत्ते—पृश्निः श्वेतवर्णा, पष्ठौही चतुर्वर्षा । तादृशी काचिदजा मरुद्देवताकाऽऽलब्धव्या ।

[9] अथाभिषेककालविधिमुन्नयति—एतस्य पशोर्मध्ये स्विष्टकृतः पुरस्तादभिषिञ्चेदिति विधिरुन्नेयः । एवं सति विशः प्रजाया मध्य एतदभिषेचनं कृतं भवति । यस्माद्विशो मध्येऽभिषेकः कृतस्तस्मादेवैष वैश्यः सर्वानुष्ठायिविशां प्रियो भवति ।

[10] अभिषेकार्थमासनं विधत्ते—यस्मादृषभः प्रजोत्पादकस्तस्मात्तदीये चर्मणि पर्यभिषिञ्चेत् । अभिषेकद्रव्यं विधत्ते । दध्नो रसरूपत्वात्तादृशेनान्नेनैनं वैश्यं समर्धयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके सप्तमप्रपाठके द्वितीयोऽनुवाकः.

---

[1]यदाग्नेयो भवति । आग्नेयो वै ब्राह्मणः । [2]अथ यत्सौम्यः । सौम्यो हि ब्राह्मणः । [3–4]प्रसवायैव सावित्रः । अथ यद्बार्हस्पत्यः । एतद्वै ब्राह्मणस्यं वाक्पतीयम् । [5]अथ यदग्नीषोमीयः । आग्नेयो वै ब्राह्मणः । तौ यदा संगच्छैते ॥ ७ ॥ अथ वीर्यावत्तरो भवति । [6]अथ यत्सारस्वतः । एतद्धि प्रत्यक्षं

[1]द्वितीये वैश्यसवोऽभिहितः । तृतीये ब्राह्मणसवोऽभिधीयते । स च सूत्रकारेण स्पष्टीकृतः—"ब्राह्मणो ब्रह्मवर्चसकाम आग्नेयादीन्यष्टौ हवींषि निर्वपति पुरस्तात्स्विष्टकृतो हिरण्येन घृतमुत्पूय तेन कृष्णाजिन आसीनमभिषिञ्चति" इति । तान्येतानि हवींषि विधातव्यानि । तत्र प्रथमं विधत्ते—आग्नेयोऽष्टाकपालः कर्तव्यः । अग्निना सह ब्राह्मणस्य प्रजापतिमुखजत्वसाम्येनाग्नेयत्वम् ॥

[2]द्वितीयं विधत्ते—सौम्य एकादशकपालः कर्तव्यः । "सोमोऽस्माकं ब्राह्मणानाꣳ राजा" इति श्रुतेः ब्राह्मणस्य सौम्यत्वम् ॥

[3–4]तृतीयं विधत्ते—सावित्रोऽष्टाकपालः कार्यः । स च प्रसवायैव कल्प्यते । चतुर्थं विधत्ते—बार्हस्पत्योऽष्टाकपालः कर्तव्यः । यद्बृहस्पतिसंबन्धित्वं एतदेव ब्राह्मणस्य वाक्पतित्वं नाम ॥

[5]पञ्चमं विधत्ते—अग्नीषोमीय एकादशकपालः कर्तव्यः । ब्राह्मणस्याग्नेयत्वं पूर्वमुक्तम् । तेन पूर्वोक्तं सौम्यत्वमप्युपलक्ष्यते । तावग्निश्च सोमश्चेत्येतौ यदा सङ्गतौ भवतस्तदानीं द्विगुणब्राह्मण्येन वीर्यातिशयो भवति ॥

[6]अथ षष्ठं विधत्ते—सारस्वतोऽष्टाकपालः कार्यः । ब्राह्मणस्य

ब्राह्मणस्यं वाक्पतीयम् । [7]निर्वरुणत्वायैव वारुणः । अथो य एव कश्च सन्थ्सूयते । स हि वारुणः । [8]अथ यद्द्यावापृथिव्यः । इन्द्रो वृत्राय वज्रमुदयच्छत । तं द्यावापृथिवी नान्वमन्येताम । तमेतेनैव भागधेयेनान्वमन्येताम् ॥८॥ वज्रस्य वा एषोऽनुमानाय । अनुमतवज्रस्सूयाता इति । [9]अष्टावेतानि

सरस्वतीसंबन्धित्वं यदस्ति एतत्प्रत्यक्षमेव वाक्पतित्वम् । बृहस्पतिसंबन्धेन तु यद्वाक्पतित्वं पूर्वमुक्तं तच्छास्त्रसिद्धम् । जिह्वायाः सरस्वतीसंबन्धे तु तद्वाक्पतित्वमनुभूयते ॥

[7] सप्तमं विधत्ते—वारुणोऽष्टाकपालः कर्तव्यः । स च पूर्ववद्वरुणपाशराहित्यायैव संपद्यते । अपिच य एव कश्चित्पुमानधमोऽपि सूयतेऽभिषिच्यते स पुमान्वरुणेनानुगृहीतो राजा भवति ॥

[8] अष्टमं विधत्ते—द्यावापृथिव्यः एककपालः कर्तव्यः । पुरा कदाचिदिन्द्रो वृत्रवधार्थं वज्रमुद्यतवान् । तमिन्द्रं ते द्यावापृथिव्यौ नान्वमन्येताम् । अनुमत्यभावे कारणं दर्शपूर्णमासब्राह्मणे स्पष्टमाभिहितम्— "ते अब्रूतां द्यावापृथिवी मा प्रहारावयोर्वै श्रितः" इति । योऽयमेककपालरूपो भागोऽस्ति तेन भागधेयेन तुष्टे द्यावापृथिव्यौ वृत्रवधार्थमुद्यतं वज्रमङ्गीकृतवत्यौ । अतोऽत्रापि यः पुरोडाशः स एव वज्रस्यानुमत्यर्थं संपद्यते । अनुमतवज्रो हि पुरुषः शत्रुक्षये समर्थत्वात्सूयाता अभिषेकमर्हतीत्येवाभिज्ञा आहुः ॥

[9]अधिकत्वशङ्कानिवारणाय हविस्संख्यां दर्शयति—अष्टसंख्यो-

हवीꣳषि भवन्ति । अष्टाक्षरा गायत्री । गायत्री ब्रह्मवर्चसम् । गायत्रियैव ब्रह्मवर्चसमवरुन्धे । हिरण्येन घृतमुत्पुनाति । तेजस एव रुचे । [10]कृष्णाजिनेऽभिषिञ्चति । ब्रह्मणो वा एतदृक्सामयो रूपम् । यत्कृष्णाजिनम् । ब्रह्मन्नेवैनमृक्सामयोरध्यभिषिञ्चति । [11]घृतेनाभिषिञ्चति । तथा वीर्यावत्तरो भवति ॥

संगच्छेते भागधेयेनान्वमन्येताꣳ रूपं चत्वारि च ॥

---

पेताया गायत्र्या ब्रह्मवर्चसहेतुतया ब्रह्मवर्चसप्राप्तिः । अभिषेकद्रव्यस्योत्पवनं विधत्ते—निर्मलद्रव्यत्वात्स्वतोऽपि घृतं तेजोर्थमेव पुनरपि हिरण्योत्पवनेनात्यन्तदीप्त्यर्थं भवति ॥

[10]अभिषेककालीनमाधारं विधत्ते—कृष्णाजिने समासीनमेनमाभिषिञ्चेत् । कृष्णाजिनं च ब्रह्मणो वेदस्य संबन्धिनोः ऋक्सामयोः स्वरूपम् । "ऋक्सामे वै देवेभ्यो यज्ञायातिष्ठमाने कृष्णोरूपं कृत्वाऽपक्रम्यातिष्ठताम्" इत्यन्यत्राम्नानात् । अतः कृष्णाजिनेऽभिषेकेण ब्रह्मन्नेव वेद एव ऋक्सामयोरुपर्येनमभिषिञ्चति ॥

[11]द्रव्यं विधत्ते—घृतस्य वज्ररूपत्वमन्यत्राम्नातम्— "घृतं खलु वै देवा वज्रं कृत्वा" इति । अतो घृतेनाभिषेके वीर्यातिशयो भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
सप्तमप्रपाठके तृतीयोऽनुवाकः ॥

[1]न वै सोमेन सोमस्य सवोऽस्ति। हतो ह्येषः। अभिषुतो ह्येषः। न हि हतस्सूयते। सौमीꣳ सूतवशामालभते। सोमो वै रेतोधाः। रेत एव तद्दधाति। [2]सौम्यर्चाऽभिषिञ्चति। रेतोधा ह्येषा। रेतस्सोमः। रेत एवास्मिन्दधाति। [3]यत्किंच रा-

[1]तृतीये ब्राह्मणसवोऽभिहितः। चतुर्थे सोमसवोऽभिधीयते। तस्य सोमयागरूपत्वं निषिध्य पशुरूपत्वं विधत्ते—सोमेन यागेन सोमस्य देवस्य च सवोऽभिषेको नैवास्ति। यस्मात्कारणाच्च एष सोमो हतः। हननं कथमिति तदुच्यते—यस्मादेवैष सोमोऽभि षुतस्तस्मादस्ति तस्य हननं "घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति" इत्यन्यत्राभिषवस्य हननरूपत्वश्रवणात्। न हि कश्चिदपि हतः पुरुषोऽभिषिच्यमानो दृश्यते। तस्मात्सोमस्याभिषेकसिद्धये सोमयागं परित्यज्य सोमदेवताकां सूतवशामालभते। सकृत्प्रजामुत्पाद्य पश्चाद्वन्ध्या सूतवशा। सोमस्य रेतोधारकत्वात्तया देवतया रेत एव धारयति॥

[2]अथाभिषेकमन्त्रं विधत्ते—"अषाढम्" इत्यादिका वक्ष्यमाणा सौमी। यस्मादृगेषा रेतोधारणहेतुः सोमोऽपि रेतस्स्वरूपः अतः सौम्याभिषेके सत्यस्मिन्यजमाने रेत एव दधाति॥

[3]अस्मिन्सवे कर्तव्यान्तरं विधत्ते—राजसूये हेमपवित्राभिषेचनीयदशपेयकेशवपनीयव्युष्टिद्विरात्रक्षत्रधृतिसंज्ञकाः सप्त सोमयागाः, तान्वर्जयित्वा यत्किंचिदनुमत्यादिकं सौत्रामण्यन्तं प्रयोगजातं तत्सर्व-

जुसूर्यमृते सोमम्। तथ्सर्वं भवति। [4]अषाढं युत्सु पृतनासु पप्रिम्। सुवर्षामप्स्वां वृजनस्य गोपाम्। भरेषुजाꣳ सुक्षितिꣳ सुश्रवसम्। जयन्तं त्वामनु मदेम सोम ॥ १० ॥

रेतस्सोमस्सप्त च ॥ ४ ॥

मस्मिन् सोमसवेऽनुष्ठेयम्। तस्मिन्राजसूयप्रयोगमध्येऽरत्नीनां हविर्भ्य ऊर्ध्वं संसृपां हविर्भ्यः पुरस्तात्सौमी सूतवशाऽऽलब्धव्या। तस्याः स्विष्टकृतः पुरस्तादभिषेकः कार्यः ॥

[4]अभिषेकाय सौमीमृचं पठति—हे सोम! वयं त्वामनुसृत्य मदेम हृष्यास्म। कीदृशं त्वां? युत्सु युद्धेषु अषाढं सोढुमशक्यं, पृतनासु सेनासु पप्रिं पूरकं, सुवर्षां सुवः स्वर्गस्यात्यारिष्टं विनाशयतीति सुवर्षास्तं सुवर्षां अप्स्वां न केनापि प्सायते भुज्यत इत्यप्सा अप्सा एवाप्स्वास्तं, वृजनं पापवर्जनं तस्य गोपां रक्षितारं, भरेषु भरणीयेष्वग्निष्टोमादिषु जायते निवसतीति भरेषुजास्तं भरेषुजां, सुक्षितिं शोभना क्षितिर्भूमिर्निवासस्थानं यस्यासौ सुक्षितिस्तं, सुष्ठु श्रवः कीर्तिर्यस्यासौ सुश्रवास्तं सुश्रवसं, जयन्तं सर्वत्र जयशीलम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
सप्तमप्रपाठके चतुर्थोऽनुवाकः.



[1]यो वै सोमेन सूयते । स देवसवः । यः प-
शुना सूयते । स देवसवः । य इष्ट्या सूयते । स
मनुष्यसवः । एतं वै पृथये देवाः प्रायच्छन् । ततो
वै सोऽप्यारण्यानां पशूनामसूयत । यावतीः कि-
यतीश्च प्रजा वाचं वदन्ति । तासाꣳ सर्वासाꣳ सू-
यते ॥ ११ ॥
य एतेन यजते । य उ चैनमेवं वेद । [2]नाराशꣳ

[1]चतुर्थे सोमसवोऽभिहितः । पञ्चमे पृथिसवोऽभिधीयते । तमेतं विधत्ते—यः क्रतुः सोमेन सूयते निष्पाद्यते स देवानां योग्यः सवः । यथा पूर्वोक्तो बृहस्पतिसवः । यश्च पशुना निष्पाद्यते वैश्यसवादिः सोऽपि देवानामपि योग्यः सवः । अतस्तदुभयं तथैव तिष्ठतु । यश्च स्वयमिष्ट्या निष्पाद्यते स मनुष्ययोग्यः सवः सर्वेषां सुलभः । तस्मादेतमेव मनुष्यसवं पृथिनाम्ने कस्मैचिद्राज्ञे वेनपुत्राय देवाः प्रायच्छन् । तस्मादेव स मनुष्यसवः । स पृथिरारण्यनामपि पशूनामसूयत अधिपतिरासीत्किमुत ग्राम्याणाम् । पृथिनाऽनुष्ठितत्वादयं पृथिसवः । एतेन पृथिसवेन यो यजते, यश्चैनमेवं वेद स द्विविधोऽप्यसौ पुरुषः प्रजाभिरुच्यमानानां तासां सर्वासां वाचां सूयते अधिपतिर्भवति । प्रजाश्च यावतीः कियतीश्च यावत्यः कियत्यश्च सन्ति ताः प्रजा वाचं वदन्ति तस्यां वाचि कोऽप्यंशो न परित्यज्यते । एतदभिप्रेत्य तासां सर्वासामिति बहुवचननिर्देशः ॥

[2]अस्मिन्पृथिसवेऽभिषेकमन्त्रं विधत्ते—नरैः शंसनीयः स्वयमपि

स्यर्चाऽभिषिञ्चति । मनुष्या वै नराशꣳसः । निह्नुत्य वावैतत् । अथाभिषिञ्चति । [3]यत्किंच राजसूयमनुत्तरवेदीकम् । तत्सर्वं भवति । [4]ये मे पञ्चाशतं ददुः । अश्वानाꣳ सधस्तुतिः । द्युमदग्ने महि श्रवः । बृहत्कृधि मघोनाम् । नृवदमृत नृणाम् ॥ ॥ १२ ॥ सूयते सधस्तुतिस्त्रीणि च ॥ ५ ॥

मनुष्यरूपो देवविशेषो नराशंसः तत्संबन्धिनी 'ये मे पञ्चाशतम्' इत्यादिका नाराशंसी तयाऽभिषिञ्चेत् । तत्र पूर्वोक्तरीत्या मनुष्यमूर्तय एव देवा नराशंसशब्देनोच्यन्ते, तत्सबन्ध्यभिषेचनं यदस्ति एतेन निह्नुत्यैवापलप्यैव भवन्तो यतो मनुष्या अतो भवज्जातीयानस्माननुग्रहीतुमर्हन्तीत्येवं प्रलोभ्यैवानन्तरमाभिषिञ्चति ॥

[3] अस्मिन्पृथिसवे कर्तव्यविशेषं विधत्ते—राजसूये ह्युत्तरवेदियुक्ताः सत्यसोमयागा द्विपशुः पशुबन्धश्चातुर्मास्यानि चैतानि वर्जयित्वा यदन्यदनुमत्यादिकं सौत्रामण्यन्तमस्ति, तत्सर्वमत्र कर्तव्यम् ।

[4] अथ नाराशंसीमृचं पठति—ये मनुष्या मे मह्यमृत्विजेऽश्वानां पञ्चाशतं ददुः दातुं समर्थाः तेषां मघोनां धनिकानां नृणां मनुष्याणां यजमानानां यज्ञो हेऽग्ने सधस्तुतिः स्तुत्या सहितं श्रवो बृहत्कृधि । कीदृशं श्रवः? द्युमत् दीप्तिमत् धनयुक्तमित्यर्थः। महि महत् । नृवत् पुत्रभृत्यादियुक्तम् । अमृतशब्दः संबुद्ध्यन्तोऽग्निविशेषणम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके सप्तमप्रपाठके पञ्चमोऽनुवाकः.

[1]एष गोसवः। षट्त्रिꣳश उक्थ्यो बृहत्सामा। पवमाने कण्वरथन्तरं भवति। [2]यो वै वाजपेयः। स सम्राट्त्सवः। यो राजसूयः। स वरुणसवः। प्रजापतिस्स्वाराज्यं परमेष्ठी। स्वाराज्यं गौरेव। [3-6]गौरिव भवति॥१३॥ य एतेन यजते। य उ चैनमेवं वेद। उभे बृहद्रथंतरे भवतः। तद्धि स्वाराज्यम्। अयुतं दक्षिणाः। तद्धि स्वाराज्यम्।

---

[1] पञ्चमे पृथिसव उक्तः। षष्ठे गोसव उच्यते—एष वक्ष्यमाणो गोसवाख्यः क्रतुरनुष्ठेयः। स च सर्वेषु स्तोत्रेषु षट्त्रिंश स्तोमयुक्त उक्थ्यसंस्थारूपः। पृष्ठस्तोत्रे बृहत्सामयुक्तः। तस्य पवमानस्तोत्रे कण्वरथंतराख्यं साम भवति।

[2] अथ वाजपेयराजसूयाभ्यामुत्कृष्टत्वेनैतं सवं प्रशंसति—योऽयं वाजपेयोऽस्ति सोऽयं साम्राज्यहेतुरेव सवः। यश्च राजसूयः सोऽपि वरुणैश्वर्यप्राप्तिहेतुरेव सवः। न तु तदुभयमाधिकफलप्राप्तिहेतुः। यस्तु स्वाराज्यं पराधीनत्वमप्राप्तः परमेष्ठी परमे पदे स्थितः प्रजापतिरस्ति स तु सर्वेभ्यः फलेभ्योऽधिकफलभूतः। स्वाराज्यं हि सर्वैः प्रार्थ्यते। स्वराज्यं नाम गौरेव गोसव एव, स्वाराज्यप्राप्तिहेतुत्वात्।

[3-6] एतदनुष्ठानं तद्वेदनं च प्रशसंति—यथा गौररण्ये स्वच्छन्दचारी एवमयं ब्रह्मलोकेऽपि स्वतन्त्रो भवति। बृहत्सामेति यदुक्तं तदेव सामद्वयरूपेण प्रशंसति—अत्रैकेनैव बृहत्साम्ना सामद्वय-

प्रतिधुषाऽभिषिञ्चति । तद्धि स्वाराज्यम् । [7]अनुद्धते वेद्यै दक्षिणत आहवनीयस्य बृहतस्तोत्रं प्रत्यभिषिञ्चति । इयं वाव रथंतरम् ॥ १४ ॥ असौ बृहत्। अनयोरेवैनमनन्तर्हितमभिषिञ्चति । [8]पशुस्तोमो वा एषः । तेन गोसवः । षट्त्रिꣳशस्सर्वः ।

साध्योऽतिशयः क्रियते । अतस्तद्धि बृहत्सामानुष्ठानमेव स्वाराज्यप्राप्तिहेतुः । दक्षिणायां विशेषं विधत्ते—गवामयुतमत्र दक्षिणात्वेन दातव्यम्। अभिषेकद्रव्यं विधत्ते—प्रतिधुषा तदानीमेव दुग्धेन क्षीरेण अभिषिञ्चेत् । सोऽयमभिषेकोऽयुतगोप्राप्तिवत्स्वाराज्यहेतुः ।

[7] अथाभिषेकस्य देशकालौ विधत्ते—वेद्यै वेद्या मध्य आहवनीयस्य दक्षिणभागे योऽयमनुद्धतदेशोऽस्ति सोऽयमभिषेकस्य योग्यो देशः तस्मिन्देशेऽभिषिञ्चेत् । बृहतस्तोत्रं प्रति बृहत्साम्ना क्रियमाणं स्तोत्रं यदा प्रवर्तते तदाऽभिषिञ्चेत् । यदिदं कण्वरथंतरं पवमानस्तोत्रे प्रवृत्तं तद्भूमिस्वरूपं, यच्च पृष्ठस्तोत्रे बृहत्साम तद्द्युलोकरूपं, तयोरुभयोर्लोकयोर्मध्येऽनन्तर्हितं व्यवधानरहितमेवैनं यजमानमभिषिञ्चन्ति ।

[8] षट्त्रिंश उक्थ्यो बृहत्सामेति यत्पूर्वमुक्तं तत्र स्तोमं प्रशंसति—यस्मादेष क्रतुः पशुहेतुना स्तोमेन युक्तस्तेन गोसव इत्युच्यते । पशुहेतुस्तोमयुक्तत्वमेव षट्त्रिंश इत्यनेन विशदीक्रियते । "षट्त्रिंशदक्षरा बृहती बार्हताः पशवः" इत्यन्यत्राम्नातम् । अतोऽस्मिन्गोसवे सर्वोऽपि स्तोमः षट्त्रिंश एव क्रियते न तु त्रिवृदादिः ।

रेवज्जातस्सहसा वृद्धः । क्षत्राणां क्षत्रभृत्तमो वयोधाः । महान्महित्वे तस्तभानः । क्षत्रे राष्ट्रे च जागृहि । प्रजापतेस्त्वा परमेष्ठिनस्स्वाराज्येनाभिषिञ्चामीत्याह । स्वाराज्यमेवैनं गमयति ॥ १५ ॥

इव भवति रथंतरमाहैकं च ॥ ६ ॥

[1] सिꣳहे व्याघ्र उत या पृदाकौ । त्विषिरग्नौ

---

[१] अथाभिषेकार्थमन्त्रमाह—हे यजमान ! त्वं रेवत् धनवत् जीवनं यथा भवति तथा जातः प्रवृत्तः, सहसा वृद्धो बलेनाधिकः क्षत्राणां बलवतां मध्ये क्षत्रभृत्तमः अतिशयेन बलवान् वयोधा दीर्घायुष्यधारी महान् विद्याचारादिगुणैरधिकः महित्वे पूज्यत्वे तस्तभानः स्थिरं वर्तमानः । क्षत्रे बलकार्ये राष्ट्रे जनपदे च जागृहि अप्रमत्तो वर्धस्व । परमेष्ठिन उत्तमे पदे स्थितस्य प्रजापतेः संबन्धिना स्वाराज्येन पराधीनरहितत्वेन राज्येन निमित्तेन त्वामभिषिञ्चामि । तमेतं मन्त्रं विधत्ते—इत्युक्तमेतं मन्त्रमेतदभिषेककाले पठेत् तेन पाठेनैनं यजमानं स्वाराज्यं प्रापयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके सप्तमप्रपाठके षष्ठोऽनुवाकः.

---

[1] षष्ठे गोसवोऽभिहितः । सप्तम ओदनसवोऽभिधीयते । कल्पः—"ओदनसवेनान्नाद्यकामो रोहिण्यां यजेत । उपव्युषं श्रपयति

ब्राह्मणे सूर्ये या । इन्द्रं या देवी सुभगा जजान । सा न आगन्वर्चसा संविदाना । [2] या राजन्ये दुन्दुभावायतायाम् । अश्वस्य क्रन्द्ये पुरुषस्य मायौ । इन्द्रं या देवी सुभगा जजान । सा न आगन्वर्चसा संविदाना । [3] या हस्तिनि द्वीपिनि या हिरण्ये । त्विषिरश्वेषु पुरुषेषु गोषु ॥ १६ ॥ इन्द्रं या देवी सुभगा जजान । सा न आगन्व-

---

दर्विहोमो भवत्युदित आदित्ये सिꣳहे व्याघ्र इति चतस्र आहुतीरोदनाज्जुत्वा" इति । तत्र प्रथमामृचमाह—पृदाकुः मनुष्यनिगरणसमर्थोऽजगरः । सिंहादिष्वग्न्यादिषु च येयं त्विषिः अप्रधृष्यत्वलक्षणं तेजस्तदभिमानिनी या देवी सुभगा सौभाग्ययुक्ता सती इन्द्रं परमैश्वर्ययुक्तं पुरुषं जजान उत्पादयामास । सा देवी वर्चसा बलेन संविदाना ऐकमत्यं गता सती नोऽस्मान्प्रति आगन् आगच्छतु ।

[2] अथ द्वितीयामाह—राजन्ये क्षत्रिये आयतायां ताड्यमानायां दुन्दुभौ अश्वस्य क्रन्द्ये क्रन्दने हेषिते पुरुषस्य मायौ सिंहनादादिशब्दे । एतेषु या त्विषिर्गाम्भीर्यलक्षणा तदभिमानिनी । या देवीत्यादि पूर्ववत् ।

[3] अथ तृतीयामृचमाह—नगरे जातस्तत्रैव वर्तमानो हस्ती । अरण्ये जातस्तत्रैव वर्तमानो द्वीपीत्यवान्तरभेदः । द्वीपी मृगा-

चँसा संविदाना । [4] रथे अक्षेषु वृषभस्य वाजे । वाते पुर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजानं । सा न आगन्वर्चँसा संविदाना । [5] राडसि विराडसि । सम्राडसि स्वराडसि । [6] इन्द्राय त्वा तेजस्वते तेजस्वन्तꣳ श्रीणामि । इन्द्राय त्वौजस्वत ओजस्वन्तꣳ श्रीणामि ॥ १७॥ इन्द्राय त्वा पयस्वते पयस्वन्तꣳ श्रीणामि ।

---

न्तरं वा । हस्त्यादिष्वश्वादिषु च या त्विषिर्महार्घत्वलक्षणा तदभिमानिनी । या देवीत्यादि पूर्ववत् ।

[4] अथ चतुर्थीमाह—वाजो वेगः । शुष्मो बलम् । रथादिषु वातादिषु च या त्विषिः स्वस्वकार्यक्षमलक्षणा तदभिमानिनी । या देवीत्यादि पूर्ववत् ।

[5] कल्पः—"राडसीत्येतैः प्रतिमन्त्रं मन्थान्कल्पयन्त्याज्यमन्थं ब्राह्मणः पयोमन्थं राजन्यो दधिमन्थं वैश्य उदमन्थं शूद्रः" इति । तान्मन्त्रानाह—हे आज्यमन्थ ! त्वं राडसि राजमानोऽसि । विविधं राजत इति विराट् । सम्यग्राजत इति सम्राट् । स्वातन्त्र्येण राजत इति स्वराट् ।

[6] कल्पः—"इन्द्राय त्वा तेजस्वते तेजस्वन्तं श्रीणामि' इति ब्राह्मणः सक्तुभिराज्यं श्रीत्वा 'तेजोऽसि' इत्यभिमन्त्र्य 'तत्ते प्रयच्छामि' इति यजमानाय प्रयच्छति । 'तेजस्वदस्तु मे मुखम्'

इन्द्राय त्वाऽऽयुष्मत आयुष्मन्तꣳ श्रीणामि । [7] तेजोऽसि । तत्ते प्रयच्छामि । तेजस्वदस्तु मे मुखम् । तेजस्वच्छिरो अस्तु मे । तेजस्वान्विश्वतः प्रत्यङ् । तेजसा संपिपृग्धि मा । [8-9] ओजोऽसि । तत्ते प्रयच्छामि ॥ १८ ॥ ओजस्वदस्तु मे मुखम् । ओजस्वच्छिरो अस्तु मे । ओजस्वा-

इति प्रतिगृह्य भक्षयति। एवमितरेषामुत्तरोत्तरश्रयणोऽभिमन्त्रणः प्रदानो भक्षणश्च यथालिङ्गम्" इति। तत्र श्रयणमन्त्राणां पाठस्तु—हे आज्यमन्थ! त्वां तेजोयुक्तेन्द्रार्थं तेजस्वन्तं त्वां सक्तुभिस्सह श्रीणामि पचामि। आज्यस्य तेजोरूपत्वेन तेजस्त्वम्। एवं पयोमन्थादिषु योज्यम्। ओजसो बलहेतुत्वात्पयोमन्थ ओजस्वान्। दर्शेऽष्टौ च 'ऐन्द्रं पयः' इत्याम्नानादिन्द्रस्य पयस्वत्त्वम्। दधिमन्थस्य पयोविकारत्वेन पयस्वत्त्वम्। चिरजीवित्वादिन्द्रस्यायुष्मत्त्वम्। उदमन्थस्यायुर्हेतुत्वादायुष्मत्त्वम्।

[7] आज्यमन्थस्याभिमन्त्रणादींस्त्रीन्मन्त्रानाह—हे आज्यमन्थ! त्वं तेजोरूपोऽसि। हे यजमान! तन्मन्थद्रव्यं ते तुभ्यं प्रयच्छामि। मे मम यजमानस्य मुखं तेजोयुक्तमस्तु। शिरोऽपि तेजस्वदस्तु। हे मन्थ! त्वं तेजस्वान्भूत्वा विश्वतः सर्वस्मात्प्रत्यङ् प्रत्यासन्नस्सन्मां तेजसा संपिपृग्धि संपृक्तं कुरु।

[8 9] पयोमन्थस्याभिमन्त्रणादींस्त्रीन्मन्त्रानाह—ओजो बलम्। अन्यत्पूर्ववद्व्याख्येयम्। दधिमन्थस्याभिमन्त्रणादींस्त्रीन्मन्त्रानाह—द-

न्विश्वतः प्रत्यङ् । ओजसा संपिपृग्धि मा । पयोऽसि । तत्ते प्रयच्छामि । पयस्वदस्तु मे मुखम् । पयस्वच्छिरो अस्तु मे । पयस्वान्विश्वतः प्रत्यङ् । पयसा संपिपृग्धि मा ॥ ११ ॥

10—11 आयुरसि । तत्ते प्रयच्छामि । आयुष्मदस्तु मे मुखम् । आयुष्मच्छिरो अस्तु मे । आयुष्मान्विश्वतः प्रत्यङ् । आयुषा संपिपृग्धि मा । इममग्न आयुषे वर्चसे कृधि । प्रियꣳ रेतो वरुण सोम राजन् । मातेवास्मा अदिते शर्म यच्छ ।

---

धिमन्थस्य पयोविकारत्वात्पयस्त्वम् । मुखस्य पयोभोजित्वात्पयस्वत्वम् । शिरश्शब्देन कृत्स्नो देह उपलक्ष्यते । तस्य पयोजन्यशक्तिमत्त्वात्पयस्वत्वम् । अन्यत्पूर्ववत् ।

10-11 उदमन्थस्याभिमन्त्रणादींस्त्रीन्मन्त्रानाह—उदमन्थस्यायुर्हेतुत्वादायुष्ट्वम् । अन्यत्पूर्ववत् । कल्पः—"ओदनशेषं यजमानः प्राश्नाति, इममग्न आयुषे वर्चसे कृधीति प्राश्नन्तमभिमन्त्रयते" इति । पाठस्तु—हेऽग्ने! इमं यजमानमायुषे दीर्घायुष्ट्वाय वर्चसे बलाय च कृधि समर्थं कुरु । हे वरुण! प्रियं कृधि अभीष्टं कुरु । हे सोम राजन्! रेतः कृधि प्रजोत्पादनसामर्थ्यं कुरु । हेऽदिते! अस्मै यजमानाय मातेव शर्म यच्छ सुखं देहि । हे विश्वेदेवाः! अयं यजमानः जरदष्टिर्यथा सत् जराप्राप्तिमान्यथा भवति, तथा कुर्वन्तु चिरजीविनं कुर्वन्त्वित्यर्थः ।

विश्वे देवा जरदष्टिर्यथा सत् ॥ २० ॥ [12] आयुरसि विश्वायुरसि । सर्वायुरसि सर्वमायुरसि । [13] यतो वातो मनोजवाः । यतः क्षरन्ति सिन्धवः । तासां त्वा सर्वासाꣳ रुचा । अभिषिञ्चामि वर्चसा । [14] समुद्र इवासि गह्मना । सोम इवास्यदाभ्यः । अग्निरिव विश्वतः प्रत्यङ् । सूर्य इव ज्योतिषा

---

[12] कल्पः—"हिरण्यं यजमानाय बध्नाति ' 'आयुरसि विश्वायुरसि ' इत्याबध्यमानो जपति " इति । पाठस्तु—हे हिरण्य! त्वमायुर्हेतुरसि । न केवलं ममैवायुर्हेतुः किंतु विश्वेषां मनुष्याणां सर्वेषां देवानां चायुर्हेतुरसि । तस्मात्त्वमेव सर्वायुरसि ।

[13] कल्पः—"तैरेनं संसृष्टैरभिषिञ्चति यतो वातो मनोजवाः " इति । तैः अपां ग्रहैः । पाठस्तु—यतो यस्या रुचो दीप्तेर्वेगवान्वातः प्रवर्तते । पुनरपि यतः सिन्धवो नद्यो मनोजवा मनोवेगयुक्ताः सत्यः क्षरन्ति प्रवहन्ति । तासां सर्वासामपां संबन्धिन्या रुचा त्वां यजमानं वर्चसा बलनिमित्तमभिषिञ्चामि ।

[14] कल्पः—"समुद्र इवासि गह्मनेत्येनमभिमन्त्र्य " इति । पाठस्तु—हे यजमान! त्वं गह्मना गाम्भीर्येण समुद्र इवासि समुद्रसमोऽसि । सोमवद्दाभ्यः केनाप्यधृष्योऽसि । अग्निरिव विश्वतः सर्वस्मात् प्रत्यङ् प्रत्यासन्नः असि । अग्निर्हृदरमध्यवर्तित्वात्प्रत्यासन्नः । सूर्य इव ज्योतिषा व्याप्तोऽसि ।

विभूः ॥ २१ ॥ [15] अपां यो द्रवणे रसः । तमहमस्मा आमुष्यायणाय । तेजसे ब्रह्मवर्चसाय गृह्णामि । अपां य ऊर्मौ रसः । तमहमस्मा आमुष्यायणाय । ओजसे वीर्याय गृह्णामि । अपां यो मध्यतो रसः । तमहमस्मा आमुष्यायणाय । पुष्ट्यै प्रजननाय गृह्णामि । अपां यो यज्ञियो

[15] कल्पः—"अपां ग्रहान्गृह्णन्ति ये मन्थान्कल्पयन्ति 'अपां यो द्रवणे रसः' इत्येतैः प्रतिमन्त्रम्" इति । तानेतांश्चतुरो मन्त्रानाह—अपां संबन्धिनि द्रवणे द्रवीभावे यो रसः सारः तं रसमहमामुष्यायणाय अमुष्य देवदत्तस्य पुत्रायास्मै यज्ञदत्ताख्याय यजमानाय तेजोब्रह्मवर्चसयोः सिद्ध्यर्थं गृह्णामि । एवमुत्तरे त्रयो मन्त्रा व्याख्येयाः ।

अत्र विनियोगसंग्रहः—

स्यादोदनसवे होमः सिंहे मन्त्रचतुष्टयात् ।
राट्चतुर्भिश्चतुर्मन्थान्कल्पयेद्ब्राह्मणादयः ॥ १ ॥
आज्यं क्षीरं दधि जलं द्रव्याण्येषां क्रमादिह ।
श्रीणन्ति सक्तुभिर्मन्थानिन्द्रायेति चतुष्टयान् ॥ २ ॥
तेजोऽसीत्याज्यमन्थस्य मन्त्रणं तस इत्यतः ।
तं मन्थं स्वामिने दद्यात्तेजस्वद्भक्षयेदतः ॥ ३ ॥
क्षीरादिमन्थेऽप्योजोऽसीत्यादिमन्त्रास्तथैव हि ।
स्वादन्तं मन्त्रयेत्क्षेममायुस्तु स्वामिनो जपः ॥ ४ ॥

रसः । तमहमस्मा आमुष्यायणाय । आयुषे दीर्घायुत्वाय गृह्णामि ॥ २२ ॥

गोष्वोर्जस्वन्तꣳ श्रीणाम्योजोऽसि तत्ते प्रयच्छामि पयसा संपिपृग्धि मा सद्भिर्भूयाद्गियो रसो ह्वे च ॥ ७ ॥

[1]अभिप्रेहि वीरयस्व । उग्रश्चेत्ता सपत्नहा । आ-

यतोऽभिषिच्याभिषिक्तं समुद्रो मन्त्रयेत हि ।
अपामित्यभिषेकाय गृह्णन्ति हि जलग्रहान् ॥
अनुवाके सप्तमेऽस्मिन्मन्त्रा द्वात्रिंशदीरिताः ॥ ९ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके सप्तमप्रपाठके सप्तमोऽनुवाकः.

---

[1]सप्तमेऽनुवाके ओदनसवस्य होमादिमन्त्रा उक्ताः । अष्टमे रथारोहणमन्त्रा उच्यन्ते । कल्पः—"अग्रेणाहवनीयं रथोऽवस्थितो भवति । 'अभिप्रेहि' इति तं यजमानोऽभ्येति" इति । हे यजमान रथमभिलक्ष्य प्रेहि प्रकर्षेण गच्छ । गत्वा च वीरयस्व विक्रमं कुरु । उग्रः तीव्रशासनः चेत्ता जयोपायाभिज्ञः सपत्नहा वैरिघाती च भव । कल्पः—"आतिष्ठ मित्रवर्धन इत्यारोहन्तमभिमन्त्रयते" इति । हे यजमान त्वं मित्राभिवृद्धिहेतुस्सन् रथमातिष्ठ आरोह । देवास्तुभ्यं त्वदर्थमधिब्रुवन् अधिकोऽयं यजमान इति

तिष्ठ मित्रवर्धनः। तुभ्यं देवा अधिब्रवन्। अङ्कौ न्यङ्कावभित आतिष्ठ वृत्रहन्रथम् । [2]आतिष्ठन्तं परि विश्वे अभूषन्। श्रियं वसानश्चरति स्वरोचाः। महत्तदस्यासुरस्य नाम। आ विश्वरूपो अमृतानि तस्थौ। [3]अनु त्वेन्द्रो मदत्वनु बृहस्पतिः ॥२३॥ अनु सोमो अन्वग्निरावीत्। अनु त्वा

---

ब्रुवन्तु। कल्पः—"अङ्कौ न्यङ्काविति रथचक्रे अभिमृशति पक्षसी वा। 'आतिष्ठ वृत्रहन्' इति पञ्चभिरारूढम्" इति। आभिमन्त्रयत इत्यनुवर्तते। अत्र चक्रस्पर्शनहेतोः ऋचः, अभिमन्त्रणमन्त्रेषु प्रथमाया ऋचश्च प्रतीके दर्शयति—'अङ्कौ न्यङ्कावभितो रथं यौ' इति। एषा संहितायाः प्रथमकाण्डे देव सवितः प्रसुवेत्यनुवाके व्याख्याता। "आतिष्ठ वृत्रहन्" इत्येषा ग्रहकाण्डे व्याख्याता।

[2]अथ द्वितीयामृचमाह—आतिष्ठन्तं रथमारोहन्तं यजमानं विश्वे देवाः सर्वेऽपि देवाः पर्यभूषन् परितोऽलंकृतवन्तः। अयं च रथस्त्वयाऽधिष्ठितः श्रियं वसान आच्छादयंस्त्वयि सर्वसंपदं कुर्वन्नित्यर्थः। स्वरोचाः स्वायत्तदीप्तिस्सन् चरति प्रवर्तते। असुरस्य शत्रूणां निरसितुर्मित्राणां वा प्राणप्रदस्यास्य रथस्य तन्नाम महत् अधिकम्। त्वदीयो रथ आयातीति श्रुत्वा शत्रवः पलायन्त इत्यर्थः। एवंविधो रथो विश्वरूपो बहुदेशसंचारेण बहुविधरूपस्सन् अमृतानि अमरणसाधनानि फलानि आतस्थौ संपादयति।

[3]अथ तृतीयामाह—हे यजमान रथमातिष्ठन्तं त्वामिन्द्रबृहस्प-

विश्वे देवा अवन्तु। अनु सप्त राजानो य उताभि-षिक्ताः। [4]अनुत्वा मित्रावरुणाविहावतम्। अनु द्यावापृथिवी विश्वशंभू। सूर्यो अहोभिरनु त्वाऽ-वतु। चन्द्रमा नक्षत्रैरनु त्वाऽवतु। [5]द्यौश्च त्वा पृथिवी च प्रचेतसा। शुक्रो बृहद्दक्षिणा त्वा पि-पर्तु। अनु स्वधा चिकिताꣳ सोमो अग्निः। आऽयं

तिसोमा अनुमदन्तु अनुमोदन्तामङ्गीकुर्वताम्। अग्निरपि त्वां अनु क्रमेण आवीत् रक्षतु। ये विश्वे देवास्तेऽपि त्वां अनुक्रमेणावन्तु। उत अपिच सप्त राजानः त्वदीयदिग्व्यतिरिक्ताः सप्तसु दिक्षु वर्तमाना राजानोऽभिषिक्ता ये सन्ति ते सर्वेऽपि त्वामनुमोदन्तु।

[4]अथ चतुर्थीमाह—मित्रावरुणविह कर्मणि त्वां अनु क्रमेण रक्षताम्। विश्वशंभू विश्वस्य सुखस्य भावयित्र्यौ द्यावापृथिव्यौ त्वामनुरक्षताम्। सूर्योऽयमहोभिः सह त्वामन्ववतु। चन्द्रमा नक्षत्रैः सह त्वामनुरक्षतु।

[5]अथ पञ्चमीमाह—द्यौश्च पृथिवी चेत्येते प्रचेतसा प्रकृष्ट-ज्ञानयुक्ते सत्यौ त्वां रक्षताम्। योऽयं सोमयागे शुक्राख्यो ग्रहः स त्वां पिपर्तु पालयतु। तथा बृहत् साम त्वां पिपर्तु। दक्षिणा त्वां पिपर्तु। स्वधाशब्दोपलक्षितमन्नं त्वामनुचिकित्सतां तवानिष्टं निवा-रयत्वित्यर्थः। तथा सोमोऽग्निश्चेत्येतावुभौ त्वदीयमनिष्टं निवारये-ताम्। अयं रथो रजसी रञ्जनात्मके द्यावापृथिव्यौ उपस्थं तत्स-मीपे स्थितमन्तरिक्षं च आपृणक्तु सर्वतः स्वेन संपृक्तानि करोतु।

पृणक्तु रजसी उपस्थम् ॥ २४ ॥

बृहस्पतिस्सोमो अग्निरेकं च ॥ ८ ॥

[1]प्रजापतिः प्रजा असृजत । ता अस्माथ्सृष्टाः पराचीरायन् । स एतं प्रजापतिरोदनमपश्यत् । सोऽन्नं भूतोऽतिष्ठत् । ता अन्यत्रान्नाद्यमावित्त्वा । प्रजापतिं प्रजा उपावर्तन्त । अन्नमेवैनं भूतं पश्य-

स्वयं लोकत्रयं व्याप्नोतित्यर्थः ।

अत्र विनियोगसंग्रहः—

अभीति रथमभ्येति ह्यातिष्ठेत्यभिमन्त्रणम् ।
अङ्कौ चक्रे स्पृशेदाभिमन्त्रयेद्रथसंस्थितम् ॥
पञ्चभिश्चैवमन्त्रोक्ता अष्टौ मन्त्राः क्रमादमी ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
सप्तमप्रपाठकेऽष्टमोऽनुवाकः ॥



[1] अष्टमेऽनुवाके ओदनसवगता रथारोहणमन्त्रा उक्ताः । सोऽथमोदनसवो नवमेऽभिधीयते । तमेतं विधत्ते—प्रजापतिना सृष्टाः प्रजा अन्नार्थिन्यस्तदन्वेषणाय पुनरावृत्तिरहिताः आयन् यत्र क्वापि गताः । तदानीं प्रजापतिरन्नहेतुमोदनसवं दृष्ट्वा तदनुष्ठानेनान्नं प्राप्तोऽतिष्ठत् । ताश्च प्रजा अन्यत्रान्नमलब्ध्वा पुनः प्रजापतिं प्रत्यागताः ।

न्तीः प्रजा उपावर्तन्ते। य एतेन यजते। य उ चैनमेवं वेद। [2-3]सर्वाण्यन्नानि भवन्ति ॥ २५ ॥ सर्वे पुरुषाः। सर्वाण्येवान्नान्यवरुन्धे। सर्वान्पुरुषान्। राडसि विराडसीत्याह। स्वाराज्यमेवैनं गमयति। [4-5]यद्धिरण्यं ददाति। तेजस्तेनावरुन्धे। यत्तिसृधन्वम्। वीर्यं तेन। यदष्ट्राम् ॥ २६ ॥ पुष्टिं तेन। यत्कमण्डलुम्। आयुस्तेन। यद्धिरण्यमाबध्नाति। ज्योतिर्वै हिरण्यम्। ज्योतिरेवास्मिन्दधा-

---

यो यजमान एतेनौदनसवेन यजते यश्चैनमोदनसवं सम्यग्वेद वेत्ति, तमेतमुभयविधं पुरुषमन्नप्राप्तियुक्तं दृष्ट्वा प्रजाः सर्वा आगच्छन्ति।

[2-3]पूर्वोक्तैः 'सिंहे व्याघ्रे' इत्यादिभिर्मन्त्रैर्यदन्नं होतव्यं तदिह विधत्ते—व्रीहियवप्रियङ्गुश्यामाकादिभिर्निष्पाद्यानि यावन्त्यन्नानि संभवन्ति तावन्ति सर्वाण्यत्र कर्तव्यानि। कर्तारश्च ब्राह्मणक्षत्रियवैश्यशूद्राः सर्वे पुरुषाः। तेन सर्वान्नसर्वपुरुषसमृद्धिः प्राप्यते। मन्थकल्पनमन्त्राणां तात्पर्यं दर्शयति—राडसीत्यादींश्चतुरो मन्त्रान्पठेत्तेन स्वाराज्यप्राप्तिः।

[4-5]यदुक्तं सूत्रकारेण—"हिरण्यं ब्राह्मणाय ददाति। तिसृधन्वं राजन्याय। अष्ट्रां वैश्याय। माषकमण्डलुं शूद्राय" इति। तदेतत्सर्वं विधत्ते—तिसृभिरिषुभिः सहितं धनुस्तात्तिसृधन्वम्। अष्ट्रा फालं लाङ्गलामस्था लोहशलाकेत्यर्थः। कर्णे हिरण्याभरणबन्धनं

ति । अथो तेजो वै हिरण्यम् । तेज एवात्मन्धत्ते ।
[6]यदोदनं प्राश्नाति । एतदेव सर्वमवरुध्य ॥२७॥
तदस्मिन्नेकधाऽधात् । [7]रोहिण्यां कार्यः । यद्ब्राह्मण
एव रौहिणी । तस्मादेव । अथो वर्ष्ममेवैनꣳ समा-
नानां करोति । [8]उद्यता सूर्येण कार्यः । उद्यन्तं
वा एतꣳ सर्वाः प्रजाः प्रतिनन्दन्ति । दिदृक्षेण्यो
दर्शनीयो भवति । य एवं वेद । [9]ब्रह्मवादिनो

विधत्ते—हिरण्यगता दीप्तिर्ज्योतिः तद्धारणेन मुखस्य शोभनत्वं तेजः ।

[6]होमद्रव्यशेषप्राशनं विधत्ते—सर्वान्नशेषभक्षणे सत्येतत्सर्वमन्न- जातं संपूर्णं संपाद्य तत्संपादितमस्मिन्यजमान एकधा अधात् एकीकृत्य स्थापयति ।

[7]ओदनसवप्रयोगस्य नक्षत्रविशेषं विधत्ते—यस्मात्कारणाद्रोहि णीनक्षत्रं ब्राह्मणवत्प्रशस्तं तस्मादेव कारणाद्रोहिण्यामयं कार्यः । 'सप्त सप्त क्रमाज्ज्ञेया विप्राद्याः कृत्तिकादयः" इति ज्योतिश्शास्त्रे ब्राह्मणनक्षत्रेषु सप्तस्ववस्थितत्वाद्रोहिण्या ब्राह्मणत्वम् । अपिच रोहिण्यां कुर्वन्नेनं यजमानं समानानां सर्वेषां शिरस्स्थानीयं करोति ।

[8]रोहिणीनक्षत्रदिनेऽप्युदयकालं विधत्ते—उदयं गच्छता सूर्येण सहायं सवः कर्तव्यः, सूर्योदयस्य सर्वपुरुषानन्दहेतुत्वात्तत्रानुष्ठानं प्रशस्तम् । वेदनं प्रशंसति—दिदृक्षेण्यो दर्शनेच्छाविषय उपास्य इत्यर्थः । दर्शनीयः सुरूपः ।

[9]यदुक्तं सूत्रकारेण—"अथैनं त्रिभिर्दर्भपुञ्जीलैः पवयति । अव-

वदन्ति ॥ २८ ॥ अवेत्योऽवभृथा३ ना३ इति । यद्दर्भपुञ्जीलैः पवयति । तथ्स्विदेवावैति । तन्नावैति । [10]त्रिभिः पवयति । त्रय इमे लोकाः । एभिरेवैनं लोकैः पवयति । अथो अपां वा एतत्तेजो वर्चः । यद्दर्भाः । यद्दर्भपुञ्जीलैः पवयति । अपामेवैनं तेजसा वर्चसाऽभिषिञ्चति ॥ २९ ॥

भवन्त्यष्टामवरुध्यं वदन्ति दर्भा यद्दर्भपुञ्जीलैः पवयत्येकं च ॥ ९ ॥

---

भृथप्रत्याम्नायो भवतीति विज्ञायते" इति । तदिदं विधत्ते—आस्मन्नोदनसवे किमवभृथः कार्यो न वेति ब्रह्मवादिनां विचारार्थेयं स्तुतिः । तदनुष्ठाने तु क्रियाबाहुल्यम् । अनुष्ठानाभावे शुद्ध्यभाव इति तेषामभिप्रायः । तत्र दोषद्वयरहितमिदमुत्तरम् । दर्भपुञ्जीलशब्देन कतिपयदर्भनाडियुक्ताः शाखाविशेषा उच्यन्ते । तैः शोधने सति तदेवावभृथाख्यं कर्म अवैति स्वित् अनुष्ठितमेव शुद्धेः संपन्नत्वात् । तथानुष्ठितमपि क्रियाबाहुल्याभावात् ।

[10]दर्भपुञ्जीलसंख्यां विधत्ते—त्रित्वसंख्याया लोकसाम्याल्लोकैः शुद्धिःकृता भवति । अपिच दर्भाणामुदकसारत्वाद्बलहेतुत्वाच्च सार बलाभ्यामयं शोधितो भूत्वाऽभिषिक्तो भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
नवमोऽनुवाकः.

[1]प्र॒जाप॑तिरकामयत ब॒होर्भूया॑न्थ्स्या॒मिति॑ । स ए॒तं प॑ञ्चशार॒दीय॑मपश्यत् । तमाह॑रत् । तेना॑यजत । ततो॒ वै स ब॒होर्भूया॑नभवत् । यः का॒मये॑त ब॒होर्भूया॑न्थ्स्या॒मिति॑ । स प॑ञ्चशार॒दीये॑न यजेत । ब॒होरे॒व भूया॑न्भवति । [2]म॒रुथ्स्तो॒मो वा ए॒षः । म॒रुतो॒ हि दे॒वाना॒ं भूयि॑ष्ठाः ॥ ३० ॥ [3]ब॒हुर्भ॑वति । य ए॒तेन॒ यज॑ते । य उ॑ चैनमे॒वं वेद॑ । प॒ञ्च॒शा॒र॒-

[1] नवमेऽनुवाके ओदनसवोऽभिहितः । दशमे पञ्चशारदीयविधिरुच्यते । स च सूत्रकारेण स्पष्टमुदाहृतः—"पञ्चशारदीयेन बहोर्भूयान्भवति । अनुवत्सरं पशुबन्धेन यजते । सप्तदश पृश्नीनुक्ष्णः पञ्चवर्षानानयन्ति । सप्तदश पृश्नीर्वत्सतर्यः स्त्रीवत्सा अप्रवीताः । प्रोक्षितान्पर्यग्निकृतानुक्ष्ण' उत्सृजन्ति वत्सतरीरालभन्ते" इति । तमिमं पञ्चशारदीयं विधत्ते—बहोर्धनप्रजादिसमृद्धादन्यपुरुषादपि भूयानत्यन्तसमृद्धः । पञ्चसु शरत्सु संवत्सरेष्वनुष्ठेयः पञ्चशारदीयः । स्पष्टमन्यत् ।

[2] तमेतं प्रशंसति—स्तोमशब्देन स्तोमयुक्तो यज्ञ उपलक्ष्यते । मरुत्संज्ञकानां देवगणानां संबन्धी स्तोमो मरुत्स्तोमः । मरुतो ह्येतस्यानुष्ठानेन देवानां मध्येऽत्यन्तं समृद्धाः संपन्नाः ।

[3] यागं वेदनं च प्रशंसति । संवत्सरसंख्यां प्रशंसति—पञ्चसंख्यासामान्याद्दतुद्वारा संवत्सरे प्रतिष्ठा । तथा पङ्क्तिच्छन्दोद्वारा यज्ञप्राप्तिः । स्तोमानामवधिं विधत्ते—त्रिवृदादिस्तोमाः सप्तदश

दीयो भवति । पञ्च वा ऋतवस्संवथ्सरः । ऋतुष्वेव संवथ्सरे प्रतितिष्ठति । अथो पञ्चाक्षरा पङ्क्तिः । पाङ्क्तो यज्ञः । यज्ञमेवावरुन्धे । सप्तदशꣳ स्तोमा नातियन्ति । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै ॥ ३१ ॥

भूयिष्ठा यन्ति द्वे च ॥ १० ॥

[1]अगस्त्यो मरुद्भ्य उक्ष्णः प्रौक्षत् । तानिन्द्र

स्तोमं नातिक्रामन्ति । तमेतमनतिक्रमं सूत्रकारः स्पष्टमुदाजहार—"उत्तमीरालभ्य दीक्षन्ते त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यः पञ्चदशोऽग्निः सप्तदशोऽतिरात्रः" इति । पञ्चमे संवत्सरे वत्सतरीर्हि चरमभाविनीरालभ्य पश्चात्पञ्चरात्राय दीक्षयित्वा क्रमेण त्रिवृदाग्निष्टोमादीनि पञ्चाहान्यनुष्ठेयानि । तेषु पञ्चस्वप्यहस्स्वेकविंशत्रिणवादयः स्तोमा न विद्यन्ते । सोऽयं सप्तदशस्तोमानतिक्रमः 'आश्रावय' इत्याद्यक्षरात्मकत्वेन प्रजापतिस्सप्तदशः । अतस्तदनतिक्रमः प्रजापतेः प्राप्त्यै भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके सप्तमप्रपाठके दशमोऽनुवाकः.

[1] दशमे पञ्चशारदीयविधिरुक्तः । एकादशे तदीयपशुविधिरु-

आदत्त । त एनं वज्रमुद्यत्याभ्यायन्त । तानगस्त्यश्चैवेन्द्रश्च कयाशुभीयेनाशमयताम् । ताञ्छान्तानुपाह्वयत । यत्कयाशुभीयं भवति शान्त्यै । [2]तस्मादेत ऐन्द्रा मारुता उक्षाणःसवनीया भवन्ति । त्रयः प्रथमेऽहन्नालभ्यन्ते । एवं द्वितीये । एवं तृतीये ॥ ३२ ॥ एवं चतुर्थे । पञ्चोत्तमेऽहन्नालभ्य-

ध्यते । तत्रादौ सामविशेषं विधत्ते—अगस्त्यो महर्षिर्मरुत उद्दिश्य उक्ष्णः वृषभान्पशून्प्रोक्षितवान् । तान् मरुदर्थं प्रोक्षितान्पशून् इन्द्रोऽपजहार । तदा ते मरुतो हस्तैर्वज्रमुद्यम्यैनमिन्द्रमाभिलक्ष्य हन्तुमागताः । तदानीमगस्त्येन्द्रौ कयाशुभीयाख्येन साम्ना ताम्मरुतः शान्तानकुरुताम् । तत इन्द्रो गतक्रोधांस्तान् मरुतः स्वसमीपे समाहूतवान् । अतोऽस्मिन्पञ्चशारदीये शान्त्यर्थं कयाशुभीयं साम गायेत् ।

[2]अथ पशून्विधत्ते—यस्मादिन्द्रस्य मरुतां च पशुविषयैमकमत्यं संपन्नं तस्मादैन्द्रा मारुताः कर्तव्याः । तेषां च सवनीयानां सप्तदशानामुक्ष्णां पञ्चसु दिनेषु विभज्य प्रयोगः । तत्र प्रतिदिनं पशुत्रये सति द्वावधिकाववशिष्येते । अतस्ताभ्यां सह पञ्च पशवः उत्तमेऽहन्यालभ्याः । यस्मादेतदहः समाप्तिदिनत्वादतिशयेन प्रवृद्धम् । तत्र ह्युदीच्यादिदिग्विशेषा अतिरात्रत्वेन स्तोत्रविशेषाश्च संपद्यन्ते । तस्मात्तत्र पशुबाहुल्यं युक्तम् ।

न्ते। वर्षिष्ठमिव ह्येतदहः। [3]वर्षिष्ठस्समानानां भवति। य एतेन यजते। य उ चैनमेवं वेद। स्वाराज्यं वा एष यज्ञः। एतेन वा एकयावा कान्दमस्स्वाराज्यमगच्छत्। [4]स्वाराज्यं गच्छति। य एतेन यजते ॥ ३३ ॥ य उ चैनमेवं वेद। मारुतो वा एष स्तोमः। एतेन वै मरुतो देवानां भूयिष्ठा अभवन्। भूयिष्ठस्समानानां भवति। य एतेन यजते। य उ चैनमेवं वेद। [5]पञ्चशार-

---

[3] यजमानवेदने प्रशंसति—समानानां मध्ये वर्षिष्ठः गुणैरतिशयेन प्रवृद्धः। पञ्चशारदीयं प्रशंसति—एष पञ्चशारदीयाख्यो यज्ञः स्वराज्यस्वरूपः, तत्प्राप्तिहेतुत्वात्। एतेन मञ्चशारदीयेनैव पुरा कान्दमो नाम कश्चिदृषिः स्वाराज्यं प्राप्तवान्। स कीदृशः? एकयावा एकेन वाहनेन यातीत्येकयावा, रथेनैव गच्छति न तु वाहनान्तरेणेत्यर्थः।

[4] यागवेदने प्रशंसति। पशुदेवतारूपमरुत्संबन्धेन क्रतुं प्रशंसति—यस्मादेतेन पञ्चशारदीयेन देवानां मध्ये मरुतः अतिशयेन बहुला अभवन् तस्मादेष त्रिवृत्पञ्चदशसप्तदशस्तोमयुक्तो यागो मारुतः। एतद्याजी तद्वेदी च समानानां मध्येऽत्यन्तबहुलो भवति।

[5] पञ्चसु संवत्सरेष्वनुष्ठानं प्रशंसति—स्वात्मानमारभ्य पुत्रपौत्रादिद्वारा यः पञ्चमः पुरुषस्तत्पर्यन्तं सर्वेषामन्नसमृद्धिर्भवति। सप्त

दीयो वा एष यज्ञः । आ पञ्चमात्पुरुषादन्नमत्ति । य एतेन यजते । य उ चैनमेवं वेद । सप्तदश५ स्तोमा नातियन्ति । सप्तदशः प्रजापतिः । प्रजापतेरेव नैति ॥ ३४ ॥ तृतीयें गच्छति य एतेन

दशं स्तोमावसानं प्रशंसति । प्रजापतेः सकाशान्नातिगच्छतीत्यर्थः । अत्र मीमांसा । एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

"उक्षोत्सर्गे किमुत्कर्षस्त्यागो वाऽऽद्योऽत्र पूर्ववत् ।
अन्वहत्रित्वयोरुत्तमाहपश्चत्वयोर्विधौ ॥
वाक्यभेदाद्विशिष्टानामन्येषां कर्मणां विधिः ।
तस्मादारण्यवच्छेषत्याग उत्सर्ग इष्यताम्" ॥

अस्त्यहीनेषु पञ्चशारदीयनामकः कश्चित्सत्रविशेषः पञ्चाहः । स च पञ्चसु संवत्सरेष्वनुष्ठेयः । तत्र प्रथमे संवत्सरे विशाखानक्षत्रयुक्तायाममावास्यायां सप्तदश स्त्रीपशवः सप्तदशोक्षाणश्च विहिताः । तेषु सर्वेषु पर्यग्निकृतेषु प्रोक्षितेषु सत्सु स्त्रीपशूनामालम्भं पुरुषपशूनामुत्सर्गं चाम्नाय पुनर्द्वितीये तृतीये चतुर्थे संवत्सरे तथैवानुष्ठानमाम्नाय पश्चादिदमाम्नातम्—"त्रींस्त्रीनित्येकैकस्मिन्नहन्यालभेरन्पञ्चोत्तमेऽहनि" इति । तत्र वत्सरचतुष्टयगतासु चतसृष्वमावास्यासु योऽयं पुरुषपशूनामुक्ष्णामुत्सर्गस्तत्र तत्कर्मशेषत्यागो न भवति, किंतूत्कर्षः । कुतः ? त्रींस्त्रीनितिवाक्येनालम्भस्याभिधानात् । यथा पूर्वत्र प्राजापत्यानामालम्भ्योत्कर्षस्तथाऽत्रापि युज्यत इति प्राप्ते ब्रूमः । "त्रींस्त्रीनेकैकस्मिन्नहन्यालभेरन्" इत्यत्र पर्यग्निकरणानन्तरभाविनं

यजंतेऽत्ति य एतेन यजंते य उं चैनमेवं वेद त्रीणि च ॥ ११ ॥

अगस्त्यस्स्वाराज्यं मारुतः पंञ्चशारदीयो वा एष यज्ञस्संप्तदशः प्रजापतेरेव नैति ॥

[1]अस्याजरासो दमा मरित्राः। अर्चद्धूमासो अग्नयः पावकाः। श्विचीचयंश्श्वात्रासो भुरण्यवः।

---

सप्तमालम्भमनूद्यैकैकाहत्वत्रित्वगुणयोर्विधौ वाक्यं भिद्येत । तस्माद्गुणद्वयविशिष्टानामन्येषां कर्मणां विधिरभ्युपेयः । तथा "पञ्चोत्तमेऽहन्" इत्यत्रोत्तमाहत्वपञ्चत्वयोर्विधौ वाक्यभेदः । तथासत्यारण्यपशुन्यायेन सप्तदशोक्षाणः पर्यग्निकरणप्रोक्षणाभ्यां समापनीयाः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके सप्तमप्रपाठके एकादशोऽनुवाकः.

---

[1]एकादशे पञ्चशारदीयगताः पशवोऽभिहिताः । द्वादशे त्वग्निष्टुदाख्ये क्रतौ ग्रहाणां ग्रहकाले पुरोरुचोऽभिधीयन्ते । अत एव सूत्रकारेणोक्तम्—"तथाऽग्निष्टुत्तस्य पुरोरुचोऽस्याजरासोऽग्न आयूꣳषि पवस' इत्यैन्द्रवायवस्य द्वितीया मैत्रावरुणस्य तृतीयाऽऽश्विनस्य चतुर्थी पञ्चमी शुक्रामन्थिनोः षष्ठ्याग्रयणस्यान्यामाग्नेयीमुक्थ्यस्य नियुनक्ति नित्या ध्रुवस्य नियुनक्त्यैन्द्राग्नवैश्वदेवयोः रग्निमिन्द्रिय इति तिस्रो मरुत्वतीयानां श्रुधि श्रुत्कर्णेत्युत्तरा माहे-

वनर्षदो वायवो न सोमाः। [2]यजा नो मित्रावरुणा। यजा देवा ऋतं बृहत्। अग्ने यक्षि स्वं दमम्। [3]अश्विना पिबत सुतम्। दीद्यग्नी शुचि-

न्द्रस्य विश्वेषामदितिरिति तिस्र आदित्यग्रहस्योत्तमा सावित्रस्य" इति। तत्रैन्द्रवायवस्य या प्रथमा पुरोरुग्विद्यते तामाह—अस्य यजमानस्य दमा यज्ञग्रहा एवंगुणकाः सन्त्विति प्रार्थयन्ते। किंगुणकाः? अजरासः विनाशरहिताः। मरित्राः म्रियन्ते संज्ञप्यन्ते पशवो येष्विति मरित्राः पुनःपुनर्विशस्यमानपशुका इत्यर्थः। अत एव श्वात्रासः श्वेता निर्मला इत्यर्थः। अर्चद्धूमासः अर्चनीयधूमाः अग्नयः अग्निमन्तः पावकाः शोधकाः श्वितीचयः श्वितिं वृद्धिमञ्चन्ति गच्छन्ति प्रतिदिनमनुष्ठानवृद्धियुक्ता इत्यर्थः। भुरण्यवः भरणकुशलाः फलसंपादका इत्यर्थः। वनर्षदः वननीयफलप्राप्तिहेतवः। वायवो न वायुसदृशाः निरन्तरयज्ञप्रवृत्तियुक्ता इत्यर्थः। सोमाः सोमयागयुक्ताः।

[2]अथ मैत्रावरुणग्रहस्य पुरोरुचमाह—हे ग्रह! नः अस्मदर्थं मित्रावरुणा यजा मित्रावरुणाख्यौ देवौ पूजय। तद्द्वारा देवान्सर्वान्यज। ऋतं यज्ञरूपमिदं कर्म बृहत् प्रौढं वर्तते। अतो हेऽग्ने! स्वं दमं स्वकीयं ग्रहं यक्षि पूजय कर्मनिष्पादनेनालंकुर्वित्यर्थः।

[3]अथाश्विनग्रहस्य पुरोरुचमाह—हे अश्विनौ! युवां सुतमभिषुतं सोमं पिबतम्। कीदृशौ? दीद्यग्नी दीप्यमानाग्नियुक्तौ, शुचिव्रता शुद्धकर्मयुक्तौ, तथा यज्ञवाहसा यज्ञनिर्वाहकौ, ऋतुना यज्ञोचितकालविशेषेण युक्ताविति शेषः।

व्रता । क्रतुनां यज्ञवाहसा ॥ ३५ ॥ [4]द्वे विरूपे चरतस्स्वर्थे । अन्याऽन्या वथ्समुपधापयेते । हरि॑रन्यस्यां भवति स्वधावान् । शुक्रो अन्यस्यां ददृशे सुवर्चाः । [5]पूर्वापरं चरतो माययैतौ । शिशू क्रीडन्तौ परियातो अध्वरम् । विश्वान्यन्यो भुव-

[4]अथ शुक्रग्रहस्य पुरोरुचमाह—अहश्च रात्रिश्चेत्येते द्वे विरूपे शुक्लकृष्णत्वाद्विषमरूपे स्वर्थे सुप्रयोजने चरतः पर्यावर्तेते । अन्याऽन्या तयोरेकैका पृथक्पृथगेव वत्समुपधापयेते वत्ससदृशं स्वस्वोचितं देवमुपधापयेते स्तनपानेनेव प्रीणयतः । तयोर्मध्येऽन्यस्यां रात्रिरूपायां मातरि वत्सस्थानीयो हरिः हरणशीलोऽग्निः स्वधावान् अन्नवान्भवति । अन्यस्यामहस्संज्ञिकायां मातरि वत्सस्थानीयः शुक्रः शुभ्रः सुवर्चाः शोभनदीप्तिरादित्योऽन्नवान्दृश्यते । तथा चाग्निहोत्रब्राह्मणे श्रुतम्—“तस्मादग्नये सायं हूयते सूर्याय प्रातः” इति । एवंविधसूर्याग्निरूपोऽयं शुक्रग्रह इत्यर्थः ॥

[5]अथ मन्थिग्रहस्य पुरोरुचमाह—एतौ सूर्याचन्द्रमोरूपौ मातृस्थनीयाया दिवः शिशू बालकौ पूर्वभागमपरभागं च प्रति संचरतः । उदयाय पूर्वभागोऽस्तमयाय पश्चिमभागः । एवंविधसंचारे पारमेश्वरी मायैव साधनम् । सा हि पारमेश्वरी शक्तिः सूर्याचन्द्रमसौ निर्माय स्वस्वव्यापारे स्थापितवती । तौ च शिशू स्वकीयलीलया क्रीडन्तावस्मदीयमध्वरं परियातः प्राप्नुतः । तयोर्मध्येऽन्यः सूर्यो विश्वानि भुवनानि सर्वान् लोकानभिचष्टे सर्वतः प्रका-

नाऽभिचष्टे । ऋतूनन्यो विदधज्जायते पुनः । [6]त्रीणि शता त्रीषहस्राण्यग्निम् । त्रिꣳशच्च देवा नव चासपर्यन् ॥ ३६ ॥ औक्षन्घृतैरास्तृणन्बर्हिरस्मै । आदिद्धोतारं न्यषादयन्त । [7]अग्निनाऽग्निस्समिध्यते । कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः ।

शयति । अन्यश्चन्द्रमाः ऋतून्वसन्तादीन्विदधत् निष्पादयन्पुनर्जायते तत्तच्छुक्लप्रतिपदि पुनः पुनरुत्पद्यते । एवंविधचन्द्ररूपोऽयं मन्थिग्रहः । तथाच श्रुतम्—"असौ वा आदित्यः शुक्रश्चन्द्रमा मन्थी" इति ॥

[6] अथाग्रयणस्य पुरोरुचमाह—यद्यपि हविर्भुजस्त्रयस्त्रिंशद्देवास्तथाऽपि योगैश्वर्यकल्पितलीलाविग्रहभेदाच्छतत्रयं सहस्रत्रयं त्रिंशच्च नव चेत्येतावन्तो देवा भवन्ति । ते च देवा अग्निमसपर्यन् परिचितवन्तः । त्रयस्त्रिंशत्संख्याकानामेव मुख्यदेवतानामितरे लीलाविग्रहाः । इत्यमुमर्थं वाजसनेयिनः साकल्यब्राह्मणे समामनन्ति—"महिमान एवैषां ये ते त्रयस्त्रिंशत्त्वेव देवाः" इति । ते देवाः कथं परिचरन्तीति तदुच्यते—घृतैराज्यैरौक्षन्नुपरि सिञ्चन्ति जुह्वतीत्यर्थः । अस्मै अग्न्यर्थं बर्हिः आस्तृणन् वेद्यां बर्हिरास्तृणन्ति । आदित् अनन्तरमेवैनमग्निं होतारमनुमन्यमाना न्यषादयन्त निषण्णं कुर्वन्ति ॥

[7] अथैन्द्राग्नस्य पुरोरुचमाह—इन्द्रसहितेनाग्निना ग्रहदेवतारूपेणाऽयमाहुत्याधारोऽग्निः समिध्यते सम्यग्दीप्यते । कीदृशोऽग्निः? कविः हवनप्रकारं विद्वान्, गृहपतिः यज्ञगृहस्वामी, युवा सर्वदा तरुणः, देवार्थं हव्यं वहतीति हव्यवाट्, जुहूरेवास्यं मुखं यस्यासौ जुह्वास्यः जुहूगतं हविरयं भक्षयतीत्यर्थः ॥

[8]अग्निर्देवानां जठरम्। पूतदक्षः कविक्रतुः। देवो देवेभिरागमत्। [9]अग्निश्रियो मरुतो विश्वकृष्टयः। आ त्वेषमुग्रमव ईमहे वयम्॥ ३७॥ ते स्वानिनो रुद्रिया वर्षनिर्णिजः। सि५ंहा न हेषक्रतवस्सु-

[8] अथ वैश्वदेवग्रहस्य पुरोरुचमाह—योऽयमग्निः स एव देवानां जठरं उदरस्थानीयः। पूतश्चासौ दक्षश्चेति पूतदक्षः, पूतः शुद्धः दक्षः कर्मनिष्पादनकुशलः। कविक्रतुः कवीनां विदुषां देवानां संबन्धी क्रतुर्यागो यस्यासौ कविक्रतुः तादृशो देवोऽग्निर्देवेभिरन्यैर्देवैस्सह आगमत् इह कर्मण्यागच्छतु।

[9] अथ मरुत्वतीयग्रहाणां यास्तिस्रः पुरोरुचस्तासां मध्ये प्रथमामाह—य एते मरुतस्ते अग्निश्रियो विश्वकृष्टयश्च। अग्निं श्रयन्ते सेवन्त इत्यग्निश्रियः ते हविस्स्वीकरणार्थमग्निमाश्रयन्ति। विश्वे कृष्टयो मनुष्या येषां ते विश्वकृष्टयः सर्वैर्मनुष्यैः पूज्या इत्यर्थः। तादृशानां मरुतां अवः रक्षणं आ समन्तात् वयमीमहे याचामहे। ते ह्यस्मान्रक्षन्ति। कीदृशं रक्षणं? त्वेषं दीप्तिमत् उग्रं विरोधिनां भयंकरम्। यथा दीप्त्या विरोधि तमो नश्यति एवमेव तदीयरक्षणजन्येन तेजसा अस्मद्विरोधिनो नश्यन्तीत्यर्थः। ते मरुतो वायुविशेषाः स्वानिनः वृष्टिवेलायां स्वानयुक्ता गर्जनयुक्ताः। रुद्रो वैद्युताग्निः "रुद्रो वा एष यदग्निः" इति श्रुतेः,। रुद्रियाः वैद्युताग्नियुक्ताः। वर्षेण निर्णेजन्ति भूमिं शोधयन्तीति वर्षनिर्णिजः। सिंहा न सिंहा इव। हेषक्रतवः शब्दकारिणः, उत्साहेन सिंहनादं कुर्वन्तीत्यर्थः। सुदानवः शोभनफलस्य दातारः।

वान्वः । [10] यदुत्तमे मरुतो मध्यमे वा । यद्वाऽवमे सुभगासो दिविष्ठ । ततो नो रुद्रा उत वान्वस्य । अग्ने वित्ताद्धविषो यद्यजामः । [11] ईडे अग्निꣳ स्ववसं नमोभिः । इह प्रसत्तो विचयत्कृतं नः । रथैरिव प्रभरे वाजयद्भिः । प्रदक्षिणिन्मरुताꣳ स्तोममृध्याम् ॥ ३८ ॥ [1] श्रुधि श्रुत्कर्ण वह्निभिः । देवै-

[10] अथ द्वितीयामाह—हे मरुतो यूयं यदुत्तमे स्थाने स्थिताः यदि वा मध्यमे स्थिताः यद्वा अवमेऽत्यन्तनिकृष्टे स्थाने स्थिताः अथवा सुभगासः सौभाग्ययुक्तास्सन्तो दिवि द्युलोके स्थिताः । हे रुद्राः दुःखद्राविणो मरुतः ततो द्युस्थानात् उत वा अन्यस्मात्स्थानात् नः अनु अस्माननुगच्छत । हेऽग्ने यद्धविर्वयं यजामः अस्य हविषः सारं वित्तात् जानीहि ।

[11] अथ तृतीयामाह—स्ववसं सुष्ठु रक्षकमग्निं नमोभिः नमस्कारैस्सह ईडे स्तुतिं कुर्वे । सोऽग्निरिह कर्मणि प्रसत्तः प्रकर्षेण समागतस्सन् नः अस्माभिः यत्कृतं कर्म तत् विचयत् विचिनुयात् । वाजयद्भिः अन्नमिच्छद्भिः ऋत्विग्भिस्सहितोऽहं रथैरिव प्रभरे यथा रथैर्युद्धसाधनानि प्रकर्षेण हरन्ति एवमहं हवींषि प्रकर्षेण हरामि । प्रदक्षिणित् प्रदक्षिणगमनभक्त्या प्रदक्षिणं कुर्वन्नहं मरुतां संबन्धिनं स्तोमं स्तोत्रयुक्तं यज्ञं ऋध्यां समृद्धं कुर्याम् ।

[12] अथ माहेन्द्रग्रहस्य पुरोरुचमाह—हेऽग्ने श्रुत्कर्ण शृण्वत्कर्ण विज्ञाप्यस्य श्रोतः वह्निभिः हविषो वोढृभिः, सयावभिः गमनशीलैस-

रेग्ने सयावभिः । आसीदन्तु बर्हिषि । मित्रो वरुणो अर्यमा । प्रातर्यावाणो अध्वरम् । [13] विश्वेषामदितिर्यज्ञियानाम् । विश्वेषामतिथिर्मानुषाणाम् । अग्निर्देवानामव आवृणानः । सुमृडीको भवतु विश्ववेदाः । [14] त्वे अग्ने सुमतिं भिक्षमाणाः ॥ ३१ ॥ दिवि श्रवो दधिरे यज्ञियासः । नक्ता च चक्रुरु-

---

हिते देवैस्सह त्वं श्रुधि अस्मद्विज्ञाप्यं शृणु । अध्वरं यज्ञं प्रातर्यावाणः प्रातःकाले गन्तारो मित्रादयस्त्रयः बर्हिषि अस्मदीययज्ञे आसीदन्तु आगत्य तिष्ठन्तु ।

[13] अथादित्यग्रहस्य तिस्रः पुरोरुचः । तत्र प्रथमामाह—अयमग्निः सुमृडीकः सुखहेतुर्भवतु । कीदृशोऽग्निः? यज्ञियानां यज्ञयोग्यानां विश्वेषां सर्वेषामृत्विजां अदितिः अखण्डयिता मातृवत्पालक इत्यर्थः । तथा विश्वेषां सर्वेषां मानुषाणां अतिथिः अतिथिवत्पूजनीयः । देवानां सर्वेषां मध्ये अवः अस्मद्रक्षणं आवृणानः सर्वत्र प्रार्थयमानः । विश्ववेदाः विश्वस्य वेदिता ।

[14] अथ द्वितीयामाह—हेऽग्ने यज्ञियासः यज्ञार्हा ऋत्विग्यजमानाः त्वे त्वयि सुमतिं शोभनबुद्धिं त्वत्सेवापरां भिक्षमाणाः याचमानाः दिवि द्युलोके श्रवः कीर्तिं दधिरे संपादितवन्तः । त्वां सेवित्वा देवेषु कीर्तिं प्राप्ता इत्यर्थः । उषसा उषःकालेन सह नक्ता च रात्रिमपि चकारादहश्च विरूपे विलक्षणरूपयुक्ते चक्रुः कृतवन्तः । तदेव कथमिति तदुच्यते—कृष्णं वर्णं रात्रेः

षसा विरूपे। कृष्णं च वर्णमरुणं च संधुः।
[15]त्वामग्न आदित्यास आस्यम्। त्वां जिह्वा२
शुचयश्चक्रिरे कवे। त्वा२ रातिषाचो अध्वरेषु
सश्चिरे। त्वे देवा हविरदन्त्याहुतम्। [16]नि त्वा
यज्ञस्य साधनम्। अग्ने होतारमृत्विजम्। वनु-

कृष्णरूपम्, अरुणं चोषसो रक्तरूपम्, चकाराभ्यामह्नः शुक्ल-रूपं च संधुः संपादितवन्तः यज्ञानुष्ठानद्वारा यजमाना यज्ञेन तुष्टा देवा वा तादृशं रूपं कृतवन्त इत्यर्थः।

[15]अथ तृतीयामाह—हेऽग्ने, आदित्यासः एते आदित्याः त्वा-मास्यं मुखं चक्रिरे त्वयि हुतस्य भक्षणात्। हे कवे विद्वन्नग्ने शुचयः शुद्धा अन्येऽपि देवास्त्वां स्वकीयजिह्वां चक्रिरे। रातिं फलदानं सचन्ते समवनयन्तीति रातिषाचः फलप्राप्तिकामा इत्यर्थः। तादृशा यजमानास्त्वामग्निमध्वरेषु यागेषु सश्चिरे फलदानाय प्राप्त-वन्तः। देवाः सर्वेऽपि त्वे त्वयि आहुतं सर्वतो हुतं हविरिदमदन्ति॥

[16]अथ सावित्रग्रहस्य पुरोरुचमाह—हेऽग्ने देव त्वां निधी-महि नितरां ध्यायेम। कीदृशं? यज्ञस्य साधनं होमद्वारा नि-ष्पादकं, होतारं देवानामाह्वातारं, अत एव ऋत्विजं ऋत्विक्समानं, प्रचेतसं प्रकृष्टज्ञानयुक्तं, जीरं जीवनप्रदं, दूतं हितार्थं यतमानं अमर्त्यं मरणरहितम्। वनुष्वादिति क्रियाविशेषणम्। परिचरण-वद्यथा भवति तथा ध्यायेमेत्यर्थः॥

ष्वदेव धीमहि प्रचेतसम्। जीरं दूतममर्त्यम् ॥ ४०

यज्ञवाहसा सपर्यन्वयमृध्यां भिक्षमाणाः प्रचेतसमेकं च ॥ १२ ॥

अत्र विनियोगसंग्रहः—

अस्याजरा पुरोरुक्स्यादग्निष्टुत्यैन्द्रवायवे ।
यजेति मैत्रावरुणे आश्विनेत्याश्विने ग्रहे ॥ १ ॥
द्वे द्विरूपे तु शुक्रस्य ग्रह पूर्वेति मन्थिनी ।
त्रीणीत्याग्रयणे ह्यग्निनेत्यैन्द्राग्नग्रहे भवेत् ॥ २ ॥
अग्निर्देवा वैश्वदेवे ह्यग्निश्रिय इति त्रयम् ।
ज्ञेया मरुत्वतीयेषु माहेन्द्रे तु श्रुधीत्यसौ ॥ ३ ॥
विश्वेषां तिस्र आदित्ये नि त्वा सावित्रके ग्रहे ।
अनुवाके द्वादशेऽस्मिन्मन्त्राः षोडश वर्णिताः ॥ ४ ॥

अथ मीमांसा । दशमाध्यायस्य चतुर्थे पादे चिन्तितम्—

आग्नेयेषु ग्रहेषूहो नास्ति वा स्तुतशस्त्रयोः ।
संस्कारत्वादस्ति नैवमर्थकर्मत्वनिर्णयात् ॥

अग्निष्टुदाख्य एकाहे श्रूयते—"आग्नेया ग्रहा भवन्ति" इति । तेषु चोदकप्राप्तयोर्नानादेवत्ययोः स्तुतशस्त्रयोः संस्कारकर्मत्वभ्रमेणास्त्यूह इति वदन्तं प्रत्येतदुत्तरं—द्वितीयाध्याये तयोरर्थकर्मत्वस्य निर्णीतत्वान्नास्त्यूह इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके सप्तमप्रपाठके द्वादशोऽनुवाकः.

[1]तिष्ठा हरी रथ आ युज्यमाना याहि। वायुर्न नियुतो नो अच्छ। पिबास्यन्धो अभिसृष्टो अस्मे। इन्द्र स्वाहा ररिमा ते मदाय। [2]कस्य वृषा सुते सचा। नियुत्वान्वृषभो रणत्। वृत्रहा

[1] द्वादशेऽनुवाकेऽग्निष्टुद्यागे ग्रहाणां पुरोरुचोऽभिहिताः। अथ त्रयोदशे इन्द्रस्तुद्यागे ग्रहाणां पुरोरुचोऽभिधीयन्ते। एतच्च सूत्रे स्पष्टमभिहितम्—"इन्द्रस्तुत इन्द्रस्तोमेनोक्थ्येनेन्द्रियकामो वीर्यकामो वा यजेत, ऐन्द्रियः पुरोरुचस्तिष्ठा हरी कस्य वृषेत्यैन्द्रवायवस्य तृतीया मैत्रावरुणस्य चतुर्थ्याश्विनस्य पञ्चमी षष्ठी शुक्रामन्थिनोः सप्तम्याग्रयणस्य नित्योक्थ्यस्य नियुनक्ति ध्रुवैन्द्राग्नवैश्वदेवानां नित्या-मरुत्वतीयमाहेन्द्राणां, आ नो विश्वाभिरिति तिस्र आदित्यग्रहस्यो-त्तमा सावित्रस्य" इति। तत्रैन्द्रवायवस्य प्रथमां पुरोरुचमाह—हे इन्द्र युज्यमाना रथे संबध्यमानौ हरी अश्वावातिष्ठ अधितिष्ठ, नोऽस्मान् अच्छ अभिलक्ष्य आयाहि आगच्छ। तत्र दृष्टान्तः—वायुर्न नियुतः, यथा नियुत्संज्ञकानश्वानभिलक्ष्य वायुर्याति तद्वत्, आगत्य च अस्मे अस्माभिः अभिसृष्टः प्रेरितस्त्वं अन्धः अन्नरूपं सोमं पिबासि पीतवान्भव। हे इन्द्र ते मदाय तव हर्षार्थं स्वाहा ररिमा स्वाहाकृतं हविर्ददिम।

[2] अथ तत्रैव द्वितीयां पुरोरुचमाह—कस्य प्रजापतेः संबन्धी वृषा इन्द्रः सुतेऽभिषुते सोमे सचा संबद्धो नियुत्वान् नियुन्नामकै-रश्वैर्युक्तो वायुः वृषभो रणत्, यथा वृषभो दृप्तो रणति तथाऽयं वायु-स्तुष्टो रणति गर्जति। वृत्रहा इन्द्रश्च सोमपीतये सोमपानाय रणति।

सोमंपीतये । [3]इन्द्रं वयं मंहाधुने । इन्द्रमर्भे हवा-
महे । युजं वृत्रेषु वुज्रिणम् ॥ ४१ ॥ [4]द्विताया
वृत्रहन्तंमः । विद इन्द्रश्शतक्रंतुः । उप नो हरिं-
भिस्सुतम् । [5]स सूर आ जनयञ्ज्योतिरिन्द्रम् ।
अया धिया तरणिरद्रिंबर्हाः । ऋतेन शुष्मीनवं-

[3]अथ मैत्रावरुणग्रहस्य पुरोरुचमाह—वयं यजमाना महाधने बहुधनसाध्ये प्रौढकर्मणीन्द्रं हवामहे आह्वयामः । अर्भे स्वल्पेऽपि कर्मणि इन्द्रं हवामहे आह्वयामः । कीदृशमिन्द्रं ? युजं कर्मद्वयेऽपि योग्यं, वृत्रेषु प्राप्तेषु शत्रुषु वज्रिणं वज्रहस्तम् ।

[4]अथाश्विनग्रहस्य पुरोरुचमाह—द्वयोर्लोकयोः समूहो द्विता तस्यां द्वितायां वृत्रहन्तमः अतिशयेन वैरिघाती शतक्रतुः शतसंख्याकाश्वमेधयुक्तो य इन्द्रो विद्यते सोऽयमिन्द्रो हरिभिरश्वैः सह उप अस्माकं समीपं प्राप्य सुतं अभिषुतं सोमं विदे लब्धवान् ।

[5]अथ शुक्रग्रहस्य पुरोरुचमाह—स शुक्रग्रहरूपः सूरः आदित्यः ज्योतिः प्रकाशं जनयन्निन्द्रमागच्छतु । अया धिया अनया मदनुग्रहबुद्ध्या तरणिः त्वरमाणः अद्रिबर्हाः पर्वतानां शत्रूणां निबर्हिता अभिभविता भवति । ऋतेन यज्ञेनानुष्ठितेन शुष्मीन् बलवतोऽस्मान् अर्कैः अर्चनीयैः फलैःअवमानः पालयमानो वर्तते । अस्तः निरसनकुशलः अद्रिः पर्वतसमान इन्द्र उस्त्रिधः उत्कर्षेणागच्छतः शत्रून् विबिभेद विशेषेण दारितवान् ।

मानो अर्कैः । व्युस्त्रिधौ अस्रो अद्रिर्बिभेद । [6]उत त्यद्वाश्वाश्वियम् । यदिन्द्र नाहुषीष्वा । अग्रे विक्षु-प्रतीदयत् ॥ ४२ ॥ [7]भरेष्विन्द्रꣳ सुहवꣳ हवामहे । अꣳहोमुचꣳ सुकृतं दैव्यं जनम् । अग्निं मित्रं वरुणꣳ सातये भगम् । द्यावापृथिवी मरुतस्स्वस्तये । [8]महि क्षेत्रं पुरुश्चन्द्रं विविद्वान् । आदित्सखिभ्यश्चरथꣳ समैरत् । इन्द्रो नृभिरजनद्दीद्यान-

[6]अथ मन्थिग्रहस्य पुरोरुचमाह—हे इन्द्र नाहुषीषु नहुषस्य राज्ञः संबन्धिनीषु विक्षु प्रजासु यद्धनं प्रतीदयत् प्रत्येकमेव प्राप्तमासीत् तादृशं आश्वाश्वियमुत आशुगाम्यश्वसमूहयुक्तमपि हेऽग्रे आ त्यत् त्वमेव स्वभक्तेभ्य आनयसि ।

[7]अथाग्रयणस्य पुरोरुचमाह—सुहवं सुखेनाह्वातुं शक्यमिन्द्रं भरेषु भरणीयेषु कर्मसु हवामहे आह्वयामः । तथाऽग्निमित्रावरुणान्भगमादित्यं च सातये धनलाभायाह्वयामः । तथा द्यावापृथिव्यौ मरुतश्च स्वस्तये क्षेमायाह्वयामः ।

[8]अथैन्द्राग्नस्य पुरोरुचमाह—अयमिन्द्रो विविद्वान् विविधद्रव्यजातं जानन् आदित् अनन्तरमेव सखिभ्यः सखिसदृशेभ्यो यजमानेभ्यो महि प्रौढं क्षेत्रं पुरुश्चन्द्रं बहुलमाह्लादकारि धनं च रथं चरणशीलं गोमहिषादि च समैरयत् सम्यक्प्रेरितवान् दत्तवानित्यर्थः । सोऽयमिन्द्रः दीद्यानः दीप्यमानः नृभिः मनुष्यैः ऋत्विग्भिस्सार्धं सूर्यादीनजनत् अजनयदुत्पादितवान् । गातुं गमनशीलो वायुः तम् ।

स्साकम् । सूर्यमुषसं गातुमग्निम् । [9]उरुं नो लोकमनुनेषि विद्वान् । सुवर्वज्ज्योतिरभयꣳ स्वस्ति ॥ ऋष्वा त इन्द्र स्थविरस्य बाहू । उपस्थेयाम शरणा बृहन्ता । [10]आ नो विश्वाभिरूतिभिस्सजोषाः । ब्रह्म जुषाणो हर्यश्व याहि । वरीवृजत्स्थविरेभिस्सुशिप्र । अस्मे दधद्वृषणꣳ शुष्ममिन्द्र ।

[9]अथ वैश्वदेवग्रहस्य पुरोरुचमाह—हे इन्द्र त्वं विद्वान् सर्वं जानन्नोऽस्मदर्थमुरुं विस्तीर्णं लोकं अनुनेषि अनुक्रमेण संपादयसि । तथा सुवर्वत् स्वर्गयुक्तं तत्साधनभूतमित्यर्थः । अभयं भयरहितं स्वस्ति क्षेमकरं ज्योतिः अग्निस्वरूपं ऋष्व प्राप्नुहि । स्थविरस्य चिरकालीनत्वेन वृद्धसदृशस्य ते तव बाहू उपस्थेयाम उपस्थानं करवाम । त्वदीयं बाहुद्वयमनुग्रहबुद्ध्या यथाऽस्मच्छिरसि स्थापयसि तथा वयं त्वां भजेम । कीदृशौ बाहू? शरणा रक्षितारौ बृहन्ता गुणाधिकौ ।

[10]अथादित्यग्रहस्य तिस्रः पुरोरुचः । तत्र प्रथमामाह—हरिनामकावश्वौ यस्यासौ हर्यश्वः । शोभने शिप्रे हनू यस्यासौ सुशिप्रः, तादृश हे इन्द्र त्वं ब्रह्म जुषाणः परिवृढमिदं कर्म सेवमानः सजोषाः अस्माभिस्सह समानप्रीतिस्सन् विश्वाभिरूतिभिः समस्तै रक्षणैस्साहितो नोऽस्मान्प्रति आयाहि आगच्छ । किं कुर्वन्? स्थविरेभिर्वरीवृजत् प्रवृद्धैरुपायैर्वर्जयितव्याञ्छत्रूनत्यर्थं वर्जयन् । तथा वृषणं कामवर्षणहेतुं शुष्मं बलं अस्मे दधत् अस्मासु संपादयन् ॥

[11]इन्द्राय गाव आशिरम् । दुदुहे वज्रिणे मधु । यदसीमुपह्वरेऽविदत् । [12]तास्ते वज्रिन्धेनवो जोजयुर्नः ॥ ४४ ॥ गभस्तयो नियुतो विश्ववाराः । अहरहर्भूय इज्जोगुवानाः । पूर्णा इन्द्र क्षुमतो भोजनस्य । [13]इमां ते धियं प्रभरे महो महीम् । अस्य

[11]अथ द्वितीयामाह—वज्रिणे वज्रयुक्ताय इन्द्राय इन्द्रार्थं आशिरं ईषन्मार्पितं दधिहेतुभूतं मधु मधुरं क्षीरं गावो दुदुहे दुग्धवत्यः । यत्सीं यदेव क्षीरमुपह्वरेऽस्मिन्प्रवृत्तेऽध्वरे वर्तमान इन्द्रोऽविदत् अलब्ध । तत्क्षीरं दुदुह इति पूर्वत्रान्वयः ॥

[12]अथ तृतीयामाह—हे वज्रिन् वज्रयुक्तेन्द्र ते त्वदर्थं ताः पूर्वोक्ता धेनवो नोऽस्माञ्जोजयुः शीघ्रमेव प्राप्ताः । कीदृश्यो धेनवः ? गभस्तयो दीप्तिमत्यः पुष्टशरीरा इत्यर्थः । नियुतो नियमेन क्षीरादेर्मिश्रयित्र्यः । विश्ववाराः स्वकीयक्षीरेण क्षुधादिरूपं विश्वं सर्वमप्युपद्रवं वारयन्तीति विश्ववाराः । अहरहः दिनेदिने भूयइत् भूयिष्ठमेव जोगुवानाः शब्दयन्त्यः क्षीरपूर्णस्तनत्वेन दोहनार्थं वत्समाकारयितुं हम्भारवं कुर्वत्य इत्यर्थः । क्षुमतः शब्दवतो भोजनस्य पूर्णाः पूरयित्र्यः क्षीरस्य बाहुल्ये सति चुलुकेन पुनःपुनर्भोजने हि महान् शब्द उत्पद्यते ॥

[13]अथ सावित्रग्रहस्य पुरोरुचमाह—हे इन्द्र महो महनीयस्य ते तव महीं महतीमिमामनुग्रहरूपां धियं प्रभरे प्रकर्षेण धारयामि । अस्य ते ईदृशस्य तव संबन्धि यत्स्तोत्रमानेभ

स्तो॒त्रे धि॒षणा॒ यत्त॑ आन॒जे । तमु॒त्स॒वे च॑ प्रस॒वे च॑ सास॒हिम् । इन्द्रं॑ दे॒वास॒श्शव॑सा मद॒न्ननु॥४५॥ व॒ज्रिणमयत्स्व॒स्ति जौजयुर्नस्सम च ॥१३॥

त्वद्गुणानभिव्यञ्जयति तस्मिन् स्तोत्रे धिषणा मदीया बुद्धिः प्रवर्ततामिति शेषः । उत्सवेऽस्मिन्कर्मानुष्ठानरूपे प्रसवे च तत्फलोत्पादने सासहिं अत्यन्तसहिष्णुं सर्वदोद्युक्तमित्यर्थः । तादृशं शवसा बलेन युक्तं तमिन्द्रं देवासः सर्वे देवा अनुमदन् अनुमोदन्ताम् ॥

अत्र विनियोगसंग्रहः—

इन्द्रस्तुत्रामके यागे ग्रहाणां स्युः पुरोरुचः ।
तिष्ठा कस्येत्यैन्द्रवायव इन्द्रं तदनन्तरे ॥ १ ॥

द्वितीयं इत्याश्विने स्यात्स मूरः शुक्रसंज्ञके ।
उत त्यं मन्थिनाम्नि स्याद्भूरेष्वाग्रयणग्रहे ॥ २ ॥

महीत्यैन्द्राग्नके वैश्वदेवे तूरुं न इत्यसौ ।
आदित्ये तिस्त्र आ नः स्युरिमां सावित्रकग्रहे ।
त्रयोदशोऽनुवाकेऽस्मिन्मन्त्रा उक्तास्त्रयोदश ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
सप्तमप्रपाठके त्रयोदशोऽनुवाकः.

[1]प्रजापतिः पशूनसृजत । तेऽस्मात्सृष्टाः पराञ्च आयन् । तानग्निष्टोमेन नाप्नोत् । तानुक्थ्येन नाप्नोत् । तान्षोडशिना नाप्नोत् । तान्रात्रिया नाप्नोत् । तान्संधिना नाप्नोत् । सोऽग्निमब्रवीत् । इमान्म ईप्सेति । तानग्निस्त्रिवृता स्तोमेन नाप्नोत् ॥४६

स इन्द्रमब्रवीत् । इमान्म ईप्सेति । तानिन्द्रः पञ्चदशेन स्तोमेन नाप्नोत् । स विश्वान्देवानब्रवीत् । इमान्म ईप्सतेति । तान्विश्वे देवास्सप्तदशेन स्तोमेन नाप्नुवन् । स विष्णुमब्रवीत् । इमान्म ईप्से-

[1]त्रयोदशे इन्द्रस्तुन्नामके क्रतौ ग्रहाणां पुरोरुच उक्ताः । चतुर्दशे त्वप्तोर्यामविधिरुच्यते । तं विधातुमाख्यानमाह—प्रजापतिना सृष्टाः पशवो यदा पुनरावृत्तिरहिताः प्रजापतेस्सकाशाद्गतास्तदा प्रजापतिराग्निष्टोमादिकं क्रमेणानुष्ठाय तान्पशून्प्राप्तुं न शक्तोऽभूत् । यद्रात्रिया अतिरात्रक्रतुगतै रात्रिपर्यायैः स्तोत्रैः, संधिना अतिरात्रावसाने त्रिवृद्राथंतरः संधिरिति यत्स्तोत्रं विहितं तेन स्तोत्रेण । एतैरुपायैः पशून्प्राप्तुमशक्तः प्रजापतिराग्निं प्रत्यब्रवीत् । हेऽग्ने मे मदर्थमिमान्पशूनीप्स आप्तुमिच्छ तदर्थमुद्योगं कुर्विति । ततः सोऽग्निस्तदर्थं त्रिवृत्स्तोममनुष्ठाय तेन प्राप्तुं शक्तो नाभूत् । एवमिन्द्रो विश्वे देवाश्च । विष्णुस्तु एकविंशस्तोममनुष्ठाय तेन पशून्प्राप्य वारवन्तीयेन साम्ना पुनर्गमनं निवारयामास । अतोऽयं विष्णुः

र्ति । तान्विष्णुरेकवि॒ꣳशेन॒ स्तोमेनाप्नोत् । वा॒र॒वन्तीयेनावारयत ॥१७॥ इ॒दं विष्णु॒र्विचक्रम॒ इति॒ व्यक्रमत । [2]यस्मात्प॒शवः॒ प्र प्रेव॒ भ्रꣳशेरन् । स ए॒तेन यजेत । [3]यदाप्नोत् । तद॒प्तोर्यामस्याप्तोर्याम॒त्वम् । ए॒तेन॒ वै दे॒वा जैत्वानि जि॒त्वा । यं काम॒-

"इदं विष्णुः" इति मन्त्रेणोक्तो यो विक्रमस्तं कृतवान् । तमेव पशुप्राप्तिरूपं विक्रमं मन्त्रोऽवादीदित्यर्थः ॥

[2]इदानीमप्तोर्यामक्रतुं विधत्ते—एकः प्रशब्दः प्राथम्यवाची, अपरः प्रकर्षवाची । प्रथममेव पशवो यस्मात्पुरुषात् प्रेव भ्रंशेरन् प्रकर्षेण भ्रष्टा इव भवन्ति स पुरुष एतेनाप्तोर्यामेण स्तोमेन यजेत । तत्स्वरूपं सूत्रकारेण स्पष्टमुक्तम्—"अप्तोर्यामश्चेत्संभिन्नमसानुन्नयंश्चतुर्भ्यश्चमसगणेभ्यो राजानमतिरेचयति" इति । संभिस्तोत्रपर्यन्तैरेकोनत्रिंशत्स्तोत्रैर्युक्तमतिरात्रप्रयोगमनुष्ठाय तत ऊर्ध्वं चतुर्भ्यश्चमसगणेभ्यो राजानमतिरेचयेत् । ततः पुनरपि चत्वारि स्तोत्राणि भवन्ति । तदेवं त्रयस्त्रिंशत्स्तोत्रयुक्तोऽप्तोर्यामः ॥

[3]तस्य निर्वचनं दर्शयति—यस्मात्कारणादनेन क्रतुना पशूनाप्तस्तस्मात्कारणादाप्त्यर्थो यामो यज्ञ इति व्युत्पत्त्या तन्नाम संपन्नम् । एतस्य क्रतोः सर्वकामप्राप्तिसाधनत्वं दर्शयति—पुरा देवा एते

मकामयन्त तमाप्नुवन् । यं कामं कामयते । तमेतेनाप्नोति ॥ ४८ ॥

स्तोमेन नाप्नोदवारयत नव च ॥ १४ ॥

[1]व्याघ्रोऽयमग्नौ चरति प्रविष्टः । ऋषीणां पुत्रो अभिशस्तिपा अयम् । नमस्कारेण नमसा ते जु-

नाप्तोर्यामक्रतुना जेतव्यानि सर्वाणि युद्धानि जित्वा काम्यमानं फलं प्राप्नुवन् । अतोऽन्योऽपि देववत्सर्वं प्राप्नोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके सप्तमप्रपाठके चतुर्दशोऽनुवाकः.

---

[1] चतुर्दशेऽप्तोर्यामोऽभिहितः । अथ पञ्चदशषोडशसप्तदशेष्वनुवाकेषु यज्ञसंयुक्तालौकिको राजाभिषेकोऽभिधीयते । तत्रास्मिन्ननुवाके ताव-दादौ होममन्त्रा उच्यन्ते । कल्पः—"व्याघ्रोऽयमग्नाविति सप्ता हुतीर्हुत्वा" इति । तत्र प्रथमामृचमाह—अयमभिषेकार्हो राजाऽ-स्मिन्नाहुत्याधारेऽग्नौ प्रविष्टो व्याघ्रवदप्रधृष्यो भूत्वा लोके चरति । सोऽयमृषीणामृत्विजां पुत्रः, अभिषेकसंस्कारेण तैरुत्पादितत्वात् । अभिशस्तिपाः पापेभ्यः पाता रक्षिता भवत्विति शेषः । हेऽग्ने ते तव नमस्कारेण युक्तोऽहं नमसा उपनतेन हविषा जुहोमि । देवानां भागं मिथुया कर्म यथा मिथ्या भवति तथा वयं मा कार्ष्म किंतु सत्यमेव कुर्म इत्यर्थः ।

होमि । मा देवानां मिथुया कर्म भागम् । [2]सावीर्हिं देव प्रसवाय पित्रे । वर्ष्माणमस्मै वरिमाणमस्मै । अथास्मभ्यꣳ सवितस्सर्वताता । दिवेदिव आसुवा भूरिपश्वः । [3]भूतो भूतेषु चरति प्रविष्टः । स भूतानामधिपतिर्बभूव ॥ ४१ ॥ तस्य मृत्यौ चरति राजसूयम् । स राजा राज्य-

---

[2] अथ द्वितीयामाह—हे देव प्रसवाय प्रजानां प्रेरकाय पित्रे पालकायास्मै राज्ञे वर्ष्माणं सावीर्हि सर्वथा प्रेरय । अस्य राज्ञो देहो यथा सर्वान्पालयति तथा त्वमनुगृहाणेत्यर्थः । किं चास्मै राज्ञे वरिमाणमुरुत्वं राज्यविस्तारं सावीः प्रेरय अनुजानीहि । अथ अनन्तरं हे सवितः सर्वे देवास्तायन्ते विस्तीर्यन्त एष्विति सर्वताता ये यज्ञास्तेषु सर्वताता अस्मभ्यमस्मदर्थं भूरिपश्वः भूरीन्बहुलान्पशून् आसुव सर्वतः प्रेरय ॥

[3] अथ तृतीयामाह—भूतेषु प्राणिजातेषु मध्ये प्रविष्टोऽयं भूतः स्वयमुद्भूतश्चरति सर्वनियामकत्वेन प्रवर्तते । अत एव भूतानां प्राणिनां सर्वेषामधिपतिः स्वामी बभूव । तस्य राज्ञो मृत्यौ दुष्टशिक्षारूपमरणनिमित्तभूते सति राजसूयं चरति । राजा सूयतेऽभिषिच्यतेऽस्मिन्कर्मणीति राजसूयाख्यमिममभिषेकमिदं कर्म च दुष्टशिक्षार्थं प्रवर्तत इत्यर्थः । सोऽभिषिक्तो राजा राज्यमिदमनुमन्यतां दुष्टशिक्षाशिष्टपरिपालनरूपं यद्राजकृत्यं तदङ्गीकरोतु ॥

मनुमन्यतामिदम् । [4]येभिश्शिल्पैः पप्रथानाम-दृꣳहत् । येभिर्द्यामभ्यपिꣳशत्प्रजापतिः । ये-भिर्वाचं विश्वरूपाꣳसमव्ययत् । तेनेममग्न इह वर्चसा समङ्ग्धि । [5]येभिरादित्यस्तपति प्रकेतु-भिः । येभिस्सूर्यो ददृशे चित्रभानुः । येभिर्वाचं पुष्कलेभिरव्ययत् । तेनेममग्न इह वर्चसा स-मङ्ग्धि । [6]आऽयं भातु शवसा पञ्च कृष्टीः ।

[4]अथ चतुर्थीमाह—प्रजापतिर्येभिः शिल्पैः कौशलैः पप्रथानां विस्तारयुक्तामिमां पृथिवीमदृंहत दृढीकृतवान्, तथा येभिः कर्म-कौशलैर्द्यां द्युलोकमभ्यपिंशत् अभितश्चन्द्रतारकादिभिः सुरूपामकरोत्, तथा येभिर्यैः कर्मकौशलैर्वाचमिमामुच्चार्यमाणां विश्वरूपां नानाप-दार्थवाचकत्वेनानेकरूपां समव्ययत् सम्यक्संपादितवान्, तेन तथा-विधकौशलजातेन वर्चसा तद्योगेन बलेन च हेऽग्ने इमं राजान-मिह लोके समङ्ग्धि समर्थं कुरु, तथाविधसामर्थ्येन संयोजयेत्यर्थः ॥

[5]अथ पञ्चमीमाह—येभिः प्रकेतुभिः प्रकृष्टतेजोविशेषैरयमादि-त्यः सर्वत्र तापं करोति, किंच येभिर्यैस्तेजोविशेषैः सूर्यश्चित्रभानु-र्हृद्ये विचित्ररश्मियुक्तोऽयमिति प्राणिभिर्दृश्यते, येभिर्यैस्तेजोवि-शेषैः पुष्कलैः संपूर्णैर्वाचं शब्दात्मिकामव्ययत् विविधां परिवृतां सर्वो जन्तुरकरोत् । तेनेत्यादि पूर्ववत् ॥

[6]अथ षष्ठीमाह—अयं राजा शवसा बलेन पञ्च कृष्टीः पञ्च-संख्याकान्मनुष्यान्निषादपञ्चमान्ब्राह्मणादिवर्णविशेषानाभातु समन्ताद्दी-

इन्द्र इव ज्येष्ठो भवतु प्रजावान् । अस्मा अस्तु पुष्कलं चित्रभानु । आऽयं पृणक्तु रजसी उपस्थम् । [7]यत्ते शिल्पं कश्यप रोचनावत् । इन्द्रियावत्पुष्कलं चित्रभानु । यस्मिन्त्सूर्या अर्पिताः सप्त साकम् । तस्मिन्राजानमधिविश्रयेमम् । [8]द्यौरसि पृथिव्यसि । व्याघ्रो वैयाघ्रेऽधि ॥ ५१ ॥ विश्रयस्व दिशो महीः । विशस्त्वा सर्वा वाञ्छ-

पयतु । किंचायं राजा स्वयमिन्द्र इव ज्येष्ठः प्रशस्यतमः प्रजावान् स्वाधीनप्रजायुक्तो भवतु । अस्मै राज्ञे विद्यमानं सर्ववस्तुजातं पुष्कलं संपूर्णं चित्रभानु विचित्रत्वेन भासमानं स्वस्वकार्यक्षममस्तु । किंचायं राजा रजसी रञ्जनात्मिके द्यावापृथिव्यावुपस्थं तत्समीपस्थितमन्तरिक्षं च आपृणक्तु तेजसा सर्वतः प्राप्नोतु पालयत्वित्यर्थः ॥

[7]अथ सप्तमीमाह—हे कश्यपाख्य प्रजापते ते तव यच्छिल्पं कर्मकौशलं रोचनावद्दीप्तिमत् इन्द्रियावद्वीर्योपेतं पुष्कलं संपूर्णं चित्रभानु विचित्रत्वेन भासमानम् । किंच यस्मिंस्त्वदीये शिल्पे सप्तसंख्याकाः सूर्याः साकमर्पिताः सहावस्थापिताः । ते च सप्त सूर्या आरण्यकाण्डे 'आरोगो भ्राज' इत्यनुवाके प्रपञ्चिताः । तस्मिन् शिल्पे इमं राजानं अधिविश्रय अधिकत्वेनाश्रितं कुरु ॥

[8]कल्पः—"द्यौरसि पृथिव्यसीति यजमानायतने शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमास्तृणाति" इति । हे शार्दूलचर्म त्वं द्युलोकरूपमसि भूलोकरूपमसि । कल्पः—"तस्मिन्राजोपाविशति 'व्याघ्रो

न्तु । मा त्वद्राष्ट्रमधिभ्रशत् । [1]या दिव्या आपः पयसा संबभूवुः । या अन्तरिक्ष उत पार्थिवीर्याः । तासां त्वा सर्वासाꣳ रुचा । अभिषिञ्चामि वर्चसा । अभि त्वा वर्चसा सिचं दिव्येन । पयसा सह । यथाऽऽसा राष्ट्रवर्धनः ॥ ५२ ॥ तथा त्वा सविता करत् । इन्द्रं विश्वा अवीवृधन् । समुद्रव्यचसं गिरः । रथीतमꣳ रथीनाम् । वाजानाꣳ सत्पतिं पतिम् । वसवस्त्वा पुरस्तादभिषिं-

वैयाघ्रे' इत्यासीनमभिमन्त्रयते" इति । हे राजन्, त्वं व्याघ्रवदप्रधृष्यो भूत्वा व्याघ्रसंबन्धिनि चर्मण्यधि उपरिस्थितो महीर्महतीर्दिशः प्राच्यादिकी विश्रयस्व विशेषेणाऽऽश्रितो भव । सर्वा विशः प्रजास्त्वां वाञ्छन्तु कामयन्तु । इदं राष्ट्रं त्वत् माऽधिभ्रशत् त्वत्सकाशाद्भ्रष्टं मा भूत् ॥

[1]कल्पः—"अथैनं तोक्मावास्ताभिर्दूर्वावास्ताभिर्वाऽद्भिरभिषिञ्चति 'या दिव्या आपः' इति प्रतिपद्यापाङ्क्तात्" इति । यास्वप्सु तोक्मानि व्रीह्यङ्कुराण्यवास्तानि प्रक्षिप्तानि ता आपस्तोक्मावास्ता एवं दूर्वावास्ता अपि । दिव्या दिवि भवा आपो याः पयसा क्षीरेण सह संबभूवुः । अन्तरिक्षे याः संबभूवुः । उत अपिच पार्थिवीः पृथिव्यामुत्पन्ना या आपस्तासां सर्वासां रुचा दीप्त्या वर्चसा बलेन हे राजंस्त्वामभिषिञ्चामि । पयसा दिव्येन सह

ञ्चन्तु गायत्रेण छन्दसा । रुद्रास्त्वा दक्षिणतोऽभिषिञ्चन्तु त्रैष्टुभेन छन्दसा । आदित्यास्त्वा पश्चादभिषिञ्चन्तु जागतेन छन्दसा । विश्वे त्वा देवा उत्तरतोऽभिषिञ्चन्त्वानुष्टुभेन छन्दसा । बृहस्पतिस्त्वोपरिष्टादभिषिञ्चतु पाङ्क्तेन छन्दसा ॥ ५३ ॥

[10]अरुणं त्वा वृकमुग्रं खजंकरम् । रोचमानं मरुतामग्रे अर्चिषः । सूर्यवन्तं मघवानं विषासहिम् ।

वर्चसा बलेन त्वामभितः सिंच सर्वतः सिक्तं करोमि । यथा लोके सविता स्वयं राष्ट्रवर्धन आस तथा त्वामपि राष्ट्रवर्धनं करोतु । विश्वा गिरः सर्वाः स्तुतिरूपा वाचस्त्वामवीवृधन् वर्धितवत्यः । कीदृशं त्वाम्? इन्द्रं परमैश्वर्ययुक्तं समुद्रव्यचसं समुद्रवद्व्यापिनं रथीनां रथीतमम् रथयुक्तानां राज्ञां मध्येऽतिशयेन रथस्वामिनं वाजानामन्नानां पतिं पालकं तथा सत्पतिं सन्मार्गवर्तिनां पालकम् । हे राजन् त्वां पुरस्तात्पूर्वस्यां दिशि गायत्रच्छन्दोभिमानिदेवेन सह वसवोऽभिषिञ्चन्तु । एवं रुद्रास्त्वेत्यादिवाक्येष्वपि योजनीयम् ।

[10] कल्पः—"अरुणं त्वा वृकमित्येनमभिमन्त्र्य" इति ।

हे राजन् त्वामुक्थ्येषु स्तोत्रेष्विन्द्रं हुवेम इन्द्रत्वेनाह्वयाम इन्द्रनाम्नैव व्यवहराम इत्यर्थः । कीदृशं त्वां? अरुणं उदयकालीनसूर्यसदृशं, वृकं आरण्यमृगवच्छत्रूणां भयहेतुम् । अतएवोग्रं, खजंकरं खजः शत्रूणां भर्त्सनं तत्करोतीति खजंकरस्तं, मरुतां देवानामर्चिषः अग्रे रोचमानं, तदीयप्रकाशादप्यधिकेन प्रकाशेन युक्त-

इन्द्रमुक्थ्येषु नामहूतमꣳ हुवेम । [11]प्र बाहवा सिसृतं जीवसे नः । आ नो गव्यूतिमुक्षतं घृतेन । आ नो जने श्रवयतं युवाना । श्रुतं मे मित्रावरुणा हवेमा । [12]इन्द्रस्य ते वीर्यकृतः । बाहू उपावहरामि ॥ ५४ ॥

बभूवान्यंयत्तेनेममंग्न इह वर्चसा समंङ्ग्धि

मित्यर्थः । सूर्यवन्तं उपमानार्थं सूर्योऽस्यास्तीति सूर्यवांस्तं, मघवानं अन्नवन्तं, विषवद्वैरिणः सहतेऽभिभवतीति विषासाहिस्तं, नामहूतं युद्धेषु शत्रूनतिशयेन तत्तन्नाम्नाऽऽह्वयतीति नामहूतस्तम् ।

[11]कल्पः—"प्र बाहवेति बाहू प्रसार्य" इति । हे बाहवा उभौ बाहू नोऽस्माकं जीवसे जीवनाय प्रासिसृतं प्रसृतौ भवतम् । नोऽस्माकं गव्यूतिं गोसमूहं घृतेन उक्षतं सिञ्चतम् । युवाना तरुणौ परस्परमिश्रितौ वा युवां नोऽस्मान् जने जनसमूहे आश्रवयतं सर्वत्र प्रख्यापयतम् । हे मित्रावरुणारूपौ बाहू मे मदीयं इमा हव इदमाह्वानं श्रुतं शृणुतम् ।

[12]कल्पः—"इन्द्रस्य ते वीर्यकृत इत्युपाहरति" इति । हे राजन् वीर्यकृतः पराक्रमकारिण इन्द्रस्य परमैश्वर्ययुक्तस्य ते तव प्रसृतौ बाहू उपावहरामि पुनः संकुचितौ करोमि ॥

अत्र विनियोगसंग्रहः—

व्याघ्रो राजाभिषेकाय जुहुयात्सप्तमन्त्रकैः ।
द्यौर्व्याघ्रचर्म संस्तीर्य तत्स्थं व्याघ्रोऽभिमन्त्रयेत् ॥

वैयाघ्रेऽधि राष्ट्रावर्धनः पाङ्क्तेन छन्दसोपावहरामि ॥ १५ ॥

[1]अभि प्रेहि वीरयस्व । उग्रश्चेत्ता सपत्नहा । आतिष्ठ वृत्रहन्तमः । तुभ्यं देवा अधिब्रवन् । [2]अङ्कौ न्यङ्कावभितो रथं यौ । ध्वान्तं वाता-

---

अभिषिञ्चेदष्टभिर्वा, अरुणं मन्त्रयेत्तथा ॥ १ ॥
प्र बाहवा प्रसारः स्यादिन्द्रोपावहरेदुभौ ।
अनुवाके पञ्चदशे प्रोक्ता मन्त्रास्तु विंशतिः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके सप्तमप्रपाठके पञ्चदशोऽनुवाकः.

---

[1]पञ्चदशे राजाभिषेक उक्तः । षोडशे तदङ्गत्वेन रथारोहणमुच्यते । कल्पः—"अग्रेणाग्निं रथोऽवस्थितो भवत्यभि प्रेहीति तं राजाऽभ्येति" इति । सोऽयं मन्त्रोऽष्टमेऽनुवाके व्याख्यातः । कल्पः—"आतिष्ठ वृत्रहन्तम इत्यारोहन्तमभिमन्त्रयते" इति । अयमपि तत्रैव व्याख्यातः ॥

[2]कल्पः—"अङ्कौ न्यङ्काविति रथचक्रे अभिमृशति" इति । अङ्क इति दक्षिणचक्रस्य नाम, न्यङ्क इत्युत्तरचक्रस्य । रथमभितः रथस्य पार्श्वयोर्यावङ्कौ यौ च न्यङ्कौ विद्येते । एकैकस्मिन्पार्श्वे चक्रद्वयं रथस्य चक्रचतुष्टयोपेतत्वात् । अथवाऽङ्कशब्दश्चक्रवाची । न्यङ्कश-

मनुसंचरन्तौ । दूरे हेतिरिन्द्रियावान्पतत्री ।
ते नोऽग्नयः पप्रयः पारयन्तु । [3]नमस्त ऋषे गद ।
अव्यथायै त्वा स्वधायै त्वा ॥ ५५ ॥ मा न इ-
न्द्राभितस्त्वदृष्वारिष्टासः । एवा ब्रह्मन्तवेदस्तु ।
[4]तिष्ठा रथे अधि यद्वज्रहस्तः । आ रश्मीन्देव

ब्दश्चक्रयुक्तपक्षवाची । यावङ्कौ तौ यौ न न्यङ्कौ तौ धवन्तं
ध्वनियुक्तं वाताग्रं वायोः पूर्वभागमनुसंचरन्तौ वायोरपि शीघ्रवे-
गेन गच्छत इत्यर्थः । दूरे हेतिरित्यादिभिस्त्रिभिः शब्दैस्त्रयोऽ-
ग्निविशेषा उच्यन्ते । ते त्रयोऽप्यग्नयः पप्रयः गमनं पूरयन्तो
नोऽस्मान्पारयन्तु गमनसमाप्तिं प्रापयन्तु ॥

[3]कल्पः—"नमस्त ऋष इति पुरोहितमभिमन्त्रयते" इति । हे
ऋषे अतीन्द्रियद्रष्टः पुरोहित ते तुभ्यं नमोऽस्तु । गद अस्मभ्यं
हितं कथय । अव्यथायै शत्रुकृतबाधाराहित्याय त्वा त्वां भजाम
इति शेषः । स्वधायै अन्नार्थं त्वां भजामः । हे ऋष्व पुरोहि-
तात्मन् ऋषे, इन्द्र परमैश्वर्यसंपन्न नोऽस्माकं त्वत् तव प्रसादाद्दारिष्टासः
अस्माभिर्हिंसितुं बाधितुमशक्याः प्रत्यवायाः अभितः सर्वतो मा
भूवन् । हे ब्रह्मन्, तवेत् तवैव प्रसादादेवेत्थमेवास्तु ॥

[4]कल्पः—"तिष्ठा रथे इति सारथिम्" इति । अभिमन्त्र-
यत इत्यनुवर्तते । हे सारथे यस्मात्त्वं वज्रहस्तस्तस्माद्रथेऽप्यधितिष्ठ
अधिरुह्य स्थितो भव । कल्पः—"आ रश्मीनिति रश्मीनालभेत"
इति । हे देव रथप्रवर्तक स्वश्वः शोभनाश्वयुक्तस्त्वं रश्मीन् प्रग्रहान्

युवसे स्वश्वः । आतिष्ठ वृत्रहन्नातिष्ठन्तं परि । अनु त्वेन्द्रो मदत्वनु त्वा मित्रावरुणौ । [5]द्यौश्च त्वा पृथिवी च प्रचेतसा । शुक्रो बृहद्दक्षिणा त्वा पिपर्तु । अनु स्वधा चिकिताꣳ सोमो अग्निः । अनु त्वाऽवतु सविता सवेन ॥ ५६ ॥ इन्द्रं विश्वा अवीवृधन् । समुद्रव्यचसं गिरः । रथीतमꣳ रथीनाम् । वाजानाꣳ सत्पतिं पतिम् । [6]परि मा सेन्या घोषाः । ज्यानां वृजन्तु गृध्नवः ।

---

युवसे आदाय मिश्रीकुरु । कल्पः—"आतिष्ठ वृत्रहन्निति षड्भिरारूढम्" इति । अभिमन्त्रयत इत्यनुवर्तते । तत्र चतुर्णां मन्त्राणां प्रतीकानि दर्शयति—एते मन्त्रा अष्टमानुवाके व्याख्याताः ॥

[5]पञ्चमं मन्त्रमाह—अत्रापि पादत्रयं तस्मिन्नेवानुवाके व्याख्यातम् । हे राजान् सविता देवः सवेन प्रेरणेन त्वा अन्ववतु अनुकूलस्सन् रक्षतु । अथ षष्ठमन्त्रमाह—अयं मन्त्रः पूर्वानुवाके व्याख्यातः ॥

[6]कल्पः—"परि मा सेन्या इति द्वे वाचयित्वा" इति । तत्र प्रथमामाह—सेन्याः परकीयायां सेनायां भवाः, ज्यानां धनुर्गतानां घोषा नादा मा परिवृजन्तु मां परितो वर्जयन्तु । तदीया धनुर्घोषा मद्विषये मा प्रवर्तन्ताम् । कीदृशा घोषाः ? गृध्नवः परराष्ट्रग्रहणेच्छावन्तः, मेथिष्ठाः श्रोत्रसंगमनोचिताः, इह अस्मिन्कर्मणि युद्धविशेषे वा पिन्वमाना अप्रतिकूलत्वेन मां प्रणीयन्तः ।

मेथिष्ठाः पिन्वमाना इह । मां गोपतिमभिसंविशन्तु । [7]तन्मेऽनुमतिरनुमन्यताम् । तन्माता पृथिवी तत्पिता द्यौः ॥ ५७ ॥ तद्ग्रावाणस्सोमसुतो मयोभुवः । तदश्विना शृणुतꣳ सौभगा युवम् । [8]अवते हेड उदुत्तमम् । एना व्याघ्रं परिषस्वजानाः । सिꣳहꣳ हिन्वन्ति महते सौभगाय । समुद्रं न सुहवं तस्थिवाꣳसम् । मर्मृज्यन्ते

तादृशा व्याघोषा गोपतिं भूपतिं मामभिसंविशन्तु आभितः सम्यक्प्रविशन्तु । ये शत्रुसंबन्धिनो घोषास्ते सर्वेऽप्यप्रतिकूलत्वेन स्वकीयघोषा भवन्त्वित्यर्थः ॥

[7] अथ द्वितीयामाह—अनुमत्याख्या देवी तत् मदीयं कर्म अनुमन्यतां अङ्गीकरोतु । पृथिव्याख्या माता तदनुमन्यताम् । द्युलोकरूपः पिता तदनुमन्यताम् । सोमसुतः सोममभिषुण्वन्तः मयोभुवः सुखस्य भावयितारः ग्रावाणः पाषाणास्तदनुमन्यताम् । हेऽश्विनौ सौभगा युवं भाग्यवन्तौ युवां तच्छृणुतम् ॥

[8] कल्पः—“ उत्तराभिस्तिसृभिरभिमन्त्र्य ” इति । तत्र द्वयोः प्रतीके दर्शयति—एतच्चोभयं संहितायां ‘ वैश्वानरो न ’ इत्यनुवाके व्याख्यातम् । अथ तृतीयामाह—व्याघ्रं व्याघ्रवत्केनाप्यप्रधृष्यं सिंहं सिंहसमानशक्तियुक्तमेनं राजानं परिषस्वजाना आलिङ्गयन्तो ब्राह्मणा बान्धवाश्च महते सौभगाय हिन्वन्ति प्रीणयन्त्याशीर्वादान्कुर्वन्तीत्यर्थः । समुद्रं न समुद्रमिव सुखेनाह्वातुं शक्यं तस्थिवांसं

द्वीपिनमप्स्वन्तः । [9] उदसावेतु सूर्यः । उदिदं मामकं वचः । उदिहि देव सूर्य । सह वग्नुना मम । अहं वाचो विवाचनम् । मयि वागस्तु धर्णसिः । यन्तु नद्यो वर्षन्तु पर्जन्याः । सुपिप्पला ओषधयो भवन्तु । [10] अन्नवतामोदनवतामामिक्षवताम् । ए-

तस्मिन्स्थानेऽवस्थितमेनं मर्मृज्यन्ते अभिषेकलेपान्पुनःपुनः शोधयन्ति । तत्र दृष्टान्तः—अप्स्वन्तः जलमध्ये द्वीपिनं गजं यथा प्रक्षालयन्ति तद्वदित्यर्थः ।

[9] कल्पः—“ उदसावेत्वित्यादित्यमुदीक्षयति ” इति । असौ राजा सूर्यसमो भूत्वा उदेतु उदयमभिवृद्धिं गच्छतु । मामकं मदीयमि दमाशीर्वादरूपं वच उदेतु अभिवृद्धिं गच्छतु । हे सूर्य देव दीप्यमान राजन् मम ब्राह्मणस्य सह वग्नुना वचनेनाशीर्वादेन सह त्वमुदिहि अभ्युदयं गच्छ । अहं पुरोहितः वाचः धर्माधर्मात्मिकायाः विवाचनं विशेषेणाभिवदनसामर्थ्यं प्राप्नुयामिति शेषः । येयं मयि स्थिताऽऽशीर्वादरूपा वाक्सा धर्णसिः धरणशीला सुप्रतिष्ठिताऽस्तु । नद्यो नद्यः सर्वा यन्तु पूर्णाः प्रवहन्तु । पर्जन्या मेघाः स्वस्वकाले वर्षन्तु । ओषधयो व्रीह्यादयः सुपिप्पलाः शोभनफलोपेता भवन्तु ॥

[10] कल्पः - “ अन्नवतामिति जनपदाननुवीक्षते ” इति । अदनीयानि प्रशस्तभक्ष्यभोज्यानि येषु ग्रामेषु ते ग्रामा अन्नवन्तः । प्रभूतेन व्रीहिप्रयवक्षाद्योदनेन युक्ता ओदनवन्तः । आमिक्षशब्देन दधिक्षी-

षाꣳ राजा भूयासम् ॥ ५८ ॥

स्वधायै त्वा सवेन द्यौस्सूर्य सप्त च ॥ १६ ॥

[1]ये केशिनः प्रथमास्सत्रमासत । येभिराभृतं

---

रादिरसद्रव्याण्युपलक्ष्यन्ते तैर्युक्ता आमिक्षवन्तः । तादृशानामेषां ग्रामाणां राजा स्वामी भूयासम् ॥

अत्र विनियोगसंग्रहः—

अभीति रथमागत्यातिष्ठारोदुस्तु मन्त्रणम् ।
अक्षौ चक्रे उपस्पृश्य नमो विप्राभिमन्त्रणम् ॥ १ ॥
सारथिं मन्त्रयेत्तिष्ठारश्मीनूश्म्याभिमर्शनम् ।
आतिष्ठ षड्भिरारूढं मन्त्रयेत परिद्वयम् ॥ २ ॥
वाचयेतावते हेड त्रिभिस्तमभिमन्त्रयेत् ।
उदसाविति राजानं द्वाभ्यां सूर्यमवेक्षयेत् ॥
अन्नग्रामानवेक्षेत प्रोक्ता मन्त्रास्तु विंशतिः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
सप्तमप्रपाठके षोडशोऽनुवाकः.

---

[1]षोडशे राजाभिषेकाङ्गं रथारोहणमुक्तम् । सप्तदशे तदङ्गं वपनमभिधीयते । कल्पः—“ये केशिनो नर्ते ब्रह्मण इति द्वे आहुती हुत्वा” इति । तत्र प्रथमामाह—केशा येषां सन्ति ते केशिनः । केशिनोऽग्निवायुसूर्याः । शाखान्तरे त्रयः केशिन इत्याम्नानात् । ते च देवाः प्रथमाः इतरेभ्यो देवेभ्यः पूर्वं प्रवृत्ताः । केशिनो ये सत्रमासत अनुष्ठितवन्तः यदिदं जगद्विरोचते विशेषेण

यदि॒दं वि॒रोच॑ते । तेभ्यो॑ जुहोमि बहु॒धा घृ॒तेन॑ । रा॒यस्पोषे॑णे॒मं वर्च॑सा॒ सꣳसृ॑जाथ । [2]नर्ते ब्रह्म॑ण॒स्तप॑सो वि॒मोकः । द्वि॒नाम्नी॑ दी॒क्षा व॒शिनी॑ ह्यु॒ग्रा । प्र केशा॑स्सुवते॒ का॒ण्डिनो॑ भवन्ति । तेषां॑ ब्र॒ह्मेदी॑शे॒ वप॑नस्य॒ नान्यः । [3]आरो॑ह॒ प्रोष्ठं॒ विष॑हस्व॒ शत्रू॑न् ।

प्रकाशते तदिदं सर्वं येभिर्यैर्देवैराभृतं संपादितं तेभ्यो देवेभ्यः घृतेन बहुधा बहुप्रकारं जुहोमि । हे देवाः केशिन इमं राजानं धनपुष्ट्या बलेन च संयोजयथ ॥

[2]अथ द्वितीयामाह—ब्रह्मणः परिवृढादेतस्माद्वपनादृतेऽभिषेकाख्यव्रतरूपात्तपसो विमोको विसर्गः समाप्तिर्नास्ति । उपक्रान्तं हि व्रतं समापनीयम् । अस्य चाभिषेकाख्यव्रतस्य वपनेनैव समाप्तिः । व्रतरूपा चेयमभिषेकदीक्षा द्विनाम्नी नामद्वययुक्ता । तस्याश्च वशिनीत्येकं नाम । तया हि सर्वाः प्रजा वशीक्रियन्ते । उग्रेत्यपरं नाम, तया हि दीक्षया शत्रवोऽभिभूयन्ते । दीक्षाया द्विविधव्रतत्वं सोमप्रकरणेऽप्याम्नातम्—"एतद्वै सुजघनं नाम व्रतमिति प्रथमम् । एतद्वै क्षुरपवि नाम व्रतमिति द्वितीयम्" । अतोऽस्य व्रतस्य समाप्तये वपनं कुर्यात् । अस्य राज्ञः केशाः प्रसुवते प्रकर्षेणात्यन्ता वर्धन्ते । अत एव काण्डिनो बहुसमूहयुक्ता भवन्ति । तेषां वर्धमानानां बहुसमूहयुक्तानां केशानां वपनस्य ब्रह्मेत् प्रजापतिरेव ईशे समर्थो भवति । न त्वन्यः कश्चित् । तस्मात्प्रजापतिरूपोऽयं पुरोहितो वपनं करोत्वित्यर्थः ॥

[3]कल्पः—"यजमानायतन औदुम्बरीमासन्दीं प्रतिष्ठापयति

अर्वाक्त्वागद्दीक्षा वृशिनी ह्युग्रा ॥५१॥ देहि दक्षिणां प्रतिरस्वायुः । अथा मुच्यस्व वरुणस्य पाशात् । [4]येनावपत्सविता क्षुरेण । सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्योर्जेमम् । रय्या वर्चसा सꣳसृजाथ । [5]मा ते केशाननु गाद्वर्च एतत् । तथा धाता करोतु ते । तुभ्यमि-

ताꣳराजाऽऽरोहति 'आरोह प्रोष्ठम्' इत्यारोहन्तमभिमन्त्रयते" इति । हे राजन्, प्रोष्ठमासन्दीरूपं मञ्चकमारोह । शत्रून्विषहस्व विशेषेणाभिभव । येयं वशिन्युग्रा चेति द्विनाम्नी दीक्षा सेयं यस्मादर्वाक्त्वाक् अवसृष्टा समाप्ता तस्मात्पुरोहिताय दक्षिणां देहि । आयुः प्रातिरस्व त्वमपि दीर्घमायुः प्राप्नुहि । अथानन्तरं वरुणस्य पाशादस्माद्ग्रथनिर्बन्धान्मुच्यस्व मुक्तो भव ॥

[4]कल्पः—"तस्यामासीनः केशान्वापयते येनावपत्सविता क्षुरेण" इति । पुरा विद्वान्सविता राज्ञो राजाभिषेकं प्राप्नुवतः सोमस्य वरुणस्य च केशान्येन क्षुरेणावपत्तेन क्षुरेण हे ब्राह्मणाः प्रजापतिरूपाः पुरोहिता अस्येदं केशजातं वपत । इमं च राजानं ऊर्जा क्षीरादिरसेन रय्या धनेन वर्चसा बलेन च संसृजाथ संयोजयत ॥

[5]कल्पः—"मा ते केशानिति केशान्प्रकीर्यमाणाननुमन्त्रयते" इति । हे राजन्, ते वर्चो बलं केशाननु मा गात् माऽनुगच्छतु । ते तवैतद्यथा भवति तथा धाता करोतु । तुभ्यं

न्द्रो बृहस्पतिः । सविता वर्च आदधात् ॥ ६० ॥ [6]तेभ्यो निधानं बहुधा व्यैच्छन् । अन्तरा द्यावापृथिवी अपस्सुवः । दर्भस्तम्बे वीर्यकृते निधाय । पौꣳस्येनेमं वर्चसा सꣳसृजाथ । [7]बलं ते बाहुवोस्सविता दधातु । सोमस्त्वाऽनक्तु पयसा घृतेन । स्त्रीषु रूपमश्विनैतन्निधत्तम् । पौꣳस्येनेमं वर्चसा सꣳसृजाथ । [8]यत्सीमन्तं कङ्कतस्ते लिलेख ।

---

त्वदर्थमिन्द्रबृहस्पतिसवितारो नूतनमप्यधिकं वर्चो बलं संपादयन्तु ॥

[6] कल्पः—"तान्समोप्य दर्भस्तम्बे निदधाति तेभ्यो निधानम्" इति । तेभ्यः तत्केशार्थं निधानं स्थापनप्रदेशं बहुधा बहुप्रकारं व्यैच्छन् ब्राह्मणा विशेषेणेच्छां कृतवन्तः । किं स्थानमिति तदुच्यते—ते द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्यमेकं स्थानमैच्छन् । अपो जलं द्वितीयं स्थानमैच्छन् । सुवः स्वर्गरूपं तृतीयं स्थानमैच्छन् । वीर्यकृते सामर्थ्येन संपादिते दर्भस्तम्बे तान्केशान्निधायेमं राजानं पौंस्येन वर्चसा पौरुषेण बलेन संसृजाथ हे ब्राह्मणाः संयोजयत ॥

[7] कल्पः—"अथैनमाज्यमिश्रेण पयसाऽनक्ति 'बलं ते बाहुवोः' इति बाहू" इति । हे राजन्, ते बाहुवोर्बलं संपादयतु । सोमस्त्वां पयसा घृतेन च समनक्तु सम्यगक्तं करोतु । अश्विना हे अश्विनौ एतद्रमणीयं रूपमेतदीयासु स्त्रीषु निधत्तं स्थापयतम् । पौंस्येनेत्यादि पूर्ववत् ॥

[8] कल्पः—"यत्सीमन्तामिति शिरः" इति । आज्यमिश्रेण

यद्वा क्षुरः परिवृवर्ज वपऽँस्ते । स्त्रीषु रूपमश्विनै- तन्निधत्तम् । पौꣳस्येनेमꣳसꣳसृजाथो वीर्येण॥६ १

अवांस्त्राग्दीक्षा वृशिनी ह्युग्रा दधाद्वर्ज वपऽँ- स्ते द्वे च ॥ ये केशिनो नर्ते मा ते बलं यत्सीमन्तं पञ्च ॥ १७ ॥

पूप्रसाऽनक्तीत्यनुवर्तते । हे राजन् ते तव वपनात्पुरा कङ्कतः केशलघिमासंपादकः शलाकाविशेषः, यत्सीमन्तं लिलेख ।शिखाव- शेषाय वपनीयस्थापनीययोः केशभागयोर्विभागं चकार । यद्वा अथवा क्षुरोऽयं •वपन्वपनं कुर्वन्यत्केशजातं परिववर्ज वपनम- कृत्वा स्थापितवान् । सीमन्तलेखनात्मकं यद्दर्शनीयं रूपं यच्च वपनवर्जननिमित्तं रूपं एतदुभयं हेऽश्विनावेतद्दीयासु स्त्रीष्वलंकाराय निधत्तम् । इमं तु• राजानं पौंस्येन पुरुषसंबन्धिना वीर्येण संसृ- जाथ संयोजयतम् ॥

अत्र विनियोगसंग्रहः—

ये केशिनः प्र नर्ते द्वे आहुती जुहुयादथ ।
आरोहन्तं तमासन्दीमारोहेत्यभिमन्त्रयेत् ॥ १ ॥
येन वापयते केशान्मा ते केशानुमन्त्रणम् ।
तेभ्यस्तान् स्तम्ब आदध्याद्बलं बाह्वोर्घृताञ्जनम् ।
यत्सीमन्तेऽञ्जनं मन्त्रा अष्टावत्र प्रकीर्तिताः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
सप्तमप्रपाठके सप्तदशोऽनुवाकः.

[1]इन्द्रं वै स्वा विशो मरुतो नापाचायन्। सोऽनेपचाय्यमान एतं विघनमपश्यत्। तमाहरत्। तेनायजत। तेनैवासां तꣳ सꣳस्तम्भं व्यहन्। यद्व्यहन्। तद्विघनस्य विघनत्वम्। [2]वि पाप्मानं भ्रातृव्यꣳ हते। य एतेन यजते। य उ चैनमेवं वेद ॥६२॥ यꣳ राजानं विशो नापचायेयुः। यो वा ब्राह्मणस्तमसा पाप्मना प्रावृतस्स्यात्। स एतेन यजेत। विघनेनैवैनाद्विहत्य। विशामाधिपत्यं

[1]सप्तदशे राजाभिषेकाङ्गवपनार्था मन्त्रा उक्ताः। तावताऽभिषेकः समाप्तः। अथाष्टादशे विघनाख्यः कश्चिदेकाहविशेष उच्यते। तत्रादौ विघननिर्वचनं दर्शयति—पुरा कदाचिद्राज्यं कुर्वन्तमिन्द्रं मरुत्संज्ञकाः स्वकीयाः प्रजाः करप्रदानेन पूजां नाकुर्वन्। सोऽयमपूज्यमान इन्द्रस्तत्परिहारायैतं विघनाख्यं क्रतुविशेषमेकाहं निश्चित्य तदनुष्ठानेनासां प्रजानां तं संस्तम्भं स्तम्भनरूपं प्रातिकूल्याचरणं व्यहन् विहतं कृतवान्। यद्यस्मात्कारणादनेन कर्मणा विहतवान्, तस्माद्विहन्त्यनेनेति व्युत्पत्त्या कर्मणो विघ्ननाम संपन्नम् ॥

[2]तमेतं विघनाख्यं क्रतुं विधत्ते—अथ तत्राधिकरणं दर्शयति—यं राजानं स्वकीयाः प्रजा न पूजयेयुः करं न दद्युः, अथवा यो वा ब्राह्मणस्तमोरूपेण पाप्मना प्रकर्षेणावृतः स्यात्। सोऽयमुभयविधः पुरुषोऽत्राधिकारी। स च विघनाख्येनैव क्रतुना यजेत। तथा प्रातिकूल्यं विनाश्य प्रजानामाधिपत्यं राजा गच्छति, ब्राह्मणश्च विपापो भवति ॥

गच्छति। [3]तस्य द्वे द्वादशे स्तोत्रे भवतः। द्वे चतुर्विꣳशे। औद्भिद्यमेव तत्। एतद्वै क्षत्रस्यौद्भिद्यम्। यदस्मै स्वा विशो बलिꣳ हरन्ति ॥ ६ ३ ॥ [4]हरन्त्यस्मै विशो बलिम्। ऐनमप्रतिख्यातं गच्छति। य एवं वेद। [5]प्रबाहुग्वा अग्रे क्षत्राण्यातेपुः। तेषामिन्द्रः क्षत्राण्यादत्त। न वा इमानि क्षत्राण्यभूवन्निति। तन्नक्षत्राणां नक्षत्रत्वम्। आ श्रेयसो

---

[3]स्तोत्रविशेषं विधत्ते—तस्य विघनाख्यस्य क्रतोर्द्वादशाख्येन स्तोमेन युक्तं स्तोत्रद्वयं कर्तव्यम्। तथा चतुर्विंशाख्येन स्तोमेन युक्तं स्तोत्रद्वयं कर्तव्यम्। तच्च स्तोत्रचतुष्टयमौद्भिद्यमेव उद्भेदनसाधनमेव। अत्र च प्रकृते क्षत्त्रस्य राज्ञः स्वकीयाः प्रजाः करं प्रयच्छन्तीति यदेतदेवौद्भिद्यं प्रातिकूल्यस्योद्भेदनं तच्च स्तोत्रचतुष्टयेन सिध्यति ॥

[4]वेदनं प्रशंसति—अस्मै वेदित्रे प्रजाः पूजां कुर्वन्ति। अप्रतिख्यातं केनाप्यनिराकृता कीर्तिश्चैनं वेदितारमागच्छति ॥

[5]एतस्य विघनस्य यागवेदने पुनः प्रशंसति—अग्रे पुरा कदाचित्क्षत्त्राणि क्षत्त्रियवंशे जाताः पुरुषाः प्रबाहुग्वै बाहुल्येनैव आतेपुः सर्वतस्तपः कृतवन्तः। तेषां तपः कुर्वतां सर्वेषां यानि क्षत्त्राणि बलानि तानीन्द्र आदत्त स्वीकृतवान्। तत इमानि क्षत्त्राणि बलानि नैवाभूवन्निति सर्वे जना उक्तवन्तः। यस्मादि-

भ्रातृ॑व्यस्य॒ तेज॑ इन्द्रि॒यं द॑त्ते । य ए॒तेन॒ यज॑ते । य उ॑ चैनमे॒वं वेद॑ ॥६४॥ [6]तद्यथा॑ ह॒ वै संचा॒क्रिणौ॒ कप्लका॑वुपाव॑हितौ॒ स्याता॑म् । ए॒वमे॒तौ यु॒ग्मन्तौ॒ स्तोमौ॑ । अ॒युक्षु स्तोमे॑षु क्रियेते । पा॒प्मनोऽप॑हत्यै । [7]अप॑ पा॒प्मानं॒ भ्रातृ॑व्यꣳ हते । य ए॒तेन॒ यज॑ते ।

न्द्रविरोधिनां क्षत्त्रं बलं नासीत्तस्मात्तेषां बलराहित्यवाचि नक्षत्र-नाम संपन्नम् । तस्मादिन्द्रवद्यो यजते यश्च वेद सोऽयमुभयविधः पुमान् श्रेयसोऽधिकस्य भ्रातृव्यस्य तेजः आज्ञाशक्तिमिन्द्रियं शरीरं बलं चादत्ते ॥

[6]पूर्वोक्तयोर्द्वादशचतुर्विंशस्तोमयोः स्थानविशेषं विधत्ते—चक्रम-स्यास्तीति चक्री रथः, चाक्रिणा सह वर्तेते इति सचक्रिणौ रथ-स्वामिनौ कप्लकौ कपिवद्गमनसमर्थौ तादृशौ द्वौ पुरुषौ यथा लोके उपावहितौ गमनाय सावधानौ स्यातां, एवमेतौ युग्मन्तौ समसंख्या-युक्तौ द्वादशचतुर्विंशस्तोमौ क्रतोः पारगमने समर्थौ । तावुभौ अयुक्षु विषमसंख्यायुक्तेषु स्तोमेषु कर्तव्यौ । त्रिवृत्पञ्चदशसप्तदशै-कविंशाख्याश्चोदकप्राप्ता विषमसंख्यायुक्ताः स्तोमाः, तेषां स्थाने द्वा-वेतौ स्तोमौ प्रयोक्तव्यौ । तत्र त्रिवृत्पञ्चदशयोः स्थाने द्वादशः सप्तदशैकविंशयोः स्थाने चतुर्विंश इति विवेकः । एतच्च पापविना-शनार्थं भवति ॥

[7]एतदनुष्ठानवेदने प्रशंसति । उक्तस्तोमयुक्तानां स्तोत्राणामाधारभू-तानृग्विशेषान्विधत्ते—सूता रथपास्सारथयः, ग्रामण्यो ग्रामनिर्वाहकाः, तत्र लोके यथा सूतग्रामण्यस्तथा गायत्रादीनि छन्दांसि प्रव-

य उं चैनमेवं वेद । तद्यथा ह वै सूतग्रामण्यः । एवं छन्दाꣳसि । तेष्वसावादित्यो बृहतीरभ्यूढः ॥ सतोबृहतीषु स्तुवते सतो बृहन् । प्रजया पशुभिरसानीत्येव । [8]व्यतिषक्ताभिस्स्तुवते । व्यतिषक्तं वै क्षत्त्रं विशा । विशैवैनं क्षत्त्रेण व्यतिषजति । [9]व्यतिषक्ताभिस्स्तुवते । व्यतिषक्तो वै ग्रामणी-

र्तन्ते । सूतेषु मध्ये रथस्वामी यमङ्गीकरोति स एव सूतो रथं प्रवर्तयति । ग्रामणीषु मध्ये राजा यमङ्गीकरोति स एव ग्रामं नयति । एवमत्राप्यसावादित्यः तेषु छन्दस्सु मध्ये बृहतीच्छन्दो-युक्ता ऋचः अभ्यूढः अङ्गीकृतवान् । तस्मात्कारणात् सतोबृहतीनामकच्छन्दोयुक्तास्वृक्षु स्तोत्रं कुर्युः । तेषां स्तोत्राणां प्रत्येकमयमभिप्रायः—सतः सन्मार्गवर्तिनः पुरुषात् बृहन्नधिकः सतो बृहन् । प्रजया च पशुभिश्चाहं सतो बृहन्नसानि भवानीत्येव स्तोतारः प्रवर्तन्ते ॥

[8]तास्वृक्षु गानकाले कंचिद्विशेषं विधत्ते—याः सतोबृहत्य ऋचः ताश्छन्दोन्तरयुक्ताभिः ऋग्भिर्व्यतिषक्ताः कार्याः । ऋगेका सतोबृहती, ऋगन्तरमन्यच्छन्दोयुक्तं पुनरपि सतोबृहती पुनरपि च्छन्दोन्तरामित्येवं व्यतिषङ्गः । तादृशीष्वृक्षु स्तुतिं कुर्युः । क्षत्त्रं क्षत्त्रजातिः विशा वैश्यजात्या व्यतिषक्तं मिश्रीभूय वर्तते । प्रजाभ्यः करं गृहीत्वा क्षत्त्रियो राज्यं करोति । एवं सति व्यतिषक्तस्तोत्रेणैनं यजमानं विशा क्षत्त्रेण व्यतिषजयति मिश्रयति ॥

[9]तमेव व्यतिषङ्गं प्रकारान्तरेण प्रशंसति—ग्रामस्य निर्वाहकः

स्सजातैः । सजातैरेवैनं व्यतिषजति । [10]व्यतिषक्ताभिस्स्तुवते । व्यतिषक्तो वै पुरुषः पाप्मभिः । व्यतिषक्ताभिरेवास्य पाप्मनो नुदते ॥ ६६ ॥ वेद हरन्त्येनमेवं वेदाभ्यूढः पाप्मभिरेकं च ॥१८॥

त्रिवृद्यदाग्नेयोऽग्निमुखा ह्यृद्धिर्यदाग्नेय आग्नेयो न वै सोमेन यो वै सोमेनैष गोसवास्सि ऽहैऽभिप्रेहि मित्रवर्धनः प्रजापतिस्ता ओदनं प्रजापतिरकामयत बहोर्भूयानगस्त्योऽस्याजरासास्तिष्ठा हरी प्रजापतिः पशून्व्याघ्रोऽभिप्रेहि वृत्रहन्तमो ये केशिन इन्द्रं वा अष्टादश ॥ १८ ॥

पुरुषः सजातैः सहोत्पन्नैर्भ्रात्रादिभिस्तद्ग्रामनिवासिभिर्व्यतिषक्तो मिश्रीभूतो वर्तते । अतो व्यतिषक्तस्तोत्रेणैवैनं यजमानं सजातैर्भ्रात्रादिभिः संयोजयति ॥

[10]पुनरपि प्रकारान्तरेण प्रशंसति—पुरुषः प्रमादकृतैः पाप्मभिः संसृष्टो वर्तते । ततोऽत्र व्यतिषक्तस्तोत्रेणास्य पुरुषस्य पापानि विनाशयति । अस्य प्रपाठकस्यानुवाकार्थसंग्रहः—

सप्तमे तु सवाख्याः स्युः सूयते ह्यभिषिच्यते ।
ईश्वरत्वेन येष्वेते प्रोच्यन्ते सवनामकाः ॥ १ ॥
बृहस्पतिसवो वैश्यसवो ब्रह्मसवस्तथा ।
प्रोक्तः सोमसवस्तद्वत्सवः स्यात्पृथिनामकः ॥ २ ॥

त्रिवृद्यो वै सोमेनायुरसि विश्वायुर्बहुर्भवति तिष्ठा हरीरथ आऽयं भातु तेभ्यो निधान५षट्-
र्थंष्टिः ॥ ६६ ॥ हारिः ओम्.

गोसवश्चोदनाख्ये तु सवे होमार्थमन्त्रकाः ।
रथारोहः कर्मविधिः पञ्चशारदनामकः ॥ ३ ॥
क्रतुस्तदीयपशवो ह्यग्निष्टुनि पुरोरुचः ।
इन्द्रस्तुतिः पुरोरुक्स्याद्दत्तोर्यामविधिस्तथा ॥ ४ ॥
राजाभिषेकमन्त्राश्च रथारोहणमन्त्रकाः ।
भवन्ति वपने मन्त्रा विघनः क्रतुरप्ययम् ॥ ५ ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थाश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ६ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मण-भाष्ये द्वितीयाष्टके सप्तमप्रपाठकेऽष्टादशोऽनुवाकः.

सप्तमः प्रपाठकस्समाप्तः.

---

## अथ द्वितीयाष्टकेऽष्टमप्रपाठकारम्भः.

यस्य निश्श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रपाठके सप्तमे हि सवाः सर्वे समीरिताः ।
याज्यानुवाक्याः काम्यानां पशूनामष्टमे श्रुताः ॥ २ ॥

[1]पीवोअन्नाꣳ रयिवृधस्सुमेधाः । श्वेतस्सिषक्ति नियुतामभिश्रीः । ते वायवे समनसो वितस्थुः । विश्वेन्नरस्स्वपत्यानि चक्रुः । [2]रायेऽनु यं जज्ञतू

वायव्यः श्वेत आलभ्य इति काम्या उदीरिताः ।
एकैकस्मिन्पशौ सूक्तमेकैकं भवति क्रमात् ॥ ३ ॥
ऋचः षट्सूक्त एकस्मिस्तत्र द्वे द्वे क्रमाच्छ्रुते ।
वपायां च पुरोडाशे हविषीति क्रमो भवेत् ॥ ४ ॥

[1]'वायव्यꣳ श्वेतमालभेत भूतिकामः' इत्यत्र वपायाः पुरोनुवाक्यामाह—यो वायुदेवताकः श्वेतच्छागः पशुः सोऽयं सिषक्ति सक्तो भवति संबध्नातीत्यर्थः। उत्तरार्धे नर इत्यभिधास्यमानत्वान्नृन्मनुष्यान्यजमानान्सिषक्तीति योजनीयम् । कीदृशान्यजमानान्? पीवोअन्नान् पीवांसि स्थूलानि प्रभूतान्यन्नानि येषां ते पीवोन्नाः तान् । रयिवृधः रय्या धनेन वर्धमानान् । सुमेधाः शोभनया मेधया यज्ञप्रयोगधारणशक्त्या युक्तान् । कीदृशः श्वेतः पशुः? नियुतामभिश्रीः नितरां युवन्ति रथे मिश्रयन्तीति नियुतः वायोर्वडवाः तासामभिश्रयणीयः । एतस्य पशोर्वायव्यत्वेन वायुद्वारा वडवा अप्येतमाश्रयन्ति । यागे तान् नॄन् यजमानान् श्वेतः सिषक्ति । ते नरो यजमाना वायवे वायुदेवतार्थं समनसः तेन देवेन समानमनस्काः तस्मिन्प्रीतियुक्ता भूत्वा वितस्थुः विशेषेण स्थिताः । ततो विश्वेत् विश्वान्येव वायुदेवताकानि कर्माणि स्वपत्यानि शोभनापत्यप्रदानि चक्रुः कृतवन्तः ॥

[2]अथ वपाया याज्यामाह—रोदसी द्यावापृथिव्यावुभे रायेऽनु धनार्थमेव यं वायुं जज्ञतुः उत्पादितवत्यौ । यजमानानां धिषणा

रोदसी उभे । राये देवी धिषणा धाति देवम् । अधा वायुं नियुतस्सश्चत स्वाः । उत श्वेतं वसुधितिं निरेके । [3]आ वायो प्रयाभिः । [4]प्र वायुमच्छा बृहती मनीषा ॥ १ ॥ बृहद्रयिं विश्ववारा ५

बुद्धिः देवी धिद्योतमाना सती वायुं देवं धाति धारयति निरन्तरं ध्यायतीत्यर्थः । अधा आरब्धयागे तं वायुं स्वा नियुतः स्वकीया वडवाः सश्चत सेवन्ते । उत अपिच रेको रिक्तत्वं तद्रहितं कर्म निरेकं, तादृशे सर्वसाधनसंपूर्णे कर्मणि वसुधितिं हविर्लक्षणस्य वसुनो धारकं श्वेतं पशुमपि नियुतः सश्चतेत्यन्वयः ॥

[3]अथ पुरोडाशस्य याज्यानुवाक्ययोः प्रतीके दर्शयति—'आ वायो भूषा' इति पुरोनुवाक्या । सा चैन्द्रवायवप्रस्तावे व्याख्याता । 'प्रयाभिर्यासि दाश्वा५सम्' इत्येषा याज्या । सा च हिरण्यगर्भ आपो हेत्यनुवाके व्याख्याता ॥

[4]अथ हविषः पुरोनुवाक्यामाह—बृहती महती मनीषा यजमानस्य बुद्धिः वायुमभिलक्ष्य प्रकर्षेण यातीति शेषः । कीदृशं वायुं? बृहद्रयिं बृहती रयिर्महद्धनं यस्यासौ बृहद्रयिः बृहद्धनप्रदमित्यर्थः । विश्ववारां विश्वेषामनिष्टानां निवारकम् । रथप्रां स्वकीयं रथमपेक्षितैर्धनैः पूरयन्तम् । हे प्रयज्यो! प्रकर्षेण यष्टुमुद्युक्त यजमान! कविः देवतातत्त्वाभिज्ञस्त्वं कविं सर्वज्ञं वायुं देवं इयक्षसि यज पूजय । कीदृशः कविः? द्युतद्यामा यामशब्देन नियमरूपो यागोऽभिधीयते द्योतमानो यागो यस्यासौ द्युत-

रथप्राम् । द्युतद्यामा नियुतः पत्यमानः । कविः कविर्मियक्षसि प्रयज्यो । [5]आ नो नियुद्भिश्शतिनीभिरध्वरम् । सहस्रिणीभिरुप याहि यज्ञम् । वायो अस्मिन् हविषि मादयस्व । यूयं पात स्वस्तिभिस्सदा नः । [6]प्रजापते न त्वदेतान्यन्यः ।

---

द्यामा । नियुतः पत्यमानः नियुतो याः पूर्वोक्ता वडवास्ताः पत्यमानो वायोरानयनार्थं सेवमानः ॥

[5]अथ याज्यामाह—हे वायो शतिनीभिः शतसंख्यायुक्ताभिः सहस्रिणीभिः सहस्रसंख्यायुक्ताभिश्च नियुद्भिर्वडवाभिस्सह नः अस्मदीयमध्वरं हिंसारहितं यज्ञं प्रति उप समीपे आयाहि आगच्छ । आगत्य चास्मिन्हविषि स्वीकृते सति मादयस्व त्वं हृष्टः सन्नस्मानपि हर्षय । यूयं त्वं च त्वदीयभृत्याश्च सर्वे स्वस्तिभिरविनाशैः फलैर्नोऽस्मान्सदा पात रक्षत । यदेतत्षडृचं सूक्तं वायव्यपशौ प्रवृत्तं तदेतत्सूत्रकारः स्पष्टीचकार—“काम्यैः पशुभिरमावास्यायां पौर्णमास्यां वा यजेत । तेषां निरूढपशुबन्धवत्कल्पो वायव्यꣳ श्वेतमिति । ये ब्राह्मणेन व्याख्यातास्तेषामाम्नायिकेषु स्थानेषु यथादेवतं षडृचो निदधाति । वपायाः पुरोडाशस्य हविष इति द्वे द्वे पीवोअन्नाꣳ रयिवृधः सुमेधा इत्येतानि यथापूर्वं यथालिङ्गमाम्नातानि भवन्ति” इति ॥

[6]“अथ यः प्रजाकामः पशुकामस्स्यात्स एतं प्राजापत्यमजं तूपरमालभेत” इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—

विश्वा॑ जा॒तानि॒ परि॒ ता ब॑भूव । यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्तु ॥ २ ॥ व॒यꣳ स्या॑म॒ पत॑यो र॒यी॒णाम् । [7]र॒यी॒णां पतिं॑ यज॒तं बृ॒हन्त॑म् । अ॒स्मिन्भरे॒ नृत॑म॒ं वाज॑सातौ । प्र॒जाप॑तिं प्रथम॒जामृ॒तस्य॑ । यजा॑म दे॒वमधि॑ नो ब्रवीतु । [8]प्रजा॑पते॒ त्वं नि-

हे प्रजापते! त्वदन्यः कश्चिदपि जातानि उत्पन्नानि यान्येतानि विश्वानि लोकजातानि सन्ति ता तानि परिबभूव परितो व्याप्तुं त्वत् त्वत्तोऽन्यः कोऽपि न समर्थः । वयं यत्कामा येन फलकामेन युक्ताः सन्तस्ते तुभ्यं जुहुमः तत्फलं नोऽस्माकमस्तु सिध्यतु । वयं त्वत्प्रसादाद्रयीणां धनानां पतयः स्याम ॥

[7]अथ वपाया याज्यामाह—भ्रियते संपाद्यते हविरत्रेति भरो यज्ञः । अस्मिन्भरे प्रजापतिं देवं वयं यजाम । कीदृशं देवं? रयीणां पतिं धनस्वामिनम् । यजतं यजनीयम् । बृहन्तं महान्तम् । नृतमं अतिशयेन पुरुषं पुरुषेषूत्तममित्यर्थः । ऋतस्य यज्ञस्य प्रथमजां प्रथममेव जनयितारं "प्रजापतिर्यज्ञानसृजत" इत्यन्यत्र श्रवणात् । कीदृशे भरे? वाजसातौ वाजस्यान्नस्य सातिर्दानं यस्मिन्यज्ञे सोऽयं वाजसातिः तस्मिन् । सोऽयमस्माभिरिष्टः प्रजापतिर्देवेषु मध्ये नोऽस्मानधिकान्ब्रवीतु ॥

[8]अथ पुरोडाशस्य पुरोनुवाक्यामाह—हे प्रजापते त्वं निधिपाः शङ्खपद्मादीनां निधीनां पालकः । पुराणो जगतः स्रष्टृत्वादनादिः । देवानां पिता पालकः । प्रजानां मनुष्यादीनां जनिता उत्पादयिता ।

धिपाः पुराणः। देवानां पिता जनिता प्रजानाम्। पतिर्विश्वस्य जगतः परस्पाः। हविर्नो देव विहवे जुषस्व। [9]तवेमे लोकाः प्रदिशो दिशश्च ॥ ३ ॥ परावतो निवत उद्वतश्च। प्रजापते विश्वसृज्जीवधन्य इदं नो देव। प्रतिहर्य हव्यम्। [10]प्रजापतिं प्रथमं यज्ञियानाम्। देवानामग्रे यजतं यजध्वम्।

---

विश्वस्य सर्वस्य जगतः पतिः स्वामी। परस्पाः अतिशयेन पालयिता। हे देव विशेषेण हूयन्ते देवा अत्रेति विहवो यज्ञस्तस्मिन्विहवे नोऽस्मदीयं हविर्जुषस्व ॥

[9]अथ पुरोडाशस्य याज्यामाह—हे प्रजापते इमे लोका भूरादयो याश्च प्रदिशः प्रधानभूताः प्राच्याद्या या अप्यन्या आग्नेयाद्या दिशस्तत्सर्वं तवैवाधीनम्। लोका विशेष्यन्ते—परावतः दूरदेशस्था द्वीपान्तरादयः, निवतो न्यग्भूताः पातालादयः, उद्वतश्चोर्ध्ववर्तिनः स्वर्गादयोऽपि। हे देव त्वं विश्वसृत् विश्वस्य स्रष्टा पाता वा। जीवेषु प्राणिषु धन्यः ईश्वरो जीवधन्यः तादृशो भूत्वा नोऽस्मदीयमिदं हव्यं प्रतिहर्य प्रतिगृहाण ॥

[10]अथ हविषः पुरोनुवाक्यामाह—यज्ञियानां यज्ञयोग्यानां देवानां मध्ये प्रथमं मुख्यं प्रजापतिं यजतं यजनीयमग्रे यजध्वं हे ऋत्विजः आदौ पूजयत। स प्रजापतिर्नोऽस्मभ्यं द्रविणं धनं रायस्पोषं धनपुष्टिं सुवीर्यं शोभनसामर्थ्यं च ददातु प्रय-

स नो ददातु द्रविणꣳ सुवीर्यम् । रायस्पोषं वि-
ष्यतु नाभिमस्मे । [11] यो राय ईशे शतदाय उक्थ्यः ।
यः पशूनाꣳ रक्षिता विष्ठितानाम् । प्रजापतिः
प्रथमजा ऋतस्य ॥ ४ ॥ सहस्रधामा जुषताꣳ
हविर्नः । [12] सोमापूषणेमौ देवौ । [13] सोमापूषणा
रजसो विमानम् । सप्तचक्रꣳ रथमविश्वमिन्वम् ।

---

च्छतु । नाभिं नहनं दारिद्र्यादिबन्धनमस्मे विष्यतु अस्मत्तः शि-थिलयतु ॥

[11] अथ हविषो याज्यामाह—यः प्रजापतिः शतदायः शत-संख्याकधनप्रदः उक्थ्यः स्तुत्यस्सन् राय ईशे धनस्येश्वरो भवति। यश्च प्रजापतिर्विष्ठितानां विविधमवस्थितानां गोमहिषादीनां पशूनां रक्षिता वर्तते । स प्रजापतिः ऋतस्य यज्ञस्य प्रथमजाः प्रथ-ममुत्पादकः सहस्रधामा सहस्रसंख्याकस्थानयुक्तस्सन् नोऽस्मदीयं हविर्जुषताम् ॥

[12] अथ "सोमापौष्णं त्रैतमालभेत पशुकामः" इत्यस्य पशोः सूक्ते वपासंबन्धियाज्यापुरोनुवाक्ययोः प्रतीके दर्शयति—'सोमा-पूषणा जनना' इति पुरोनुवाक्या । 'इमौ देवौ जायमानौ जुषन्त' इति याज्या । एतच्चोभयं 'अग्नाविष्णू महितद्वां महित्वम्' इत्यत्र व्याख्यातम् ॥

[13] अथ तत्रैव पुरोडाशस्य पुरोनुवाक्यामाह—हे सोमापूषणौ वृषणा कामवर्षकौ तं रथं जिन्वथः प्रीणयथ आरोहणेनालंकु-

विषूवृतं मनसा युज्यमानम् । तं जिन्वथो वृषणा पञ्चरश्मिम् । [14]दिव्यन्यस्सदनं चक्र उच्चा । पृथिव्यामन्यो अध्यन्तरिक्षे । तावस्मभ्यं पुरुवारं पुरुक्षुम् । रायस्पोषं विष्यतां नाभिमस्मे, ॥ ५ ॥

---

रुत इत्यर्थः । कीदृशं रथं? रजसो रञ्जनात्मकस्य गमनस्य विमानं निर्मातारम् । सप्तचक्रं सप्तसंख्याकैश्चक्रैर्युक्तम् । अत एवान्यत्राप्याम्नायते—'सप्तचक्रं सप्त वहन्त्यश्वाः' इति । अविश्वमिन्वं विश्वैः प्राणिभिर्मीयते परिच्छिद्यत इति विश्वमिन्वः तद्विलक्षणमविश्वमिन्वं केनापि परिच्छेत्तुमशक्यमित्यर्थः । विषूवृतं अप्रतिहतगतित्वान्नानादेशेषु वर्तमानम् । मनसा युज्यमानं इच्छामात्रेणाश्वैः संयुज्यमानम् । पञ्चरश्मिं हेमन्तशिशिरयोरैक्येन पञ्चर्तवो रश्मिस्थानीया यस्य सूर्यरथस्य सोऽयं पञ्चरश्मिः । आदित्यरथगमनेन ह्यृतवो निष्पाद्यन्ते । तस्माहतूनां रश्मित्वोपचारः ॥

[14]अथ पुरोडाशस्य याज्यामाह—योऽयं सोमश्चन्द्रः यश्च पूषाऽऽदित्यः तयोरन्य एकः सूर्यो दिवि द्युलोके उच्चा सदनं चक्रे उन्नतदेशे स्थानं कृतवान् । अन्यश्चन्द्रः पृथिव्यामन्तरिक्षे चाप्युपरि सदनं स्थानं चक्रे । पृथिव्यां लतात्मकः सोमास्तिष्ठति । अन्तरिक्षे चन्द्रस्तिष्ठति । तौ सोमापूषणावस्मभ्यं रायस्पोषं दत्तामिति शेषः । कीदृशं? पुरुवारं पुरुभिर्बहुभिर्वरणीयम् । पुरुक्षुं पुरुभिर्बहुभिः क्षूयते शब्द्यते प्रशस्यत इति पुरुक्षुस्तादृशम् । नाभिं नहनं दारिद्र्यबन्धनं अस्मे विष्यतां अस्मत्तः शिथिलयताम् ॥

[15]धियं॑ पू॒षा जि॑न्वतु विश्वमि॒न्वः । र॒यिꣳ सोमो॑ र॒यिप॑तिर्दधातु । अव॑तु दे॒व्यदि॑तिरन॒र्वा । बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ । [16]विश्वा॑न्य॒न्यो भुव॑ना ज॒जान॑ । विश्व॑म॒न्यो अ॑भि॒चक्षा॑ण एति । सोमा॑पूषणा॒वव॑तं॒ धियं॑ मे । यु॒वभ्यां॒ विश्वाः॒ पृत॑ना जयेम । [17]उदु॑त्त॒मं व॑रुणा॒स्तंभ॒नाद्याम् । यत्किंचे॒दं

[15]अथ हविषः पुरोनुवाक्यामाह—विश्वं मिनोत्येतामादिति निश्चिनोतीति विश्वमिन्वः तादृशः पूषा सूर्यो धियं अस्मद्बुद्धिं जिन्वतु प्रीणयतु । रयिपतिः धनस्वामी सोमो रयिं धनं दधातु अस्मासु संपादयतु । अदितिः भूमिर्देवी अस्मानवतु । कीदृशी ? अनर्वा अर्वणा भ्रातृव्येण रहिता । 'भ्रातृव्यो वा अर्वा' इति श्रुतेः । अर्वा रिपुः । सर्वोऽपि भूमेर्बन्धुरेव न तु कश्चिदपि शत्रुः । सुवीराः शोभनपुत्राद्युपेता वयं विदथे यज्ञे बृहत्प्रौढं स्तोत्रं वदेम ॥

[16]अथ हविषो याज्यामाह—अन्यः सोमो विश्वानि भुवनान्योषधिद्वारा जजान उत्पादयामास । अन्यः पूषा विश्वमभिचक्षाणः सर्वतः प्रकाशयमानः प्रतिसंचरति । हे सोमापूषणौ मे धियं बुद्धिं सत्कर्मविषयं अवतं रक्षतम् । युवभ्यां युवयोः प्रसादाद्वयं विश्वाः पृतनाः सर्वाः परकीयसेना जयेम ॥

[17]अथ 'यो वरुणगृहीतः स्यात्स एतं वारुणं कृष्णमेकशितिपादमालभेत' इत्यस्य पशोर्वपापुरोडाशहविष्षु प्रत्येकं याज्यापुरोनुवाक्ययोः प्रतीके दर्शयति—'उदुत्तमं वरुणपाशम्' इति व-

कि॒त॒वासः॑। अव॑ ते॒ हेडु॒स्तत्त्वा॑ यामि। [18] आ॒दि॒त्याना॒मव॑सा॒ न दक्षि॑णा। धा॒रय॑न्त आ॒दि॒त्यास॑-

पायाः पुरोनुवाक्या, सा च 'वैश्वानरः' इत्यत्र व्याख्याता। 'अस्तभ्नाद्यामृषभः' इति याज्या, सा च 'उदायुषा स्वायुषा' इत्यत्र व्याख्याता। 'यत्किंचेदं वरुण' इति पुरोडाशस्य पुरोनुवाक्या, 'कितवासो यद्रिरिपुः' इति याज्या, तदुभयं 'त्वमग्ने बृहत्' इत्यत्र व्याख्यातम्। 'अव ते हेडो वरुणः, इति हविषः पुरोनुवाक्या, सा च 'वैश्वानरो नः' इत्यत्र व्याख्याता। 'तत्त्वा यामि ब्रह्मणा' इति याज्या, सा च 'इन्द्रं वो विश्वतस्परीन्द्रम्' इत्यत्र व्याख्याता।

[18] अथ 'यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति स एतामवि वशामादित्येभ्यः कामायालभेत' इत्यस्य पशोः सूक्ते वपापुरोडाशहविष्षु क्रमेण याज्यापुरोनुवाक्ययोः प्रतीके दर्शयति—आदित्यानामवसा नूतनेन' इति वपायाः पुरोनुवाक्या। 'न दक्षिणा विचिकिते' इति याज्या। 'धारयन्त आदित्यासो जगत्स्थाः' इति पुरोडाशस्य पुरोनुवाक्या। 'तिस्रो भूमीर्धारयंस्त्रीꣳरुत द्यून्' इति याज्या। 'यज्ञो देवानां प्रत्येति' इति हविषः पुरोनुवाक्या। 'शुचिरपः सूयवसा अदब्धः' इति याज्या। तदेतत्सूक्तं सर्वं 'इन्द्रं वो विश्वतस्परीन्द्रं नरः' इत्यत्र व्याख्यातम्। अत्रेदं सूक्तं "यो ब्रह्मवर्चसकामस्स्यात्तस्मा एतां दशर्षभामालभेत," इति पशौ योजनीयम्। पूर्वोक्ते तु पशौ सूक्तमुत्तरत्र भविष्यति। तत्र हि कामेन देवा इति कामशब्दोदितो

स्तिस्रो भूमीर्धारयन् । यज्ञो देवाना ँ शुचि-
रूपः ॥ ६ ॥

मनीषाऽस्तु चर्तस्यास्मे कितवासश्चत्वारि च ॥१॥

[1] ते शुक्रासश्शुचयो रश्मिवन्तः । सीदन्नादि-

लिङ्गविशेषः प्रतीयते । लिङ्गेन हि पाठक्रमस्य बाधो युक्तः । तस्माद्दशर्षभाया आदित्यदेवताकत्वात्तत्रेदं सूक्तमुत्क्रष्टव्यम् ।

अत्र विनियोगसंग्रहः—

याज्याः काम्यपशूनां तु वर्णिता अष्टमे क्रमात् ।
ऋचः षट्सूक्त एकस्मिन्विधिशेषो विविच्यते ॥ १ ॥
पीवोन्नामिति वायव्ये पशौ सूक्तमुदीरितम् ।
प्रजासूक्तं तूपरे स्यात्सोमा त्रैते पशुप्रदे ॥ २ ॥
उदुत्तमं वारुणे स्यादादित्यानामवेत्यदः ।
दशर्षमायां विज्ञेयं लिङ्गेन क्रमबाधनात् ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
अष्टमप्रपाठके प्रथमोऽनुवाकः.

---

प्रथमानुवाके वायव्यादीनां पशूनां सूक्तान्यभिहितानि । द्वितीये वशादीनां पशूनां सूक्तान्युच्यन्ते । तत्र "स एतामविं वशामादित्येभ्यः कामायालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—ते प्रसिद्धा आदित्याः प्रिये बर्हिषि अस्मदीये

त्या अधि बर्हिषि प्रिये। कामेन देवास्सरथं दिवो नः। आयान्तु यज्ञमुप नो जुषाणाः। [2]ते सूनवो अदितेः पीवसामिषम्। घृतं पिन्वत्प्रतिहर्यन्नृतेजाः। प्र यज्ञिया यजमानाय येमुरे। आदित्याः कामं पितुमन्तमस्मे। [3]आ नः पुत्रा अदितेर्यान्तु यज्ञम्। आदित्यासः पथिभिर्देवया-

---

यागे अधिसीदन् अधिष्ठाय सीदन्तु। कीदृशा आदित्याः? शुक्रासः कान्तियुक्ताः। शुचयः शुद्धिहेतवः। रश्मिवन्तः रश्मिभिरनेकैर्युक्ताः। कामेनाभिलषितार्थप्रदेन देवेन सहिता आदित्या देवाः सरथं रथसहितं यथा भवति तथा दिवस्सकाशान्नोऽस्मान्प्रत्यायान्तु। ततो नोऽस्मदीयं यज्ञमुपेत्य जुषाणाः प्रीतिपूर्वकं सेवमानास्तिष्ठन्तु।

[2]अथ वपाया याज्यामाह—ते प्रसिद्धा अदितेरदितिदेवतायाः सूनवः पुत्राः ऋतेजाः यज्ञनिमित्तमुत्पन्नास्सन्तः पीवसां पीवराणामतिस्थूलानां हविषां मध्ये इषं इष्यमाणमस्मदीयपुरोडाशरूपमन्नं पिन्वद्घृतं प्रीतिसाधनमाज्यं च प्रतिहर्यन् प्रत्येकं कामयन्ताम्। यज्ञिया यज्ञयोग्या आदित्या अस्मे मह्यं यजमानाय पितुमन्तं अन्नवन्तं काममभिलषितार्थं प्रयेमुरे दत्तवन्तः।

[3]अथ पुरोडाशस्य पुरोनुवाक्यामाह—अदितेः पुत्रा आदित्यास आदित्यनामका देवा देवयानैः पथिभिः देवानां योग्यैर्मार्गैः नोऽस्मादीयं यज्ञं प्रत्यायान्तु। आगत्य च दाशुषे हविर्दत्तवतेऽस्मे

नैः ॥ ७ ॥ अस्मे कामं दाशुषे सन्नमन्तः । पुरोडाशं घृतवन्तं जुषन्ताम् । [4]स्कभायत निर्ऋतिꣳ सेधतामतिम् । प्र रश्मिभिर्यतमाना अमृध्राः । आदित्याः काम प्रयतां वषट्कृतिम् । जुषध्वं नो हव्यदातिं यजत्राः । [5]आदित्यान्काममवसे हुवेम । ये भूतानि जनयन्तो विचिख्युः । सीदन्तु पुत्रा

मह्य यजमानाय काममभिलषितार्थं सन्नमन्तः प्रापयन्तो घृतवन्तं बहुलघृतयुक्तं पुरोडाशं जुषन्ताम् ।

[4]अथ पुरोडाशस्य याज्यामाह—हे आदित्याः हे काम यूयं सर्वे निर्ऋतिं राक्षसजातिं बाधिकां देवतानां स्कभायत स्तब्धां कुरुत । अस्मद्बाधसामर्थ्यरहितां कुरुतेत्यर्थः । अमतिमस्मदीयं बुद्धिमान्द्यं सेधत प्रतिषेधत निवारयतेत्यर्थः । कीदृशा आदित्याः? रश्मिभिः स्वकीयैः प्रयतमाना अन्धकारनिवारणार्थमुद्योगं कुर्वन्तः, अमृध्राः अमृदवोऽनिष्टनिवारणे तीक्ष्णा इत्यर्थः । तादृशा यूयं प्रयतां परिशुद्धां हव्यदातिं हविर्दानकारणभूतां नो वषट्कृतिमस्माभिः प्रयुक्तं वषट्कारं जुषध्वम् । कीदृशा यूयं? यजत्रा यज्ञयोग्याः ।

[5]अथ हविषः पुरोनुवाक्यामाह—ये पूर्वोक्ता आदित्या देवाः यश्च कामदेवस्तान्सर्वान् अवसेऽस्मद्रक्षार्थं हुवेम इह कर्मण्याह्वायामः । ये देवा भूतानि जनयन्तः प्राणिजातान्युत्पादयन्तो विचिख्युः विशेषेण ख्यातिं गताः । ते देवा अदितेः पुत्रा हविरद्याय हवि-

अदि॑तेरु॒पस्थ॑म् । स्ती॒र्णं ब॒र्हिर्ह॒विर॒द्याय॑ दे॒वाः ॥८॥ [6]स्ती॒र्णं ब॒र्हिस्सी॑दता य॒ज्ञे अ॒स्मिन् । ध्रा॒जास्से॑धन्तो॒ अम॑तिं दु॒रेवा॑म् । अ॒स्मभ्यं॑ पु॒त्रा अदि॑तेः प्रय॑ꣳसत । आदि॑त्याः काम॑ ह॒विषो॑ जु॒षा॒णाः । [7]अग्ने॒ नय॑ सु॒पथा॑ रा॒ये अ॒स्मान् । विश्वा॑नि देव व॒युना॑नि वि॒द्वान् । यु॒यो॒ध्य॑स्मज्जु॑हुरा॒णमेनः॑ । भू-

भक्षणायोपस्थं समीपे स्थातुं योग्यं स्तीर्णं वेद्यां प्रसारितं बर्हिः सीदन्तु प्राप्नुवन्तु ।

[6]अथ हविषो याज्यामाह—हे आदित्याः हे काम अस्मिन्यज्ञे स्तीर्णं वेद्यामास्तीर्णं बर्हिः सीदत प्राप्नुत । कीदृशाः? ध्राजाः गतिमन्तः अमतिमस्मदीयं बुद्धिमान्द्यं दुरेवां दुर्गतिं च सेधन्तः प्रतिषेधन्तस्तादृशा अदितेः पुत्रा यूयं हविषो जुषाणाः अस्मदीयं हविः सेवमानाः अस्मभ्यं प्रयंसत अभीष्टं प्रयच्छत ।

[7]अथ 'यो ब्रह्मवर्चसकामस्स्यात्तस्मा एतामह्ना आलभेत । आग्नेयीं कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेतां बार्हस्पत्याम्' इत्यत्राग्नेय्याः सूक्ते वपायाः पुरोनुवाक्यामाह—हेऽग्ने देव त्वं विश्वानि वयुनानि सर्वान्मार्गान्विद्वान् जानन्वर्तसे । अतोऽस्मान् राये धनप्राप्तये सुपथा नय शोभनेन कर्मानुष्ठानमार्गेण प्रापय । जुहुराणं कुटिलं प्रतिबन्धकमेनः पापमस्मत् युयोधि अस्मत्तः पृथक्कुरु । ते तुभ्यं भूयिष्ठामतिबहुलां नमउक्तिं नमस्कारयुक्तां वाचं विधेम कुर्याम् ।

यिष्ठां ते नमउक्तिं विधेम । [8]प्र वंश्शुक्राय भानवे भरध्वम् । हव्यं मतिं चाग्नये सुपूतम् ॥ ६ ॥ यो दैव्यानि मानुषा जनूꣳषि । अन्तर्विश्वानि विद्मना जिगाति । [9]अच्छा गिरो मतयो देवयन्तीः । अग्निं यन्ति द्रविणं भिक्षमाणाः । सुसंदृशꣳ सुप्रतीकꣳ स्वञ्चम् । हव्यवाहमरतिं मानुषाणाम् ।

---

[8]अथ वपाया याज्यामाह—हे ऋत्विजः वो युष्माकमभीष्टसिद्ध्यर्थं शुक्राय निर्मलाय भानवे रश्मियुक्तायाग्नये सुपूतं सुष्ठु पूतं शुद्धमिदं हव्यं मतिं चाग्निध्यानार्थं प्रकर्षेण भरध्वं संपादयत । योऽग्निर्दैव्यानि देवविषयाणि मानुषा मनुष्यविषयाणि जनूंषि जन्मानि विद्मना वेदनेन जिगाति प्राप्नोति । अभिज्ञस्सन्देवान्मनुष्यांश्च जनयतीत्यर्थः । पुनरप्यन्तर्देवानां मनुष्याणां च मध्ये यान्यवान्तरजन्मानि यक्षगन्धर्वादीनि ब्राह्मणक्षत्रादीनि च तानि विश्वानि सर्वाणि जिगाति । तस्मा अग्नय इति पूर्वत्रान्वयः ।

[9]अथ पुरोडाशस्य पुरोनुवाक्यामाह—गिरः अस्मदीयाः स्तुतिरूपा वाचः मतयो ध्यानरूपा बुद्धयश्च देवयन्तीः देवानिच्छन्त्यो द्रविणं भिक्षमाणा धनं याचमाना अग्निमच्छ अग्निमभिमुखीकृत्य यन्ति प्रवर्तन्ते । कीदृशमग्निं? सुसंदृशं अत्यन्तं सुखेन द्रष्टुं शक्यम् । सुप्रतीकं शोभनावयवोपेतम् । स्वञ्चं शोभनगतिम् । मानुषाणां यजमानानां हव्यवाहं हविषो वोढारं मानुषैर्यद्धविर्दीयते तद्देवान्प्रति वहतीत्यर्थः । रतिरुपरमस्तद्राहितमरतिं, निरन्तरं वहतीत्यर्थः ।

[10] अग्ने त्वमस्मद्युयोध्यमीवाः । अनंग्निश्रा अभ्यं‌मन्त कृष्टीः । पुनंरस्मभ्यं सुवितायं देव । क्षां विश्वेभिरजरेभिर्यजत्र ॥ १० ॥ [11] अग्ने त्वं पारया नव्यो अस्मान् । स्वस्तिभिरति दुर्गाणि विश्वां । पूश्च पृथ्वी बहुला नं उर्वी । भवा तोकाय तनं‌याय शं योः । [12] प्र कारवो मनना वच्यमानाः ।

[10] अथ पुरोडाशस्य याज्यामाह—हेऽग्ने त्वं अमीवाः रोगजातीः अस्मत् युयोधि अस्मत्तो वियोजय । या रोगजातयोऽनग्नित्राः उदराग्नित्राणरहिता मन्दाग्निहेतव इत्यर्थः । तादृश्यो भूत्वा कृष्टीः मनुष्यान् अभ्यमन्त अभितो बाधितवत्यः तादृशीर्युयोधीति पूर्वत्रान्वयः। हे यजत्र यजनीय देव अजरेभिः जरानिवर्तकैः विश्वेभिः सर्वैरौषधैः क्षां क्षयव्याधिं पुनरस्मभ्यं युयोधि अस्मत्तो वियोजय । किमर्थं? सुविताय शोभनगमनाय नीरोगत्वेन जीवनायेत्यर्थः ।

[11] अथ हविषः पुरोनुवाक्यामाह—हेऽग्ने त्वं विश्वानि दुर्गाण्यति सर्वानुपद्रवानतिक्रम्य स्वस्तिभिः श्रेयोविशेषैः फलैर्युक्तस्सन्नस्मान् पारय कर्मणः समाप्तिं प्रापय । कीदृशस्त्वं? नव्यः सर्वदा नूतनो जरामरणरहित इत्यर्थः । नोऽस्माकं पूश्च निवासार्थं पुरी पृथ्वी विस्तृता भवतु । उर्वी सस्यानिष्पत्त्यर्था भूमिश्च बहुलाऽत्यधिका भवतु । त्वं च तोकाय पुत्राय तनयाय तत्पुत्राय च शं सुखहेतुः योः दुःखवियोगहेतुश्च भव ।

[12] अथ हविषो याज्यामाह—हे कारवः कर्मकर्तारः ऋत्विजः

देवद्रीचीं नयथ देवयन्तः। दक्षिणावाड्वाजिनी प्राच्येति। हविर्भरन्त्यग्नये घृताची। [13] इन्द्रं नरो युजे रथम्। [14] जगृभ्णा ते दक्षिणमिन्द्र हस्तम्॥ ११॥ वसूयवो वसुपते वसूनाम्। विद्मा

यूयं वाच्यमानाः मन्त्रपाठरूपं वचनं प्राप्नुवन्तः देवयन्तः देवानिच्छन्तः मनना मननीयामिमां यागक्रियां देवद्रीचीं नयथ देवान्प्राति यथा गच्छति तथा प्रापयत। सा च यज्ञक्रिया दक्षिणां वहतीति दक्षिणावाट्। वाजोऽन्नमस्या अस्तीति वाजिनी। प्रकृष्टं फलमश्नाति गच्छतीति प्राची। घृतमश्नाति प्राप्नोतीति घृताची। अग्नये हविर्भरन्ती सती एति प्रवर्तते।

[13] अथ 'सꣳहितामैन्द्रीम्' इत्यस्य पशोः सूक्ते वपाया याज्यानुवाक्ययोः प्रतीके दर्शयति—'इन्द्रं नरो नेमधिता' इति पुरोनुवाक्या। सा च 'इन्द्रं वो विश्वतस्परि' इत्यत्र व्याख्याता। 'युजे रथं गवेषणम्' इति याज्या। सा च 'जुष्टो दमूनाः' इत्यत्र व्याख्याता।

[14] अथ पुरोडाशस्य पुरोनुवाक्यामाह—हे इन्द्र ते त्वदीयं दक्षिणहस्तं जगृभ्णा वयं गृहीतवन्तः हस्तं धृत्वा प्रार्थयाम इत्यर्थः। कीदृशा वयं? वसूयवो धनेच्छावन्तः। वसूनां वसुपत इत्येतदिन्द्रस्य विशेषणम्। यानि वसूनि धनानि हिरण्यानि सन्ति तेषां मध्ये यानि श्रेष्ठानि मणिमुक्तादीनि तत्स्वामिन्नित्यर्थः। हे शूर शत्रूणामभिभवितः त्वां गोनां गवां मध्ये गोपतिं प्रश-

हि त्वा गोपतिं शूर गोनाम् । अस्मभ्यं चित्रं वृषणं रयिं दाः । [15]तवेदं विश्वमभितः पशव्यम् । यत्पश्यसि चक्षसा सूर्यस्य । गवामसि गोपतिरेक इन्द्र । भक्षीमहि ते प्रयतस्य वस्वः । [16]समिन्द्र णो मनसा नेषि गोभिः । सं सूरिभिर्मघवन्त्सं स्वस्त्या । सं ब्रह्मणा देवकृतं यदस्ति ॥ १२ ॥ सं देवानां सुमत्या यज्ञियानाम् । [17]आराच्छत्रुमपबाधस्व दूरम् । उग्रो यश्शम्बः

स्तगोस्वामिनं हि यस्माद्वयं विद्म तस्मादस्मभ्यं चित्रं नानाविधं वृषणं कामाभिवर्षणक्षमं रयिं दाः धनं देहि ।

[15]अथ पुरोडाशस्य याज्यामाह—हे इन्द्र सूर्यस्य चक्षसा प्रकाशेन यद्विश्वं पश्यसि, तदिदं विश्वमभितः सर्वतः पशव्यं पशुयुक्तं तवाधीनमिति शेषः । त्वमेक एव गवां मध्ये गोपतिरसि प्रशस्तगोस्वामी भवसि । प्रयतस्य प्रयतमानस्य ते तव वस्वः वसूनि धनानि भक्षीमहि अनुभूयास्म ।

[16]अथ हविषः पुरोनुवाक्यामाह—हे इन्द्र त्वं मनसा स्मरणमात्रेण नोऽस्मान् गोभिः संनेषि संयोजय । हे मघवन् सूरिभिर्विद्वद्भिः पुत्रैः संयोजय । स्वस्त्या क्षेमेण संयोजय । देवकृतं देवार्थं निष्पन्नं यन्मन्त्रजातमस्ति तेन ब्रह्मणा मन्त्रजातेन संयोजय । यज्ञियानां यज्ञार्हाणां देवानां सुमत्या अनुग्रहबुद्ध्या संयोजय ।

[17]अथ हविषो याज्यामाह—हे पुरुहूत बहुभिर्यजमानैराहूतेन्द्र,

पुरुहूत तेन । अस्मे धेहि यवमद्गोमदिन्द्र । कृधी धियं जरित्रे वाजरत्नाम् । [18]आवेधसꣳ स हि शुचिः । [19]बृहस्पतिः प्रथमं जायमानः । महो ज्योतिषः परमे व्योमन् । सप्तास्यस्तुविजातो र-

उग्रः क्रूरो यः शम्बनामकोऽसुरोऽस्ति तेन सहितं आरात्समीपे वर्तमानं शत्रुं दूरं यथा भवति तथाऽपबाधस्व । हे इन्द्र यवमत् यवैः प्रभूतैरुपेतं गोमत् बहुभिर्गोभिरुपेतं धनं अस्मे धेहि अस्मासु स्थापय । जरित्रे जरणशीले मयि वाजरत्नां अन्नेन रत्नैश्च संपूर्णां धियं अनुग्रहबुद्धिं कृधि कुरु ।

[18]अथ 'श्वेतां बार्हस्पत्याम्' इत्यस्य पशोः सूक्ते वपाया याज्यानुवाक्ययोः प्रतीके दर्शयति—'आवेधसं नीलपृष्ठम्' इति पुरोनुवाक्या । 'स हि शुचिश्शतपत्रः' इति याज्या । एतदुभयं 'यज्ञो राये' इत्यत्र व्याख्यातम् ॥

[19]अथ पुरोडाशस्य पुरोनुवाक्यामाह—योऽयं बृहस्पतिः सोऽयमितरेभ्यो देवेभ्यः प्रथमं पूर्वं जायमानस्सन् परमे व्योमन् उत्कृष्ट आकाशे स्वर्गरूपे ज्योतिषो महः अन्यदीयात्प्रकाशादत्यन्तं महान् भासते। कीदृशो बृहस्पतिः? रवेण वेदशास्त्ररूपेण शब्देन सप्तास्यः प्रसृतमुखः । अथवा सप्तसंख्याकान्यास्यानि ज्वालारूपाणि यस्याग्नेः सोऽयं सप्तास्यः । रवेण मन्त्रेण होमकाले हविः स्वीकर्तुं वह्निरूपो भवतीत्यर्थः । तुविजातः सर्वेषां मध्ये बलयुक्तत्वेनोत्पन्नः । तादृशो बृहस्पतिः सप्तरश्मिः अग्निरूपेण सप्तजिह्वात्मकरश्मियुक्तस्सन् तमांसि व्यधमत् विनाशितवान् ॥

वेण । वि सुमरंश्मिरखमत्तमाꣳसि ॥ १३ ॥ [20] बृहस्पतिस्समजयद्वसूनि । महो व्रजान्गोमतो देव एषः । अपस्सिषासन्त्सुवरप्रतीत्तः । बृहस्पतिर्हन्त्यमित्रमकैः । [21] बृहस्पते परि॑ेवा पित्रे । [22] आ

[20] अथ पुरोडाशस्य याज्यामाह—अयं बृहस्पतिः वसूनि धनानि समजयत् सम्यग्जितवान् । तथैष देवः गोमतः बहुभिर्गोभिर्युक्तान् महः महतः प्रौढान्व्रजान् गोगृहान् समजयत् सम्यग्जितवान् । तादृशो बृहस्पतिः अपः सिषासन् वृष्टिरूपं जलं दातुमिच्छन् सुवः स्वर्गं अप्रतीत्तः प्रत्यावृत्तिराहित्येन प्राप्तः सर्वदा तत्र स्थित इत्यर्थः । स च बृहस्पतिः अर्कैः अस्मत्कृतैरर्चनैः अमित्रं शत्रुं हन्ति ॥

[21] अथ हविषो याज्यानुवाक्ययोः प्रतीके दर्शयति—'बृहस्पते परिदीया रथेन' इति पुरोनुवाक्या । 'एवा पित्रे विश्वदेवाय' इति याज्या । 'बृहस्पते परिदीया रथेन' इत्यसौ 'आशुःशिशानः' इत्यत्र व्याख्याता । 'एवा पित्रे विश्वदेवाय' इत्यसौ 'अग्नाविष्णू महि तद्वाम्' इत्यत्र व्याख्याता ॥

[22] अथ "सारस्वतं मेषम्" इत्यस्य पशोः सूक्ते पञ्चानामृचां प्रतीकानि दर्शयति—'आ नो दिवो बृहतः' इत्येषा वपायाः पुरोनुवाक्या । सा च 'अग्नाविष्णू महि तद्वाम्' इत्यत्र व्याख्याता । 'पावीरवी कन्या' इत्येषा याज्या । सा च 'अग्निं यं यज्ञमध्वरम्' इत्यत्र व्याख्याता । 'इमा जुह्वाना युष्मदा नमोभिः'

नों दि॒वः पा॑वीरवी । इ॒मा जु॒ह्वा॑ना॒ यस्ते॒ स्तनः॑ । सर॑स्वत्य॒भि नों नेषि । [23]इ॒यᳪ शु॒ष्मेभि॑र्बिस॒खा इ॑वारुजत् । सानु॑ गिरी॒णां त॑वि॒षेभि॑रू॒र्मिभिः॑ । पा॒रा॒व॒त॒घ्नीमव॑से सुवृ॒क्तिभिः॑ । सर॑स्वती॒मावि॑वासेम धी॒तिभिः॑ ॥ १४ ॥

इत्येषा पुरोडाशस्य पुरोनुवाक्या । सा च 'उत नः प्रिया' इत्यत्र व्याख्याता । 'यस्ते स्तनश्शशयः' इति याज्या । सा चारण्यकाण्डे प्रवर्ग्यमन्त्रेषु व्याख्यास्यते । 'सरस्वत्यभि नो नेषि वस्यः' इति हविषः पुरोनुवाक्या । सा च 'जुष्टी नरः' इत्यत्र व्याख्याता ॥

[23]अथ हविषो याज्यामाह—इयं सरस्वती नदीरूपा ऊर्मिभिः स्वकीयैस्तरङ्गैः स्वतीरावस्थितानां गिरीणां सानु मूलप्रदेशं अरुजद्भग्नमकरोत् । तत्र दृष्टान्तः—बिसखा इव यथा जलमध्ये बिसानि खनितुं प्रवृत्तः पुरुष आयासमन्तरेणैवोन्मूलयत्येवमत्राप्यूर्मिस्पर्शमात्रेण पर्वतमूलानि विशीर्णानि भवन्ति । कीदृशैरूर्मिभिः? शुष्मेभिः प्रबलैः । तविषेभिः अतिस्थूलैः । वयं तु सरस्वतीं धीतिभिः ध्यानविशेषैः आविवासेम सर्वत आच्छादयामः । किमर्थम्? अवसे रक्षणार्थम् । कीदृशीं सरस्वतीं? पारावतघ्नीं अवरं अवरतीरं पारं परतीरं च स्ववेगेन हन्तीति पारावतघ्नी ताम् । कीदृशीभिर्धीतिभिः? सुवृक्तिभिः वृक्तिरन्यचिन्तावर्जनं सुष्ठु वृक्तिर्यासु ध्यानक्रियासु ताः सुवृक्तयः ताभिरनन्यचिन्तारहितैर्ध्यानविशेषैर्निरन्तरं ध्यायाम इत्यर्थः॥

देवयानैर्देवास्सुपूतं यजत्र हस्तमस्ति तमा२ स्यूर्मिभिर्द्दे च ॥ २ ॥

[1]सोमो धेनु२ सोमो अर्वन्तमाशुम् । सोमो वीरं कर्मण्यं ददातु । सादन्यं विदथ्य२ सभेयम् ।

अत्र विनियोगसंग्रहः—

ते शुक्रेति वपायां स्यादाग्नेय्यामग्न इत्यथ ।
इन्द्रमैन्द्र्यां तथाऽऽवेधसं श्वेतायामुदीरितम् ॥
आ नो मेष्यां द्वितीयेऽस्मिन्सूक्तपञ्चकमीरितम् ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके अष्टमप्रपाठके द्वितीयोऽनुवाकः.

---

[1]द्वितीये वशादीनां पशूनां सूक्तान्यभिहितानि । तृतीये सौम्यादीनां सूक्तान्युच्यन्ते । तत्र 'आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुं ज्योगामयावी' इत्येतस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—योऽयं सोमो देवः सोऽयमस्मै यजमानाय धेनुं ददातु । तथा स सोमः आशुं शीघ्रगामिनमर्वन्तमश्वं ददातु । तथा स सोमः कर्मण्यं श्रौतस्मार्तकर्मयोग्यं वीरं पुत्रं ददातु । कीदृशं वीरं? सदनं गृहं तत्र साधुः सादन्यस्तं गृहनिर्वाहकमित्यर्थः । विदथे यज्ञे कुशलं विदथ्यम् । सभायां साधुः सभेयस्तं सभेयम् । स्वकीयस्य पितुः श्रवणं कीर्तिः संपाद्यते येन सोऽयं पितुःश्रवणस्तम् । यो यजमानः सोमाय देवाय ददाशत् चरुपुरोडाशादिकं ददाति । अस्मै यजमानायेति पूर्वत्रान्वयः ॥

पितुश्श्रवणं यो ददाशदस्मै। [2]अषाढं युत्सु त्वꣳ सोम क्रतुभिः। [3]या ते धामानि हविषा यजन्ति। त्वमिमा ओषधीस्सोम विश्वाः। त्वमपो अजनयस्त्वं गाः। त्वमाततन्थोर्वन्तरिक्षम्। त्वं ज्योतिषा वितमो ववर्थ ॥ १५ ॥ [4]या ते धामानि दिवि या पृथिव्याम्। या पर्वतेष्वोषधीष्वप्सु। तेभिर्नो विश्वैस्सुमना अहेडन्। राजन्थ्सोम प्रति

---

[2]अथ वपाया याज्यायाः पुरोडाशस्य पुरोनुवाक्यायाश्च प्रतीके दर्शयति—'अषाढं युत्सु पृतनासु' इति वपाया याज्या। 'त्वꣳ सोम क्रतुभिः' इति पुरोडाशस्य पुरोनुवाक्या। एतदुभयं 'जुष्टी नरः' इत्यत्र व्याख्यातम् ॥

[3]अथ पुरोडाशस्य याज्यायाः प्रतीकं दर्शयति। सा च 'अग्नेरातिथ्यमसि' इत्यत्र व्याख्याता। अथ हविषः पुरोनुवाक्यामाह—हे सोम त्वं विश्वाः सर्वा इमा ओषधीः अजनयः उत्पादितवानसि। तथा त्वमपो जलान्यजनयः। तथा त्वं गाः गवादिपशूनजनयः। तथा त्वमुरु विस्तीर्णमन्तारिक्षं आततन्थ विस्तारितवानसि। तथा त्वं ज्योतिषा तेजसा तमोऽन्धकारं ववर्थ निवारितवानसि ॥

[4]अथ हविषो याज्यामाह—हे सोम राजन् ते तव द्युलोके या धामानि यानि स्थानानि सन्ति तथा पृथिव्यां यानि सन्ति पर्वतेष्वोषधीष्वप्सु यानि सन्ति सुमना अस्माभिः सह सौमनस्य-

हुव्या गृभाय । [5]विष्णोर्नु कं तदस्य प्रियम् । प्र तद्विष्णुः । [6]पुरो मात्रया तनुवा वृधान । न ते महित्वमन्वश्नुवन्ति । उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वम् । परमस्य विथ्से ॥ १६ ॥ [7]वि-

युक्तस्त्वं तैर्मिर्विश्वैस्तैः सर्वैः स्थानैर्युक्तो नोऽस्मान्प्रति हेडन्क्रोधमकुर्वन् हव्या प्रतिगृभाय हवींषि प्रतिगृहाण ॥

[5]अथ 'वैष्णवं वामनमालभेत स्पर्धमानः' इत्यस्य पशोः सूक्ते प्रतीकत्रयं दर्शयति—'विष्णोर्नु कं वीर्याणि' इति वपायाः पुरोनुवाक्या । सेयं 'युञ्जते मनः' इत्यत्र व्याख्याता । 'तदस्य प्रियमभि पाथो अश्याम्' इति वपाया याज्या । सेयं 'उत नः प्रिया' इत्यत्र व्याख्याता । 'प्र तद्विष्णुस्तवते' इति पुरोडाशस्य पुरोनुवाक्या । सेयं 'जुष्टी नरः' इत्यत्र व्याख्याता ॥

[6]अथ पुरोडाशस्य याज्यामाह—हे विष्णो देव मात्रया कृत्स्नं जगन्मातुं प्रवृत्तया तनुवा त्रिविक्रमावताररूपया मूर्त्या वृधान हे वर्धमान परः उत्कृष्टोऽसि । ते त्वदीयं महित्वं महिमानं नान्वश्नुवन्ति केऽपि समर्था अनुगन्तुं न क्षमन्ते । ते तव लोकान्मातुं प्रवृत्तस्य पृथिव्या आरभ्योभे रजसी द्वे रञ्जनस्थाने पृथिव्यन्तरिक्षमित्येते त्वदीयपदे इति वयं विद्मः । त्वं पुनः परमस्योत्कृष्टस्य तृतीयस्य पदस्य स्थानं वित्से जानासि ॥

[7]अथ हविषो याज्यानुवाक्ययोः प्रतीके दर्शयति—'विचक्रमे पृथिवीमेषः' इति पुरोनुवाक्या । 'त्रिर्देवः पृथिवीमेषः' इति याज्या । एतच्चोभयं 'जुष्टी नरः' इत्यत्र व्याख्यातम् ॥

चक्रमे त्रिदेवः । [8]आ ते महो यो जात एव । अभि गोत्राणि । [9]आभिस्स्पृधो मिथतीररिषण्यन् । अमित्रस्य व्यथया मन्युमिन्द्र । आभिर्विश्वा अभियुजो विषूचीः । आर्याय विशोऽवतरीर्दासीः ।

[8]अथ 'इन्द्राय मन्युमते मनस्वते ललामं प्राशृङ्गमालभेत' इत्यस्य पशोः सूक्ते प्रतीकत्रयं दर्शयति—'आ ते मह इन्द्र' इति वपायाः पुरोनुवाक्या । 'यो जात एव प्रथमो मनस्वान्' इति याज्या । एतद्द्वयमन्वहमासा इत्यत्र व्याख्यातम् । 'अभि गोत्राणि सहसा गाहमानः' इति पुरोडाशस्य पुरोनुवाक्या । सा च 'आशुः शिशानः' इत्यत्र व्याख्याता ॥

[9]अथ पुरोडाशस्य याज्यामाह—हे इन्द्र, अमित्रस्य अस्मद्वैरिणः मन्युं क्रोधं व्यथय व्यथितं निष्फलं कुरु । अस्मासु क्रुद्धः शत्रुर्यदाऽस्मान् हन्तुं न क्षमते तदा तदीयः क्रोधो निष्फलो भवेत्तथा त्वं कुर्वित्यर्थः । किं कुर्वन्? स्पृधः शत्रूणां स्पर्धमाना अस्मदीयाः सेना मिथतीः त्वां प्रत्यभयं याचमाना आभिरस्मदीयाभिः स्तुतिभिः अरिषण्यन् अहिंसिताः कुर्वन् । अस्मदीयस्तुतिभिस्तुष्टस्त्वमस्मदीयाः सेना यथा न हिंसिता भवन्ति तथा कुर्वित्यर्थः । किंच विश्वाः परकीयाः सर्वाः सेना अभियुजः अस्मद्वधमाभिलक्ष्य प्रयुज्यमाना विषूचीः नानागतीर्दासीरुपक्षयं प्राप्ता विशः सर्वाः प्रजा अभितुष्टस्सन्नवतारीः विनाशय । यथा अस्मदीयस्तुत्या तुष्टं त्वां प्रत्यभयं याचमानानामस्मत्सेनानां न हिंसां कृतवानसि तथैवास्मदीयस्तुत्या तुष्टस्सन्परकीयसेना विनाशयेत्यर्थः ॥

[10]अय५ शृण्वे अध जयन्नुत घ्नन्। अयमुत प्रकृ-
णुते युधा गाः। यदा सत्यं कृणुते मन्युमि-
न्द्रः ॥ १७ ॥ विश्वं दृळ्हं भयत एजदस्मात्।
[11]अनु स्वधामक्षरन्नापो अस्य। अवर्धत मध्य आ
नाव्यानाम्। सध्रीचीनेन मनसा तमिन्द्र ओजि-

---

[10]अथ हविषः पुरोनुवाक्यामाह—अयमिन्द्रः अध कदाचिज्जयन्वर्तते, उत अथवा घ्नन् वर्तत इत्यहं शृण्वे। अयमर्थः—यदा यदेन्द्रस्य वार्तां शृणोमि तदा तदा जयतीति वा वैरिणं हन्तीति वा शृणोमि। उत अपिच अयमिन्द्रः युधा युद्धेन गाः परकीयाः प्रकृणुते प्रकर्षेण स्वाधीनाः करोति। किंच यदाऽयमिन्द्रः स्वकीयं मन्युं सत्यमवश्यंभाविनं कृणुते करोति तदानीं दृढं क्वचिदेवावस्थितं स्थावरं एजत् कम्पमानं जङ्गमं च विश्वं सर्वं जगदस्मादिन्द्रात् भयते बिभेति। अयमर्थः—परिहासार्थो यः कोपस्तमन्तरेण यदा हृदयपूर्वकं कोपं करोति तदा सर्वं जगद्बिभेतीति।

[11]अथ हविषो याज्यामाह—अस्येन्द्रस्य स्वधां हविर्लक्षणमनु आपः वृष्टिलक्षणा अक्षरन् स्रवन्ति। नाव्यानां नावा तरणीयानां नदीनां मध्य आऽवर्धत जलं सर्वतोऽभिवृद्धमभूत्। अयमिन्द्रः ओजिष्ठेनात्यन्तबलयुक्तेन सध्रीचीनेन सह वर्तमानेन मनसा युक्तस्तं प्रसिद्धं मेघमभिघ्नन् प्रतिदिनं हन्मना हननसाधनेन स्वायुधेन वज्रेण अहन् ताडयति। अयमर्थः—यदाऽयं स्वेच्छया मेघं भिनत्ति तदा वृष्ट्या नदीपूरणक्षमं जलं वर्धत इति॥

ष्ठेन । हन्मनाऽहन्नभिद्यून् । [12]मरुत्वन्तं वृषभं वावृधानम् । अकवारिं दिव्यꣳ शासमिन्द्रम् । विश्वासाहमवसे नूतनाय । उग्रꣳ सहोदामिह तꣳहुवेम । [13]जनिष्ठा उग्रस्सहसे तुराय ॥ १८ ॥ मन्द्र ओजिष्ठो बहुलाभिमानः । अवर्धन्निन्द्रं मरुतश्चिद्त्र । माता यद्वीरं दधनद्धनिष्ठा । [14]कं स्या वो

[12]अथ 'इन्द्राय मरुत्वते पृश्निसक्थमालभेत' इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—इह कर्मणि तमिन्द्रं हुवेम आह्वयामः । किमर्थं? नूतनाय अवसे अन्यैरकृतपूर्वाय रक्षणाय । कीदृशमिन्द्रं? मरुत्वन्तं मरुद्भिः संयुतम् । वृषभं कामानां वर्षितारम् । वावृधानं अतिशयेन वर्धमानम् । अकवारिं अकुत्सितारिम् । कुत्सितेनातिस्वल्पेन वैरिणा सह स्पर्धा लज्जायै भवति । दिव्यं दिवि भवम् । शासं शासितारम् । विश्वासाहं विश्वस्याभिभवितारम् । उग्रं अनभिभवनीयम् । सहोदां बलप्रदम् ॥

[13]अथ वपाया याज्यामाह—हे इन्द्र त्वमुग्रः परैरप्रधृष्यः जनिष्ठ उत्पन्नोऽसि । किमर्थं? सहसे वैरिबलस्य तुराय हिंसार्थम् । कीदृश इन्द्रः? मन्द्रो हर्षयुक्तः । ओजिष्ठो बलवत्तरः । बहुलाभिमानः प्रभूताहंकारः । मरुतश्चित् मरुतोऽपि बलकर्मणि वृत्रवधादिके इन्द्रमवर्धन् वर्धितवन्तः । किंच धनिष्ठा अतिशयेन धनवती माता अदितिरूपा यद्वीरं यमिन्द्रं शूरं दधनत् धारितवती तमिन्द्रमवर्धन्नित्यन्वयः ॥

[14]अथ पुरोडाशस्य पुरोनुवाक्यामाह—इन्द्रस्य मरुतां च परस्परसंवादोऽयम् । अहिनामकस्यासुरस्य वधे मरुत इन्द्रस्य साहाय्य-

मरुतस्स्वधाऽऽसीत् । यन्मामेकꣳ समधत्ताहिहत्ये । अहꣳ ह्युग्रस्तविषस्तुविष्मान् । विश्वस्य शत्रोरनमं वधस्नैः । [15]वृत्रस्य त्वा श्वसथादीषमाणाः । विश्वे देवा अजहुर्ये सखायः । मरुद्भिरिन्द्र सख्यं ते अस्तु ॥ ११ ॥ अथेमा विश्वाः पृतना जयासि । [16]वधीं वृत्रं मरुत इन्द्रियेण । स्वेन भा-

---

मकृत्वा पलायिता अतस्तान्प्रतीन्द्रः कुपित एवं ब्रवीति—हे मरुतः यद्यस्मात्कारणादहिहत्ये अहिनामकशत्रोर्वधे मामेकमेव यूयं समधत्त संयोजितवन्तः तदानीं वो युष्माकं स्वधा साऽन्ननिमित्ता शक्तिः क्वासीत् कुत्र गता । अथवा किं मे युष्माभिः, अहं ह्युग्रः अहमेवातितीव्रः तविषः महान् तुविष्मान् बलवान् तादृशस्सन्विश्वस्य सर्वस्यापि शत्रोर्वधस्नैः वधबन्धनैः अनमं वशीकरणे शक्तोऽस्मि ॥

[15]अथ पुरोडाशस्य याज्यामाह—पुरा वृत्रवधार्थमिन्द्रः सर्वेषां देवानां सहायमपेक्षमाणस्तैस्सह युद्धार्थमागतः । तदा सर्वे देवा वृत्रस्य श्वासमात्रेण निराकृताः सन्तो गताः । मरुतस्तु पलायनमकृत्वेन्द्रस्य सख्यमाचरन् । सोऽयं वृत्तान्तो बह्वृचब्राह्मणस्थोऽस्मिन्मन्त्रे सूच्यते । तमेतमर्थमिन्द्रं संबोध्य होता कथयति । हे इन्द्र विश्वे सर्वे देवा वृत्रस्य श्वसथात् तदुच्छ्वासादीषमाणाः पलायमानास्सन्तस्त्वामजहुः परित्यक्तवन्तः । ये तु सखायो मरुतो न पलायन्ते तैर्मरुद्भिः सख्यं तवास्तु । अथानन्तरमिमा विश्वाः सर्वाः पृतनाः सेना जयसि नेष्यसि ॥

[16]अथ हविषः पुरोनुवाक्यामाह—हे मरुतः इन्द्रोऽहं स्वेने-

मेन तविषो बभूवान् । अहमेता मनवे विश्वश्चन्द्राः । सुगा अपश्चकर वज्रबाहुः । [17]स यो वृषा वृष्णियेभिस्समोकाः । महो दिवः पृथिव्याश्च सम्राट् । सतीनसत्त्वा हव्यो भरेषु । मरुत्वान्नो भवत्विन्द्र ऊती । [18]इन्द्रो वृत्रमतरद्वृत्रतूर्ये ॥ २० ॥

न्द्रियेण हस्तेन स्वेन भामेन स्वकीयेन कोपेन वृत्रं वधीं अवधिषम् । अतः तविषो बभूवान् महानभवम् । इन्द्रो महानित्येवं लोके कीर्तिर्जातेत्यर्थः । अहमिन्द्रो वज्रबाहुस्सन् विश्वश्चन्द्राः सर्वस्य जगत आह्लादकराः सुगाः सुखेन गन्तुं प्राप्तुं शक्या एता दृश्यमाना वृष्टिलक्षणा अपो मनवे मनुष्यार्थं चकर कृतवानस्मि । सर्वस्य लोकस्यानिष्टनिवारणाय वृत्रं हत्वेष्टप्राप्तये वृष्टिमुत्पादितवानस्मीत्यर्थः ॥

[17]अथ हविषो याज्यामाह—य इन्द्रो वृषत्वादिगुणकः स इन्द्रो नोऽस्मान्प्रति मरुत्वान् मरुद्भिर्युक्त ऊती रक्षणहेतुर्भवतु । के ते गुणा इति तेऽभिधीयन्ते—वृषा कामानां वर्षयिता । वृष्णियशब्दो बलनामसु पठितः । वृष्णियैर्बलैः समोकाः संयुक्तः । महो महत्या दिवः पृथिव्याश्च सम्राट् स्वामी सन् सम्यग्राजमानः । सतीनशब्दो जलनामसु पठितः । सतीनसत्त्वा वृष्ट्यात्मकजलप्रदः । भ्रियन्ते संपाद्यन्ते हवींषि येषु यागेष्विति भरा यागाः तेषु हव्यः आह्वानार्हः ॥

[18]अथ "इन्द्राय वृत्रतुरे ललामं प्राशृङ्गमालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—अयमिन्द्रो वृत्रतूर्ये वृत्रव-

अनाधृष्यो मघवा शूर इन्द्रः। अन्वेनं विशो अमदन्त पूर्वीः। अयꣳ राजा जगतश्चर्षणीनाम्। [19]स एव वीरस्स उं वर्यावान्। स एकराजो जगतः परस्पाः। यदा वृत्रमतरच्छूर इन्द्रः। अथाभवद्दमिताऽभिक्रतूनाम्। [20]इन्द्रो यज्ञं वर्धयन्विश्ववेदाः। पुरोडाशस्य जुषताꣳ हविर्नः। वृत्रं तीर्त्वा दानवं वज्रबाहुः ॥ २१ ॥ दिशोऽहꣳहद्-

धनिमित्ते युद्धे वृत्रमतरत् विनाशितवान्। स इन्द्रोऽनाधृष्यः केनापि तिरस्कर्तुमशक्यः। मघवा धनवान्। शूरो विक्रमयुक्तः। पूर्वीः पूर्वकालीना विशः प्रजा एनमिन्द्रं अन्वमदन्त वृत्रवधेनेन्द्रे हृष्टे सति प्रजा अपि हृष्टवत्यः। अयमिन्द्रः चर्षणीनां मनुष्याणां कृत्स्नस्य जगतश्च राजा भूत्वा वर्तते ॥

[19]अथ वपाया याज्यामाह—योऽयमिन्द्रः स एव वीरो युद्धेषु शूरः। स उ वीर्यवान् स एवोत्साहयुक्तः। स एकराजः कृत्स्नस्य जगत एक एव राजा। परस्पा अतिशयेन पाता। सोऽयं शूर इन्द्रो यदा वृत्रमतरत् विनाशितवान् अथ अनन्तरमाभिक्रतूनां अभिप्राप्तविरोधाचरणलक्षणकर्मणां दमिता दमनहेतुरभवत् ॥

[20]अथ पुरोडाशस्य पुरोनुवाक्यामाह—विश्ववेदाः सर्वज्ञोऽयमिन्द्रः यज्ञमस्मदीयं वर्धयन् नः अस्मदीयस्य पुरोडाशस्य सारांशं हविर्जुषताम्। वज्रबाहुरयं वृत्राख्यं दानवं तीर्त्वा हत्वा हंहणेन

दृꣳहिता दृꣳहणेन। [21]इमं यज्ञं वर्धयन्विश्वेदाः। पुरोडाशं प्रतिगृभ्णात्विन्द्रः। यदा वृत्रमतरच्छूर इन्द्रः। अथैकराजो अभवज्जनानाम्। [22]इन्द्रो देवाञ्छम्बरहत्य आवत्। इन्द्रो देवानामभवत्पुरोगाः। इन्द्रो यज्ञे हविषा वावृधानः। वृत्रतूर्णो अभयꣳ शर्म यꣳसत्। [2]यस्सप्त सिन्धूꣳरदधात्पृथिव्याम्। यस्सप्त लोकानकृणोद्दिशश्च। इन्द्रो

---

दृढीकरणसाधनेन दृंहिता दृढीकर्तुमुद्यतस्सन्दिशोऽदृंहत् वृत्रकृतोपद्रवेण प्रचलितानां सर्वदिग्वर्तिप्रजानां स्थैर्यं कृतवानित्यर्थः ॥

[21] अथ पुरोडाशस्य याज्यामाह—स्पष्टोऽर्थः ॥

[22] अथ हविषः पुरोनुवाक्यामाह – शम्बरहत्ये शम्बराख्यस्यासुरस्य हत्ये वधे निष्पन्ने सति स इन्द्रो देवानावत् रक्षितवान्। स चेन्द्रो देवानां मध्ये पुरोगा मुख्योऽभवत्। इन्द्रोऽस्मिन्यज्ञे हविषा वावृधानोऽतिशयेन वर्धते। वृत्रतूः वृत्रघाती स इन्द्रो नोऽस्मभ्यमभयं भयरहितं शर्म सुखं यंसत् यच्छतु ॥

[23] अथ हविषो याज्यामाह—योऽयमिन्द्रः पृथिव्यां सप्त सिन्धून् समुद्रानदधात् स्थापितवान्। य इन्द्रः सप्त लोकान् भूरादीन्दिशश्चाकृणोत् कृतवान्। मरुद्भिर्देवैर्युक्तत्वेन सगणो गणसहित इन्द्रो हविष्मान् हविर्युक्तोऽभूत्। वृत्रतूः वृत्रघाती स इन्द्रः इह लोके नोऽस्मदीयं यज्ञमुपयासत् उपागच्छतु ॥

हविष्मान्धत्सगणो मरुद्भिः । वृत्रतूर्णौ यज्ञमिहोप- यासत् ॥ २२ ॥

ववर्थ विध्स इन्द्रस्तु रायास्तु वृत्रतूर्ये वज्रबाहुः पृथिव्यां त्रीणि च ॥ ३ ॥

[1] इन्द्रस्तरस्वानभिमातिहोग्रः । हिरण्यवाशीरिषिरस्सुवर्षाः । तस्य वय सुमतौ यज्ञियस्य ।

अत्र विनियोगसंग्रहः—

सोमो धेनुमिति प्रोक्तं सौम्ये विष्णोर्नु वामने ।
आ ते महो य ऐन्द्रे स्यान्मरुत्वत्यैन्द्रके मरुत् ।
इन्द्रो वृत्रतुरैन्द्रे स्याद्गणितं सूक्तपञ्चकम् ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टकेऽष्टमे प्रपाठके तृतीयोऽनुवाकः.

---

[1] तृतीये सौम्यादिपशुसूक्तान्यभिहितानि । चतुर्थे त्वभिमातिहेन्द्रादिपशुसूक्तान्युच्यन्ते । तत्र "इन्द्रायाभिमातिघ्ने ललामं प्राशृङ्गमालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—योऽयमिन्द्रोऽस्ति यज्ञियस्य यज्ञार्हस्य तस्येन्द्रस्य सुमतावनुग्रहबुद्धौ वयं स्याम तिष्ठेम । कीदृश इन्द्रः ? तरस्वान् तरो जवस्तद्वान् । अभिमातिहा शत्रुघाती । उग्रः शत्रुषु क्रूरः । 'वाशीति वाङ्नाम, हिरण्यं वाश्यां वाचि यस्यासौ हिरण्यवाशीः । अस्मै शतमस्मै

अपि भद्रे सौमनसे स्याम । [2]हिरण्यवर्णो अभयं कृणोतु। अभिमातिहेन्द्रः पृतनासु जिष्णुः । स न-श्शर्म त्रिवरूथं वियꣳसत् । यूयं पात स्वस्तिभि-स्सदा नः । [3]इन्द्रꣳ स्तुहि वज्रिणꣳ स्तोमपृष्ठम् । पुरोडाशस्य जुषताꣳ हविर्नः ॥ २३ ॥ हत्वाऽभि-मातीः पृतनास्सहस्वान् । अथाभयं कृणुहि वि-

सहस्वामित्येवं सर्वदा धनदानं वक्तीत्यर्थः । इषिर एषणीयः । सुवर्षाः स्वर्गप्रदः । तादृशस्यानुग्रहे स्थित्वा भद्रे कल्याणे सौमनसेऽपि चित्तसमाधानरूपे सुखेऽपि स्याम तिष्ठेम ॥

[2] अथ वपाया याज्यामाह—अयमिन्द्रोऽस्माकमभयं कृणोतु करोतु । कीदृशः ? हिरण्यवर्णः सर्वाभरणभूषितत्वेन हिरण्यसदृशवर्णोपेतः । अभिमातिहा शत्रुघाती । पृतनासु परकीयसेनासु जिष्णुर्जयशीलः । स तादृश इन्द्रो नोऽस्मभ्यं त्रिवरूथं त्रिभूमिकं शर्म गृहं वियंसत् विशेषेण यच्छतु । हे इन्द्र यस्त्वं ये च त्वत्सेवकास्ते सर्वे यूयं नोऽस्मान् स्वस्तिभिः क्षेमैः सदा पात ॥

[3] अथ पुरोडाशस्य पुरोनुवाक्यामाह—हे वागिन्द्रिय इममिन्द्रं स्तुहि । कीदृशं ? वज्रिणं वज्रयुक्तम् । स्तोमपृष्ठं स्तोमैः साध्यानि पृष्ठस्तोत्राणि यस्यासौ स्तोमपृष्ठस्तम् । स चेन्द्रो नोऽस्मदीयस्य पुरोडाशस्य सारभूतं हविर्जुषताम् । सहस्वान् बलवानिन्द्रोऽभिमातीः पृतना वैरिसेनाः सर्वा हत्वाऽथानन्तरं नोऽस्माकं विश्वतः सर्वस्मादभयं कृणुहि कुरु ॥

श्वतो नः । [4]स्तुहि शूरं वज्रिणमप्रतीत्तम् । अभिमातिहनं पुरुहूतामिन्द्रम् । य एक इच्छतपतिर्जनेषु । तस्मा इन्द्राय हविराजुहोत । [5]इन्द्रो देवानामधिपाः पुरोहितः । दिशां पतिरभवद्वाजिनीवान् । अभिमातिहा तविषस्तुविष्मान् । अस्मभ्यं चित्रं वृषणꣳ रयिं दात् ॥ २४ ॥ [6]य इमे द्यावापृथिवी महित्वा । बलेनादृꣳहदभिमातिहेन्द्रः । स नो हविः प्रतिगृभ्णातु रातये । देवानां

---

[4]पुरोडाशस्य याज्यामाह—अप्रतिकूलत्वेन प्राप्तमप्रतीतं शूरादिशब्दैर्विशेषितमिन्द्रं हे वागिन्द्रिय स्तुहि । योऽयमिन्द्रः एक इत् एक एव जनेषु सर्वेषु मध्ये शतपतिः शतसंख्याकानां देवानां स्वामी । तस्मा इन्द्राय हे ऋत्विजः हविराजुहोत सर्वतो हुतं कुरुत ॥

[5]अथ हविषः पुरोनुवाक्यामाह—अयमिन्द्रः सर्वेषां देवानामधिपाः स्वामी सन् पुरोहितो मुखत एव हितकारी । दिशां प्राच्यादीनां पतिः पालकः । वाजिनीवान् अन्नसमूहयुक्तोऽभवत् । अभिमातिहा शत्रुघाती । तविषः महान् । तुविष्मान् बलवान् । तादृश इन्द्रोऽस्मभ्यं चित्रं मणिमुक्तादिरूपेण नानाविधं वृषणं कामाभिवर्षणक्षमं रयिं धनं दात् ददातु ॥

[6]अथ हविषो याज्यामाह—अभिमातिहा शत्रुघाती य इन्द्रो महित्वा महता बलेन इमे द्यावापृथिव्यावदृंहत् दृढीकृतवान् । स इन्द्रो नोऽस्मभ्यं रातये धनदानाय हविः प्रतिगृभ्णातु स्वीकरोतु । देवा-

केवो निधिपा नो अव्यात् । [7]अनवस्ते रथं वृषणे यत्ते । इन्द्रस्य नु वीर्याण्यहन्नाहिम् । [8]इन्द्रो यातोऽवसितस्य राजा । शमस्य च शृङ्गिणो वज्रबाहुः । सेदु राजा क्षेति चर्षणीनाम् । अरान्न नेमिः परिता बभूव ॥ २५ ॥ [9]अभि

नामपि देवः पूज्यः । निधिपाः शङ्खपद्मादिनिधीनां पालकः । इन्द्रो नोऽस्मानव्यात् रक्षतु ॥

[7]अथ "इन्द्राय वज्रिणे ललामं प्राशृङ्गम्" इत्यस्य पशोः सूक्ते वपापुरोडाशविषयाणां याज्यानुवाक्यानां प्रतीकानि दर्शयति—'अनवस्ते रथमश्वाय' इति वपायाः पुरोनुवाक्या । 'वृष्णे यत्ते वृषणो अर्कम्' इति याज्या । एतच्चोभयम् 'इन्द्रं वो विश्वतस्परि' इत्यत्र व्याख्यातम् । 'इन्द्रस्य नु वीर्याणि प्रवोचम्' इति पुरोडाशस्य पुरोनुवाक्या । 'अहन्नहिमन्वपः' इति याज्या । एतच्चोभयम् 'आ नो भर भगमिन्द्र' इत्यत्र व्याख्यातम् ॥

[8]अथ हविषः पुरोनुवाक्यमाह—अयमिन्द्रः यातः गच्छतो जङ्गमस्य अवसितस्य कचिदवस्थितस्य स्थावरस्य च राजा स्वामी । किंच वज्रबाहुः सेदु स एवेन्द्रः शमस्य शान्तियुक्तस्य महर्षिवर्गस्य शृङ्गिणः शृङ्गोपेतस्य गवादेरपि चर्षणीनां मनुष्याणामपि राजा भूत्वा क्षेति निवसति । तस्य दृष्टान्तः—अरान्न नेमिर्यथा रथचक्रस्य परितो वर्तमाना नेमिस्तत्र स्थितानरान्व्याप्नोति तथाऽयमिन्द्रः परिता बभूव परितस्तानि स्थावरजङ्गमादीनि प्राप्तवान् ॥

[9]अथ हविषो याज्यामाह—अस्येन्द्रस्य सिध्मः कार्यसाधको वज्रः

सिध्मो अंजिगादस्य शत्रून् । वि तिग्मेन वृष-भेणा पुरोऽभेत् । सं वज्रेणासृजद्वृत्रमिन्द्रः । प्र स्वां मतिमतिरच्छाशदानः । [10]विष्णुं देवं वरुणमूतये भगम् । मेदसा देवा वपया यजध्वम् । ता नो यज्ञमागतं विश्वधेना । प्रजावदस्मे द्रविणेह धंत्तम् । [11] मेदसा देवा वपया यजध्वम् । विष्णुं च

शत्रून् सर्वानभि सर्वतः अजिगात् प्राप्तवान् हतवानित्यर्थः । तिग्मेन तीक्ष्णेन वृषभेण श्रेष्ठेन वज्रेण पुरः शत्रूणां पुराणि व्यभेत् विशेषेण भिन्नवान् । अयमिन्द्रो वज्रेण वृत्रं समसृजत् संसृष्टवान् संसर्गमात्रेण हतवानित्यर्थः । शाशदानः पुनःपुनर्वैरिणो विनाशयन् स्वां मतिं स्वकीयां बुद्धिं प्रातिरत् प्रकर्षेण वर्धितवान् ॥

[10] अथ "यो भ्रातृव्यवान् स्यात्स स्पर्धमानो वैष्णववारुणीं वशामालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—हे देवाः दीप्यमाना ऋत्विजः भगं भजनीयं विष्णुं वरुणं च देवं ऊतयेऽस्मद्रक्षणार्थं मेदसा मेदोयुक्तया वपया यजध्वं पूजयध्वम् । मेदश्शब्देन वपायां लेपरूपो मांससार उच्यते । विष्णुर्वरुणश्चेत्येतौ देवौ विश्वधेना प्रकर्षेण प्रीणयन्तौ ता तौ युवां नोऽस्मदीयं यज्ञं प्रत्यागतमागच्छतम् । आगत्य चेह कर्मणि प्रजावत् पुत्रपौत्रादियुक्तं द्रविणा धनमस्मे धत्तं अस्मान्संप्रदयतम् ॥

[11] अथ वपाया याज्यामाह—हे देवा ऋत्विजः रातिं फलस्य दातारं विष्णुं च वरुणं च देवं मेदोयुक्तया वपया यजध्वं पूजयत ।

देवं वरुणं च शातिम् ॥ २६ ॥ ता नो अमीवा अपबाधमानौ । इमं यज्ञं जुषमाणावुपेतम् । [12] विष्णूवरुणा युवमध्वराय नः । विशे जनाय महि शर्म यच्छतम् । दीर्घप्रयज्यू हविषा वृधाना । ज्योतिषाऽरातीर्दहतं तमाꣳसि । [13] ययोरोजसा स्कभिता रजाꣳसि । वीर्येभिर्वीरतमा शविष्ठा । या पत्येते अप्रतीता सहोभिः । विष्णू अग-

हे विष्णो वरुण ता तौ युवां नोऽस्माकं अमीवा रोगानपबाधमानाविमं यज्ञं सेवमानावुपेतं समीपमागच्छतम् ॥

[12] अथ पुरोडाशस्य पुरोनुवाक्यामाह—हे विष्णुवरुणौ युवां नोऽस्मदीयायाध्वराय यज्ञाय विशे करप्रदाय प्रजायै जनाय पुत्रपौत्रादिरूपाय मनुष्याय महि शर्म महत्सुखं यच्छतम् । दीर्घप्रयज्यू चिरं प्रकर्षेण यष्टव्यौ, हविषा वृधानाऽतिशयेन वर्धमानौ ज्योतिषा भवदीयेन तेजसाऽरातीः शत्रून् तमांसि अन्धकारांश्च दहतम् ॥

[13] अथ पुरोडाशस्य याज्यामाह—ययोर्विष्णुवरुणयोरोजसा बलेन रजांसि रञ्जनात्मकानि पृथिव्यादिस्थानानि स्कभिता स्तम्भितानि दृढीकृतानीत्यर्थः । वीर्येभिः तत्तद्युक्तगतैः पराक्रमैर्वीरतमाऽत्यन्तं शूरैः शविष्ठाऽतिशयेन बलवन्तौ यौ विष्णुवरुणौ सहोभिर्बलैरप्रतीतौ प्रातिकूल्यरहितौ सन्तौ पत्येते ऐश्वर्यं प्राप्नुतः । तौ विष्णुर्वरुणश्चेत्येतौ पूर्वहूतौ प्रथममाहूतौ युवामगन् आगच्छतम् ॥

न्वरुणा पूर्वहूतौ ॥ २७ ॥ [14] विष्णूवरुणावभि-
शस्तिपा वाम् । देवा यजन्त हविषा घृतेन ।
अपामीवाᳲ सेधतᳲ रक्षसंश्च । अथा धत्तं यज-
मानाय शं योः। [15] अᳲहोमुचा वृषभा सुप्रतू-
र्ती । देवानां देवतमा शचिष्ठा । विष्णूवरुणा
प्रतिहर्यतं नः । इदं नरा प्रयतमूतये हविः । [16] मही
नु द्यावापृथिवी इह ज्येष्ठे । रुचा भवताᳲ शुचय-

[14]अथ हविषः पुरोनुवाक्यामाह—देवा ऋत्विजः हे विष्णुवरुणावभिशस्तिपा अपवादात्पातारौ वां युवां घृतेन हविषा घृतयुक्तेन पश्वङ्गलक्षणेन हविषा यजन्त पूजयन्तु । अमीवां रोगं रक्षसश्च रक्षांस्यप्यपसेधतं निराकुरुतम् । अथ अनन्तरं यजमानाय शं इष्टप्राप्तिनिमित्तं सुखं, योः अनिष्टवियोगं च धत्तं संपादयतम् ॥

[15]अथ हविषो याज्यामाह—हे विष्णुवरुणौ नरा पुरुषश्रेष्ठौ युवां नोऽस्माकमूतये रक्षणाय प्रयतं प्रकर्षेण समर्पितमिदं हविः प्रतिहर्यतं कामयतम् । कीदृशौ युवां? अंहोमुचा पापान्मोचयितारौ । वृषभा श्रेष्ठौ । सुप्रतूर्ती सुष्ठु वैरिणां हिंसकौ । देवानां मध्ये देवतमा अतिशयेन दीप्तिमन्तौ । शचिष्ठा अतिशयेन शक्तिमन्तौ ॥

[16]अथ "द्यावापृथिव्यां धेनुमालभेत ज्योगपरुद्धः" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—द्यावापृथिवी देवते अर्कैः अस्मदीयैरर्चनीयैस्तुष्टे सत्याविह भवतामस्मिन् कर्मणि तिष्ठताम् कीदृश्यौ द्यावापृथिव्यौ? मही महत्यौ । नु प्रसिद्धे । रुचा

द्भिर॒र्कैः ॥ २८ ॥ यथ्सी॒ं वरि॑ष्ठे बृह॒ती वि॑मि॒न्वन्न्। नृ॒वद्भ्यो॒ऽक्षा प॑प्र॒थाने॑भि॒रेवैः॑ । [17]प्र पू॒र्व॒जे पि॒तरा॒ नव्य॑सीभिः। गी॒र्भिः कृ॑णुध्व॒ꣳ सद॑ने ऋ॒तस्य॑ । आ नो॑ द्यावापृथि॒वी दैव्ये॑न । जने॑न यातं॒ महि॑ वां॒ व॒रूथम् । [18] स इथ्स्वपा॒ भुव॑नेष्वास । य इ॒मे द्यावा॑-

स्वकीयेन तेजसा ज्येष्ठे अत्यन्तप्रशस्ते । कीदृशैरर्कैः? शुचयद्भिरस्मत्पापं शोधयद्भिः । यत् ये द्यावापृथिव्यौ सीं फलसीमानं विमिन्वन् निश्चितवत्यौ । ते द्यावापृथिव्याविति पूर्वत्रान्वयः । कीदृश्यौ? वरिष्ठे गुणैरत्यन्तश्रेष्ठे । बृहती स्वरूपेण विस्तृते । पप्रथानेभिरतिप्रथितै प्रसिद्धैरेवैरागमनैर्नृवद्भ्यः ऋत्विक्पुरुषयुक्तेभ्यो यजमानेभ्यः अक्षा प्रत्यक्षत्वेनावस्थिते पुनःपुनरागत्य भक्तजनानां दृश्ये भवत इत्यर्थः ॥

[17]अथ वपाया याज्यामाह—पूर्वजे सृष्ट्यादावुत्पन्ने पितरा मातापितृस्थानीये द्यावापृथिव्यौ नव्यसीभिरत्यन्तनूतनाभिर्गीर्भिः स्तुतिभिस्तुष्टे सत्यौ ऋतस्य यज्ञस्य संबन्धिनी सदने निवासाय द्वे स्थाने कृणुध्वं कुरुताम् । प्रशब्दः सदनविशेषणं, प्रकृष्टे स्थाने इत्यर्थः । हे द्यावापृथिव्यौ दैव्येन दिवि भवेन जनेन सह वां युवयोः संबन्धि महि वरूथं प्रौढं यागगृहं प्रत्यायातमागच्छतम् ॥

[18]अथ पुरोडाशस्य पुरोनुवाक्यामाह—यः प्रजापतिरिमे द्यावापृथिव्यौ जजान उत्पादयामास स इत् स एव प्रजापतिर्भुवनेषु लोकेषु मध्ये स्वपा आस । अप्शब्दः कर्मवाची । शोभनव्यापारो बभूवेत्यर्थः । कीदृश्यौ द्यावापृथिव्यौ? उर्वी स्वरूपेण विस्तीर्णे ।

पृथिवी जजानं। उर्वी गंभीरे रजसी सुमेके। अवंशे धीरः शच्या समैरत् ॥ २१ ॥ [19]भूरिं द्वे अचरन्ती चरन्तम्। पद्वन्तं गर्भमपदी दधाते। नित्यं न सूनुं पित्रोरुपस्थे। तं पिपृतः रोदसी सत्यवाचम्। [20]इदं द्यावापृथिवी सत्यमस्तु। पित-

गभीरे गुणैर्गम्भीरे। रजसी रञ्जनात्मिके। सुमेके सुनिर्माणे। अवंशे कश्यपभरद्वाजादिगोत्ररूपवंशरहिते, सर्वेभ्यो महर्षिभ्यः पूर्वमुत्पन्नत्वान्नास्ति तयोः कश्चिद्वंशः। तादृश्यौ द्यावापृथिव्यौ धीरः धीमान् प्रजापतिः शच्या स्वकीयया शक्त्या समैरत् संयोजितवान् ॥

[19]अथ पुरोडाशस्य याज्यामाह—द्वे द्यावापृथिव्यौ गर्भं सर्वप्राणिरूपं दधाते धारयतः। कीदृश्यौ द्वे? अचरन्ती क्वाप्यविचरन्त्यौ स्थिरे इत्यर्थः। अत एव अपदी पादरहिते, न हि गमनाभावे पादयोरस्ति कश्चिदुपयोगः। कीदृशं गर्भं? भूरिं देवतिर्यगादिरूपेण बहुविधम्। चरन्तं जङ्गमत्वेन संचारयुक्तम्। अत एव पद्वन्तं पादयुक्तम्। तत्र दृष्टान्तः—पित्रोरुपस्थे मातापित्रोरुत्सङ्गे नित्यं न सूनुं पुत्रमिव सर्वदा वर्तमानम्। हे रोदसी द्यावापृथिव्यौ सत्यवाचमवितथवाग्युतं देवादिरूपं गर्भं पिपृतं पालयतम् ॥

[20]अथ हविषः पुरोनुवाक्यामाह—हे पितः द्युलोक, हे मातः पृथिवि, वां युवामभिलक्ष्य इह कर्मणि यद्वचनमहमुपब्रुवे हे द्यावापृथिव्याविदं मदीयं वचनं सत्यमस्तु। किं तद्वचनमिति, तदुच्यते—

मातर्यदिहोपब्रुवे वाम् । भूतं देवानामवमे अवोभिः । विद्यामेषं वृजनं जीरदानुम् । [21]उर्वी पृथ्वी बहुले दूरे अन्ते । उपब्रुवे नमसा यज्ञे अस्मिन् । दधाते ये सुभगे सुप्रतूर्ती । द्यावा रक्षतं पृथिवी नो अभ्वात् । [22]या जाता ओषधयोऽतिविश्वाः परिष्ठाः । या ओषधयस्सोम राज्ञीरश्वावती॰

अवोभिरस्मदीयरक्षणैः सह देवानां सर्वेषामवमे भूतं युवां रक्षके भवतम् । वयमपि भवत्प्रसादादिषमन्नं वृजनं पापवर्जितं जीरदानुं जीवनस्य दातार विद्याम लभेम ॥

[21]हविषो याज्यामाह—उर्वी गुणैरधिके, पृथ्वी स्वरूपेण विस्तीर्णे, बहुले भोगैः प्रभूते, दूरे अन्ते सर्वेषां दूरवर्तिन्यौ समीपवर्तिन्यौ च, सर्वत्र विद्यमानत्वात् । तादृश्यौ द्यावापृथिव्यावभिलक्ष्याहमस्मिन्यज्ञे नमसा नमस्कारेण युक्तमुपब्रुवे किंचिद्विज्ञापनं ब्रवीमि । किं तद्विज्ञापनमिति, तदुच्यते—ये द्यावापृथिव्यौ सुभगे सौभाग्ययुक्ते सुप्रतूर्ती सुष्ठु शत्रुहिंसके दधाते जगद्धर्मं धारयतः ते द्यावापृथिवी युवामुभे नः अस्मान् रक्षतं अभवनमसद्भावो विनाशस्तस्माद्विनाशात्पालयतम् ॥

[22]अथ "ओषधीभ्यो वेहतमालभेत प्रजाकामः" इत्यस्य पशोः सूक्ते क्रमेण वपापुरोडाशहविषां षट्प्रतीकानि दर्शयति—'या जाता ओषधयः' इति वपायाः पुरोनुवाक्या । 'अतिविश्वाः परिष्ठास्तेन इव' इति याज्या । 'या ओषधयस्सोम राज्ञीः' इति

सोमवतीम् । ओषधीरिति मातरोऽन्या वो अन्या-
मवतु ॥ ३० ॥

हविर्नो दाह्यभूव राति पूर्वहूतावकैरैरदस्मिन्प-
ञ्च च ॥ ४ ॥

[1] शुचिं नु स्तोमꣳ श्नथद्वृत्रम् । उभा वामिन्द्रा-

पुरोनुवाक्या । 'अश्वावतीः सोमवतीम्' इति याज्या । "ओषधी-
रिति मातरः" इति हविषः पुरोनुवाक्या । 'अन्या वो अन्या-
मवतु' इति याज्या । एतत्सर्वं "या जाता ओषधयो देवेभ्यस्त्रि-
युगं पुरा" इत्यस्मिन्ननुवाके व्याख्यातम् ।

अत्र विनियोगसंग्रहः—

इन्द्रस्तरस्वानित्येतदभिमातिघ्न ऐन्द्रके ।
अनवो वज्रयुक्तैन्द्रे वशायां विष्णुमित्यदः ॥
मही द्यावापृथिव्यायां या जाता वेहतीष्यते ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टकेऽ-
ष्टमप्रपाठके चतुर्थोऽनुवाकः.

---

[1] चतुर्थेऽनुवाकेऽभिमातिहैन्द्रपश्वादीनां सूक्तान्यभिहितानि । पञ्चमे
त्वैन्द्राग्निपश्वादीनां सूक्तान्यभिधीयन्ते । तत्र "ऐन्द्राग्नं पुनरुत्सृ-
ष्टमालभेत" इत्यस्य पशोः सूक्ते षण्णामप्यृचां प्रतीकानि दर्श-

ग्नी प्रचर्षणिभ्यः । आवृत्रहणा गीर्भिर्विप्रः[1] । [2]ब्रह्मणस्पते त्वमस्य यन्ता । सूक्तस्य बोधि तनयं च जिन्व । विश्वं तद्भद्रं यदवन्ति देवाः । बृहद्वदेम विदथे सुवीराः । [3]स ईं सत्येभिस्सखिभिश्शुचद्भिः । गोधायसं वि धनसैरतर्दत् । ब्रह्मणस्पतिर्वृ-

यति—'शुचिं नु स्तोमं नवजातम्' इति वपायाः पुरोनुवाक्या। सा च 'उभा वामिन्द्राग्नी' इत्यत्र व्याख्याता । 'श्नथद्वृत्रमुत सनोति' इति वपाया याज्या । सा चेन्द्राग्नी रोचना दिव इत्यत्र व्याख्याता । 'उभा वामिन्द्राग्नी' इति पुरोडाशस्य पुरोनुवाक्या । 'प्रचर्षणीभ्यः' इति याज्या । 'आवृत्रहणा वृत्रहाभिः' इति हविषः पुरोनुवाक्या । 'गीर्भिर्विप्रः प्रमातिम्' इति याज्या । एतच्चोभयं पाशुकहौत्रे व्याख्यास्यते ॥

[2]अथ "ब्राह्मणस्पत्यं तूवरमालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—ब्रह्मणो मन्त्रजातस्य पतिः पालकः कश्चिद्देवः, हे ब्रह्मणस्पते त्वमस्य अस्माभिः पठ्यमानस्य सूक्तस्य यन्ता नियामकः, अतो बोधि एतस्य सूक्तस्य तात्पर्यं बुध्यस्व । ततस्तनयं च त्वत्पुत्रसमानं च मां जिन्व प्रीणय । देवा युष्मदादयो विश्वमवन्तीति यदस्ति तद्भद्रं कल्याणम्, अतो रक्षार्थं सुवीराः शोभनापत्ययुक्ता वयं विदथे यज्ञे बृहत्प्रौढं स्तोत्रं वदेम ॥

[3]अथ वपाया याज्यामाह—स ईं स एव ब्रह्मणस्पतिः गोधायसं गोर्भूमेर्धारकं प्रतिपक्षिणं राजानं व्यतर्दत् विशेषेण हिंसितवान् । कैः सहितः? सखिभिः स्नेहयुक्तैः । कीदृशैः सखिभिः? सत्येभिः

षभिर्वराहैः ॥ ३१ ॥ घर्मस्वेदेभिर्द्रविणं व्यानट् । [4]ब्रह्मणस्पतेरभवद्यथा वशम् । सत्यो मन्युर्महिकर्मा करिष्यतः । यो गा उदाजत्स दिवे वि चा-

सत्यवादिभिः शुचद्भिः शुद्धियुक्तैः धनसैः हविर्लक्षणस्य धनस्य दातृभिः । इदृशै ऋत्विग्भिः पूजितो ब्रह्मणस्पतिर्विरोधिनो विनाशयतीत्यर्थः । न केवलमनिष्टं निवारयति किंत्विष्टमपि प्रापयति । कथमिति तदुच्यते—अयं ब्रह्मणस्पतिर्वृषभिः वर्षणशीलैः घर्मस्वेदेभिः घर्मनिमित्तस्वेदयुक्तपुरुषसदृशैः वराहैर्मेघैर्द्रविणं सस्यनिष्पत्तिरूपं धनं व्यानट् विशेषेण व्याप्तवान् । वारिवाहशब्दस्य वर्णव्यत्ययेन वराह इति प्रयोगः । यथा घर्मसन्तप्ताः पुरुषाः स्विद्यन्ति तथा मेघदेहा ब्रह्मणस्पतिना प्रेरिता जलं स्रावयन्तीत्यर्थः ॥

[4] अथ पुरोडाशस्य पुरोनुवाक्यामाह—अस्य ब्रह्मणस्पतेः सर्वं जगत् यथा वशमभवत् येन प्रकारेणायमिच्छति तथैव प्रवर्तते । महिकर्मा जगन्नियमनरूपं महान्तं व्यापारं करिष्यतो ब्रह्मणस्पतेर्मन्युः सत्यः अवितथः कोपः, तस्मादेतदिच्छानुसारेण जगत्प्रवर्तते । जगत एतदधीनत्वमेव स्पष्टीक्रियते—गोशब्दोऽत्र जलवाची । य आदित्यो गा उदाजत् घर्मकाले जलानि स्वरश्मिभिर्भूम्या ऊर्ध्वं स्वीकृतवान् स आदित्यः पुनरपि दिवे दिवस्सकाशाद्व्यभजत् विशेषेण विभागं कृत्वा वृष्टिकाले जलं प्रेरितवान् । योऽयं घर्मकाले जलस्वीकारः, यश्च वृष्टिकाले पुनरपि जलस्य परित्याग एतत्सर्वं जगद्व्यवहारस्योपलक्षणम् । ब्रह्मणस्पतेरीदृशी रीतिर्महीव जगन्नियमनप्रकारो महानेष भूत्वा शवसा तदीयबलेन पृथक्सरत् बहुधा प्रवर्तते ॥

भजत् । म॒हीव॒ री॒तिश्शव॑सा सर॒त्पृथ॑क् । [5]इन्धा॑नो अ॒ग्निं व॑नवद्वनुष्य॒तः । कृ॒तब्र॑ह्मा शूशुवद्रा॒तह॑व्य॒ इत् । जा॒तेन॑ जा॒तमति॒ स॒त्प्रसृ॑ꣳसते । यं य॒ं युजं॑ कृणु॒ते ब्रह्म॑ण॒स्पतिः॑ । [6]ब्रह्म॑णस्पते सु॒यम॑स्य वि॒श्वहा॑ ॥ ३२ ॥ रा॒यस्स्या॑म र॒थ्यो॑ विव॑स्वतः । वी॒रेषु॑ वी॒राꣳ उप॑पृङ्ग्धि न॒स्त्वम् । यदीशा॑नो

[5]अथ पुरोडाशस्य याज्यामाह—ब्रह्मणस्पतिर्देवः यं यं यजमानं युजं कृणुते कर्मानुष्ठानयुक्तं कुरुते, असावसौ यजमानोऽग्निमिन्धानः प्रदीपयन् वनुष्यतः स्वात्मानं हिंसिष्यतः शत्रून् वनवद्वनुयात् प्रतिहिंस्यात् । स च यजमानः कृतब्रह्मा संस्कृतमन्त्रो रातहव्य इत् दत्तहविष्क एव भूत्वा शूशुवत् अतिशयेन वर्धते । अयं यजमानः सृत् प्रसृतं जातं वैरिणां जन्म जातेन स्वकीयेन जन्मनाऽतिप्रसृंसतेऽतिशयेन प्रस्रंसयति अधःकरोतीत्यर्थः ॥

[6]अथ हविषः पुरोनुवाक्यामाह—हे ब्रह्मणस्पते सुयमस्य सुष्ठु नियामकस्य विवस्वतः शत्रून्विनाशयतस्तव प्रसादाद्विश्वहा सर्वेष्वहस्सु रायो धनयुक्ता रथ्यो रथयुक्ताः स्याम । त्वं तु नः अस्मदीयेषु वीरेषु पुत्रेषु वीरान् परकीयान् पुत्रानुपपृङ्ग्धि उपक्षीणत्वेन संपृक्तान्कुरु । यत् यदा ईशानोऽस्मत्स्वामी त्वं ब्रह्मणा मन्त्रेण युक्तं मे हवं मदीयं हविः वेषि प्राप्नोषि तदेवत्सर्वं कुर्विति पूर्वत्रान्वयः ॥

ब्रह्म॑णा वेषि मे॒ हव॑म् । [7]स इज्जने॑न॒ स वि॒शा स जन्म॑ना । स पु॒त्रैर्वाजं॑ भरते॒ धना॒ नृभिः॑ । दे॒वानां॒ यः पि॒तर॑मा॒विवा॑सति । श्र॒द्धाम॑ना ह॒विषा॒ ब्रह्म॑णस्पतिम् । [8]यास्ते॑ पूषन्ना॒वो॑ अ॒न्तः । शु॒क्रं ते॑ अ॒न्यत्पू॒षेमा आशाः॑ । [9]प्रप॑थे प॒थाम॑जनिष्ट पू-

[7] अथ हविषो याज्यामाह—योऽयं यजमानः देवानां पितरं पालकं ब्रह्मणस्पतिं श्रद्धामनाः श्रद्धायुक्तेन मनसा ध्यायन्, हविषा दीयमानेन आविवासति सर्वतो विशेषेणाच्छादयति प्रभूतं हविर्ददातीत्यर्थः । स इत् स एव यजमानो जनेन स्वकीयेन सह वाजं भरते अन्नं पोषयति । स इज्जनेनेत्युक्तमेव प्रपञ्चयति—स विशा स यजमानः करप्रदया प्रजया सह वाजं भरते । स जन्मना स यजमानो जातेन सहोदरेण युक्तो वाजं भरते । तथा स यजमानः पुत्रैस्सह वाजं भरते । तथा स यजमानो नृभिरन्यैर्मनुष्यैस्सह धना भरते मणिमुक्तादीनि धनानि संपादयति ॥

[8] अथ "पौष्णꣳ श्याममालभेतान्नकामः" इत्यस्य पशोः सूक्ते तिसृणामृचां प्रतीकानि दर्शयति—'यास्ते पूषन्नावो अन्तः' इत्येषा वपायाः पुरोनुवाक्या । सा च 'यज्ञो राये' इत्यनुवाके व्याख्याता । 'शुक्रं ते अन्यद्यजतं ते अन्यत्' इति वपाया याज्या । सा च 'अग्ने यं यज्ञम्' इत्यत्र व्याख्याता । 'पूषेमा आशाः' इति पुरोडाशस्य पुरोनुवाक्या । सा च 'जुष्टो दमूनाः' इत्यनुवाके व्याख्याता ॥

[9] अथ पुरोडाशस्य याज्यामाह—पूषा पोषकोऽयमादित्यः पथां

षा ॥३३॥ प्रपथे दिवः प्रपथे पृथिव्याः। उभे अभि प्रियतमे सधस्थे। आ च परा च चरति प्रजानन्। [10]पूषा सुबन्धुर्दिव आपृथिव्याः। इडस्पतिर्मघवा दस्मवर्चाः। तं देवासो अददुस्सूर्यायै। कामेन कृतं तवसꣳ स्वश्चम्। [11]अजाश्वः पशुपा वाजव-

अन्तरिक्षवर्तिनां मार्गाणां मध्ये प्रपथे प्रकृष्टमार्गे अजनिष्ट अवस्थितः। तथा दिवो द्युलोकस्य संबन्धिनि प्रपथे प्रकृष्टमार्गे अजनिष्ट। तथा हि पृथिव्याः संबन्धिनि प्रपथे अजनिष्ट। प्रियतमे अतिशयेन प्रीतिमत्यौ सधस्थे परस्परं सहैवावस्थिते उभे द्यावापृथिव्यावभिलक्ष्यायं पूषा प्रजानन् यजमानेन कृतं कर्म तत्फलं च प्रकर्षेण विद्वान् आचरति च पराचरति च आगच्छति पुनर्गच्छति च। यजमानकृतस्य कर्मणः साक्षी भूत्वा लोकयोरुभयोरपि गमनागमने करोतीत्यर्थः॥

[10]अथ हविषः पुरोनुवाक्यामाह—अयं पूषा दिवः द्युलोकवर्तिनो जनस्य बन्धुः। आपृथिव्याः पृथिवीलोकवर्तिनश्च जनस्य बन्धुः। इडस्पतिः अन्नस्य पालकः। मघवा धनवान्। दस्मवर्चाः दर्शनीयतेजाः। तं पूषणं देवासः इन्द्रादयस्सर्वे देवाः सूर्यायै विवाहदेवतायै अददुः दत्तवन्तः। सूर्या च देवता विवाहप्रकरणे—"सूर्या यः प्रत्यक्षम्" इत्यादिमन्त्रेषु प्रसिद्धा। कीदृशं पूषणं? कामेन कृतं भोगेच्छया प्रेरितं, तवसं महान्तं, स्वश्चं शोभनगतिम्॥

[11]अथ हविषो याज्यामाह—यः पूषा सोऽयं अजाश्वः अश्वस्थाने रथे बध्यत इत्यर्थः। पशुपाः पशूनां पालयिता। वस्त्यं गृहम्,

स्त्यः । धियंजिन्वो विश्वे भुवने अर्पितः । अष्ट्रां पूषा शिथिरामुद्वरीवृजत् ॥ ३४ ॥ संचक्षाणो भुवना देव ईयते । [12]शुची वो हव्या मरुतश्शुचीनाम् । शुचिꣳ हिनोम्यध्वरꣳ शुचिभ्यः । ऋतेन सत्यमृतसाप आयन् । शुचिजन्मानश्शुचयः पा-

---

वाजेनान्नेन संपूर्णं गृहं यस्यासौ वाजवस्त्यः । धियं प्राणिनां बुद्धिं जिन्वति प्रीणयतीति धियंजिन्वः । विश्वे भुवने सर्वस्मिन् लोकेऽर्पितोऽवस्थितः । तादृशः पूषा अष्ट्रां स्वहस्तेऽवस्थितामायुधविशेषरूपामारां शिथिरां शिथिलां कृत्वा उद्वरीवृजत् उद्धृत्य वर्जितवान् परित्यक्तवान् । मदमत्तानां गजानां निवारिका येयं दीर्घदण्डा सेयमारा । सा च पूष्णो हस्ते वर्तते । तथा च बह्वृचा आमनन्ति —“यां पूषन्ब्रह्मचोदनीमारां बिभर्ष्याघृणः” इति । ‘या ते अष्ट्रा’ इति मन्त्रान्तरे समाम्नानादारैवाष्ट्रा अस्मदनुग्रहार्थं भयहेतुमारां वर्जितवानित्यर्थः । स देवः पूषा भुवना संचक्षाणो लोकान्सम्यक्प्रकाशयन्नीयते चेष्टते ॥

[12]अथ “मारुतं पृश्निमालभेतान्नकामः” इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—हे मरुतः शुचीनां शुद्धानां वो युष्माकं शुची हव्या शुद्धानि हवींषि हिनोमि प्रापयामीत्यर्थः । तथा शुचिभ्यो मरुद्भ्यः शुचिं शुद्धमध्वरं हिंसारहितं कर्म हिनोमि संपादयामि । ऋतसापः यज्ञसमवायिनो मरुतः ऋतेन यज्ञेन सत्यमवितथं फलमायन् प्रापितवन्तः । कीदृशा मरुतः? शुचिज-

वका: । [13]प्र चित्रमर्कं गृणते तुराय । मारुताय स्वतवसे भरध्वम् । ये सहांसि सहसा सहन्ते । रेजते अग्ने पृथिवी मखेभ्यः । [14]अंसेष्वा मरुतः खादयो वः ॥३५॥ वक्षस्सु रुक्मा उपशिश्रियाणाः । वि विद्युतो न वृष्टिभी रुचानाः । अनु

न्मानः शुद्धेन जन्मना युक्ताः । शुचयः आचरणेनापि शुद्धाः । पावका इतरेषां शोधकाः ॥

[13]अथ वपाया याज्यामाह—हे ऋत्विजः मारुताय मरुतां संघाताय अर्कमर्चनं प्रभरध्वं प्रकर्षेण संपादयत । कीदृशमर्कं? चित्रं नानाविधम् । कीदृशाय मारुताय? गृणते अस्मद्धितं ब्रुवते । तुराय सेनायुक्ताय । स्वतवसे स्वतस्सिद्धबलयुक्ताय । ये मरुतः सहांसि परकीयबलानि सहसा स्वकीयबलेन सहन्तेऽभिभवन्ति । हेऽग्ने मखेभ्यो यागस्वामिभ्यस्तेभ्यो मरुद्भ्यः पृथिवी रेजते कम्पते, अतस्तच्छान्त्यर्थं हविः प्रदातव्यमित्यभिप्रायः ॥

[14]अथ पुरोडाशस्य पुरोनुवाक्यामाह—हे मरुतः वो युष्माकमंसेषु खादयः शत्रून्खादितुं प्रहर्तुं समर्था आयुधविशेषा आ सर्वत आरूढाः । वक्षस्सु त्वदीयेषु रुक्मा रत्नाभरणविशेषा उपशिश्रियाणा उपेत्याश्रित्य वर्तन्ते । विद्युतो न यथा विद्युत्संपाता रोचन्ते तद्वद्यूयं वृष्टिभिः आयुधविशेषैर्वृष्टयाख्यैर्विशेषेण रोचमानाः स्थिताः । तथा च मन्त्रान्तरम्—"यस्क्रीडथ मरुत ऋष्टिमन्तः" इति । ऋष्टिविशिष्टत्वाद्वृष्टय इत्युच्यन्ते । तथा स्वकीयैरायुधैः स्वधां परकीयमन्नं जग्ध्वा अनुयच्छमानाः अनुदिनमस्मभ्यं ददतोऽवस्थिताः ॥

स्वधामायुधैर्यच्छमानाः । [15]या वश्शर्म शशमानाय सन्ति । त्रिधातूनि दाशुषे यच्छताधि । अस्मभ्यं तानि मरुतो वियन्त । रयिं नो धत्त वृषणस्सुवीरम् । [16]इमे तुरं मरुतो रामयन्ति । इमे सहस्सहस आनमन्ति । इमे शश्सं वनुष्यतो नि-

[15]अथ पुरोडाशस्य याज्यामाह—हे मरुतः वो युष्माकं या शर्म यानि शरणानि गृहाणि शशमानाय सन्ति शंसनं कुर्वते यजमानाय दातुं संपादितानि तानि गृहाणि, त्रिधातूनि अशनं पानं खादनमित्येतानि त्रीणि धारयन्तीति त्रिधातूनि । तदेतत्त्रयमन्यत्राम्नायते—"त्रेधा विहितं वा इदमन्नमशनं पानं खाद्यं" इति । एतैस्त्रिविधैरन्नैरुपेतानि गृहाणि दाशुषे हविर्दत्तवते यजमानाय अधियच्छत आधिक्येन धत्त । हे मरुतोऽस्मभ्यमपि तानि गृहाणि वियन्त विशेषेण यच्छत । वृषणः कामानां वर्षितारो यूयं रयिं धनं सुवीरं सुष्ठुवीरपुत्रयुतं धत्त संपादयत ॥

[16]अथ हविषः पुरोनुवाक्यामाह—इमे मरुतः तुरं तूर्णं रामयन्ति अस्मान् क्रीडयन्ति । इमे मरुतः सहसो बलवतः शत्रोः सहो बलमानमन्ति आनतं कुर्वन्ति विनाशयन्तीत्यर्थः । इमे मरुतः शंसं शंसितारं यजमानं वनुष्यतो हिंसितुः शत्रोः सकाशान्निपान्ति नितरां रक्षन्ति । अररुषे हविष्प्रदानमकुर्वते नास्तिकाय गुरुद्वेषो महान्तं द्वेषं दधन्ति कुर्वन्ति ॥

पान्ति ॥३६॥गुरुद्वेषो अररुषे दधन्ति । [17]अरा इवे-
दचरमा अहेव । प्र प्रजायन्ते अकवा महोभिः ।
पृश्नेः पुत्रा उपमासो रभिष्ठाः । स्वया मत्या म-
रुतस्संमिमिक्षुः । [18]अनु ते दायि मह इन्द्रियाय ।
सत्रा ते विश्वमनु वृत्रहत्ये । अनु क्षत्रमनु सहो

[17]अथ हविषो याज्यामाह—अरा इवेत् यथा रथचक्रस्याराः सर्वतो वर्तमाना अचरमाः प्रथमचरमभावरहितास्तथैवैते मरुतः सर्वे सहोत्पन्नत्वात्प्रथमचरमभावरहिताः । अहेव यथा वाऽहानि षष्टि घटिकात्मकानि न्यूनाधिकभावरहितानि तथैवैते मरुतश्चलनस्वभावेन समानत्वादुत्तमाधमभावरहिताः । ते च मरुतः अकवा अकुत्सिताः महोभिः स्वकीयैर्माहात्म्यैः प्र प्रजायन्ते अतिशयेन प्रकृष्टाः संपद्यन्ते । ते च मरुतः पृश्नेः पुत्रा गोरूपायाः पृश्निदेवताया अपत्यानि । उपमासः सर्वेषामुत्तमवस्तूनामुपमारूपा एव । रभिष्ठाः अतिशयेन वेगेन युक्ताः । ते च मरुतः स्वया मत्या स्वकीयया बुद्ध्या संमिमिक्षुः सम्यङ्मेहनं वृष्टिजलं दत्तवन्तः ॥

[18]अथ "ऐन्द्रमरुणमालभेतेन्द्रियकामः" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—हे इन्द्र ते तव इन्द्रियाभिवृद्ध्यर्थं महे महती पूजा अनुदायि अनुक्रमेण दत्ता । अथवा महे महत इन्द्रियाय यदनुकूलं तद्दत्तम् । यथा वृत्रहत्ये वृत्रवधे सति ते तुभ्यं सत्रा साकं सर्वैर्देवैर्मीलित्वा विश्वमनुदत्तम् । यदा वृत्रवधं कृतवानसि तदा तव विश्वस्वामित्वं सर्वैर्देवैरङ्गीकृतमित्यर्थः । हे यजत्र पूजार्ह इन्द्र क्षत्रं

यजत्र । इन्द्र देवेभिरनु ते नृषह्ये ।[19] य इन्द्र शुष्मो मघवन्ते अस्ति ॥ ३७॥ शिक्षा सखिभ्यः पुरुहूत नृभ्यः । त्वꣳ हि दृढा मघवन्विचेताः । अपावृधि परिवृतिं न राधः । [20] इन्द्रो राजा जगतश्चर्षणीनाम् । अधिक्षमि विषुरूपं यदस्ति । ततो ददातु दाशुषे वसूनि । चोदद्राध उपस्तुतश्चिदर्वाक् ।

क्षत्रियजातिः अनुदत्ता सर्वक्षत्रियस्वामित्वं तुभ्यं दत्तमित्यर्थः । तथा सहो बलमनुदत्तम् । नृषह्ये मनुष्याणामभिभवे प्राप्ते देवेभिस्ते तुभ्यमनुदत्तम्, तद्रक्षणमिति शेषः ॥

[19] अथ वपाया याज्यामाह—हे मघवन् धनवन्निन्द्र ते तव यः शुष्मो बलमस्ति तत् हे पुरुहूत सखिभ्यः त्वयि स्निग्धेभ्यो नृभ्यो मनुष्येभ्यो यजमानेभ्यः शिक्षा शिक्षितं शुष्मं बलं देहि । हे मघवन्निन्द्र त्वं हि यस्मात्कारणात् दृढा बलाधिक्यादत्यन्तदृढो विचेता विविधजगदभिज्ञश्च तस्मात्कारणात् राधः अन्नमपावृधि अभिवर्धय । परिवृतिं न परिवारमप्यभिवर्धय ॥

[20] अथ पुरोडाशस्य पुरोनुवाक्यामाह—अयमिन्द्रः कृत्स्नस्य जगतो विशेषतश्चर्षणीनां मनुष्याणां च राजा, अधिक्षमि क्षमाया भूमेरुपरि विषुरूपं नानाप्रकारं यद्धनमस्ति ततः सकाशाद्दाशुषे हविर्दत्तवते यजमानाय वसून्यपेक्षितानि धनानि ददातु । उपस्तुतो यजमानेन स्तूयमानस्सन्नर्वागभिमुखो भूत्वा राधश्चित् अन्नमपि चोदत् प्रेरयतु ददात्वित्यर्थः ॥

[21] तमु॑ ष्टुहि॒ यो अ॒भिभू॑त्योजाः । व॒न्वन्नवा॑तः पुरुहू॒त इन्द्रः॑ । अषा॑ढमु॒ग्रꣳ सह॑मानमा॒भिः ॥३८॥ गी॒र्भिर्व॑र्ध वृष॒भं च॑र्षणी॒नाम् । [2] स्थूरस्य॑ रा॒यो बृ॑ह॒तो य ईशे॑ । तमु॑ ष्टवाम वि॒दथे॒ष्विन्द्र॑म् । यो वा॒युना॒ जय॑ति॒ गोम॑तीषु । प्र धृ॑ष्णु॒या न॑यति॒ वस्यो॒ अच्छ॑ । [23] आ ते॒ शुष्मो॑ वृष॒भ ए॑तु प॒श्चात् । ओत्त॒रा-

[21] अथ पुरोडाशस्य याज्यामाह—शत्रूणामभिभूतौ शक्तमोजो बलं यस्यासावभिभूत्योजाः तादृशो य इन्द्रोऽस्ति तमु तमेवेन्द्रं हे वागिन्द्रिय स्तुहि । अयमिन्द्रः पुरुहूतो बहुभिर्यजमानैराहूतः । अवातो वायुरहितो निश्चल इत्यर्थः । तादृशो वन्वन् अभिमतप्रदानं कुर्वन्वर्तते । अषाढं अन्यैरभिभवितुमशक्यम् । उग्रं तीव्रम् । सहमानं शत्रूनभिभवन्तम् । चर्षणीनां वृषभं मनुष्याणां कामाभिवर्षणहेतुम् । आभिर्गीर्भिर्वेदोक्ताभिः स्तुतिभिः वर्ध हे वागिन्द्रिय वर्धस्व ॥

[22] अथ हविषः पुरोनुवाक्यामाह—य इन्द्रः स्थूरस्य स्थूलस्य बहुलस्येत्यर्थः । बृहतो महतोऽनर्घस्येत्यर्थः । तादृशस्य रायो धनस्य ईशे स्वामी भवति । तमु तमेवेन्द्रं विदथेषु यज्ञेषु स्तवाम नानाविधैः स्तोत्रैः स्तुतिं करवाम । य इन्द्रः वायुना सहितो गोमतीषु गोमहिषादियुक्तासु परसेनासु जयति जयं प्राप्नोति । धृष्णुया स्वकीयेन धृष्णुत्वेन प्रागल्भ्येन वस्यो वसीयसो धनवत्तमान् पुत्रादीनच्छ अस्मदाभिमुख्येन प्रकर्षेण नयति ।

[23] अथ हविषो याज्यामाह—हे इन्द्र वृषभः श्रेष्ठस्ते तव शुष्मो बलं पश्चात् अस्मत्तः पश्चिमभागे एतु आगच्छतु । तथैवोत्तरात्

दधराग पुरस्तात् । आ विश्वतो अभि समेत्वर्वाङ् । इन्द्रद्युम्नꣳ सुवर्वद्धेह्यस्मे ॥ ३१ ॥

वराहैर्विश्वहाऽजनिष्ट पूषोद्दरीवृजत्खादयो वः पान्त्यस्त्याभिर्नव च ॥५॥

[1]आ देवो यातु सविता सुरत्नः । अन्तरिक्षप्रा

उत्तरभागेऽप्यागच्छतु । अधराक् अधोभागेऽप्यागच्छतु । पुरस्तात् पूर्वभागेऽप्यागच्छतु । विश्वतः सर्वेषु प्रदेशेषु अभि अस्मानभिलक्ष्य अर्वाङ् समीपवर्ती समेतु सम्यक्प्राप्नोतु । हे इन्द्र सुवर्वत् स्वर्गयुक्तं द्युम्नं धनं अस्मे धेहि अस्मासु संपादय ॥

अत्र विनियोगसंग्रहः—

पुनरुत्सृष्ट ऐन्द्राग्ने शुचिं नु स्तोमसूक्तकम् ।
ब्रह्मणस्पत इत्येतद्ब्राह्मणस्पत्यतूपरे ॥१॥
यास्ते पूषन्निति त्वन्नप्रदे श्यामे हि पौष्णके ।
शुची व इति पृश्नौ स्यान्मारुतेऽन्नस्य दातरि ॥
अनु ते दाय्यैन्द्रके स्यादरुणे हीन्द्रियप्रदे ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके अष्टमप्रपाठके पञ्चमोऽनुवाकः.

[1] पञ्चम ऐन्द्राग्नपश्वादीनां सूक्तान्यभिहितानि । षष्ठे सावित्रादिपशूनां सूक्तान्यभिधीयन्ते । तत्र " सावित्रमुपध्वस्तमालभेत " इत्यस्य

वह॑मानो॒ अश्वैः॑ । हस्ते॒ दधा॑नो॒ नर्या॑ पु॒रूणि॑ । नि॒वे॒शय॑न् च प्रसु॒वन् च॒ भूम॑ । [2]अ॒भीवृ॑तं॒ कृश॑नैर्वि॒श्वरू॑पम् । हिर॑ण्यशम्यं यज॒तो बृ॒हन्त॑म् । आस्था॒द्रथ॑ꣳ सवि॒ता चि॒त्रभा॑नुः । कृ॒ष्णा रजा॑ꣳसि॒

पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—सविता देवः आयातु आगच्छतु। कीदृशः? सुरत्नः शोभनै रत्नैर्युक्तः। अन्तरिक्षप्राः स्वकीयै रश्मिभिरन्तरिक्षं पूरयिता। अश्वैर्वहमानः स्वकीयैरश्वै रथं वाहयन्। नर्या नरेभ्यो हितानि पूरूणि बहूनि रत्नानि यजमानाय दातुं हस्ते दधानः। भूम बहुलं जगत्प्राणिजातं निवेशयंश्च रात्रौ स्वस्वगृहेऽव स्थापयन्नपि प्रसुवंश्च दिवसे स्वस्वव्यापारेषु प्रेरयन्नपि वर्तत इति शेषः॥

[2]अथ वपाया याज्यामाह—अयं सविता रथमास्थात् आरूढवान्। कीदृशं रथं? कृशनैरभीवृतं कृशनशब्दः सुवर्णवाची सुवर्णैरभितोऽलंकृतमित्यर्थः। विश्वरूपं अनेकैराकारैरुपेतम्। हिरण्यशम्यं युगच्छिद्रे प्रक्षेपणीयः काष्ठविशेषः शम्या सुवर्णमयीभ्यां शम्याभ्यामुपेतम्। बृहन्तं अतिप्रौढम्। कीदृशः सविता? यजतो यष्टव्यः। चित्रभानुः बहुविधरश्मियुक्तः। तविषीं स्वकीयं बलं प्राप्य कृष्णा रजांसि दधानः काचित्कृष्णानि रूपाणि काचिद्रक्तानि रूपाणि धारयन् वर्तते। एतद्रूपान्तराणामप्युपलक्षणम्। अत एव छन्दोगाः—"असौ वा आदित्यो देवमधु" इत्येतस्यां मधुविद्यायां—'यदेतदादित्यस्य रोहितं रूपं यदेतदादित्यस्य शुक्लं रूपं यदेतदादित्यस्य कृष्णं रूपम्' इति बहुविधानि रूपाण्यामनन्ति॥

तविषीं दधानः । [3]सघा नो देवस्सविता सवाय । आसाविषद्वसुपतिर्वसूनि ॥ ४० ॥ विश्रयमाणो अमतिमुरूचीम् । मर्तभोजनमध रासते न । [4]वि जनाञ्छ्यावाश्शितिपादो अख्यन् । रथꣳ हिरण्यप्रउगं वहन्तः । शश्वद्विशस्सवितुर्दैव्यस्य । उपस्थे विश्वा भुवनानि तस्थुः । [5]वि सुपर्णो अन्तरिक्षाण्यख्यत् । गभीरवेपा असुरस्सुनीथः ।

[3]अथ पुरोडाशस्य पुरोनुवाक्यामाह—सघा स एव सविता देवो वसुपतिः धनपतिर्भूत्वा नोऽस्माकं सवाय कर्मानुष्ठानाय वसूनि धनानि आसाविषत् सर्वतः संपादितवान्। किं कुर्वन्–उरूचीं विस्तीर्णां गतिं अमतिमस्मदीयां मन्दप्रज्ञां विश्रयमाणो विप्रतिषेधन्। अथानन्तरं मर्तभोजनं मनुष्यैर्भोक्तुं योग्यमन्नं न रासतेऽस्मभ्यं ददाति॥

[4]अथ पुरोडाशस्य याज्यामाह—श्यावाः श्यामवर्णाः शितिपादः श्वेतैः पादैर्युक्ताः सवितुरश्वा जनान् जन्तून् व्यख्यन् विशेषेण ज्ञापितवन्तः। अश्वेषु गच्छत्सु हि आदित्यो गच्छतीत्येवं जानन्ति। कीदृशा अश्वाः? रथं वहन्तः। कीदृशं रथं? हिरण्यप्रउगम्, ईषाग्रयोर्योगः प्रउग इत्युच्यते, सुवर्णमयः प्रउगो यस्य रथस्य सोऽयं हिरण्यप्रउगस्तम्। दैव्यस्य देवेभ्यो हितस्य सवितुरुपस्थे उत्सङ्गे विशः प्राच्याद्या विश्वा भुवनानि पृथिव्यादयः सर्वे लोकाश्च शश्वत्तस्थुर्निरन्तरं तिष्ठन्ति। सवितृप्रकाशमध्ये वर्तमानमेव तदुत्सङ्गावस्थानम्॥

[5]अथ हविषः पुरोनुवाक्यामाह—सुपर्णः पक्षिसदृश आदित्यः। आकाशगामित्वात्पक्षिसादृश्यम्। तादृश आदित्यः अन्तरिक्षाणि आ-

क्वेदानी॑ᳪं सूर्य॑ः कश्चि॑केत । क॒त॒मां द्याᳪं॑ र॒श्मि- र॒स्याततान ॥ ४१ ॥ [6]भग॒ं धियं॑ वा॒जय॑न्त॒ः पुर॑न्धिम् । नरा॒शᳪंसो॒ ग्नास्पति॑र्नो अव्यात् । आऽये वा॒मस्य॑ संग॒थे र॒यी॒णाम् । प्रि॒या दे॒वस्य॑

काशप्रदेशविशेषान् व्यख्यत् विशेषेण प्रकाशितवान्। पृथिव्यन्तरिक्षद्युलोकान्सर्वान्प्रकाशयतीत्यर्थः। कीदृशः सविता? गभीरवेपाः, वेपशब्दः कर्मवाची, उदयास्तमयलक्षणगभीरकर्मेत्यर्थः। असुरः प्राणप्रदः। अतएवान्यत्राम्नायते—"योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति" इति। सुनीथः प्रशस्तः। एवंभूत आदित्यः इदानीं रात्रौ क्व प्रदेशे वर्तत इत्येवं कश्चिकेत को वा जानाति। अस्य सूर्यस्य रश्मिः कतमां द्यामाततान कं नामाकाशभागं व्याप्नोतीति को वा जानाति। रात्रौ सूर्यस्य तद्रश्मेश्चावस्थानदेशस्य बुद्धिमद्भिरपि दुर्विज्ञेयत्वादयमचिन्त्यमहिमेत्यर्थः॥

[6]अथ हविषो याज्यामाह—भगं सौभाग्यं धियं सत्कर्मविषयां प्रज्ञां सवितुः प्रसादात् वाजयन्तः प्राप्नुवन्तो वर्तामहे। नोऽस्माकं पुरन्धिं बहुविषयां प्रज्ञामयं देवः अव्यात् रक्षतात्। कीदृशोऽयं? नराशंसो नरैः शंसनीयः। ग्नास्पतिः छन्दसां पालयिता। "छन्दाᳪंसि वै ग्नाः" इति श्रुत्यन्तरात्। देवपत्न्यो वा ग्नाशब्देनाभिधीयन्ते "उत ग्नाव्यियन्तु देवपत्नी" इति मन्त्रवर्णात्। अयशब्द एतव्यं प्राप्तः व्यमाचष्टे। आसमन्तात् अये प्राप्तव्ये रयीणां धनानां संगथे संगमे निमित्तभूते सति वामस्य सर्वेषां वननीयस्य सवितुर्देवस्य वयं प्रियाः स्याम॥

सवितुस्स्याम । [7]आ नो विश्वे अस्क्रा गमन्तु देवाः । मित्रो अर्यमा वरुणस्सजोषाः । भुवन्यथा नो विश्वे वृधासः । करन्थ्सुषाहा विथुरं न शवः । [8]शं नो देवा विश्वदेवा भवन्तु । शꣳ सरस्वती सह धीभिरस्तु ॥ ४२ ॥ शमभिषाचश्शमु रातिषाचः । शं नो दिव्याः पार्थिवाश्शं नो

[7]अथ "वैश्वदेवं बहुरूपमालभेतान्नकामः" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—मित्रः अर्यमा वरुण इत्याद्याः सजोषाः समान प्रीतयो विश्वे सर्वे देवा अस्क्रा आभिमुख्येन कर्तारः सन्तो नोऽस्मान्प्रत्यागमन्तु आगच्छन्तु । विश्वे देवा नो वृधासः अस्मान्वर्धयितारो यथा भुवन् भवन्ति शवः अस्मदीयं बलं सुषाहा सुषहं परेषामभिभवितृ विथुरं न अचलितं यथा करन् कुर्वन्ति तथाऽस्मानागच्छन्त्विति पूर्वत्रान्वयः ॥

[8]अथ वपाया याज्यामाह—विश्वदेवशब्दो वसुरुद्रादिशब्दवद्गणविशेषवाची । विश्वदेवाख्या देवा नोऽस्माकं शं सुखहेतवो भवन्तु । सरस्वती देवी धीभिः बुद्ध्यभिमानिनीभिर्देवताभिः सह शं सुखहेतुरस्तु । अभितः सचन्ते समवयन्तीत्यभिषाचो बान्धवाः ते शं सुखहेतवो भवन्तु । रातिर्मित्रं तेन सचन्त इति रातिषाचो मित्रद्वारा संबध्यमानाः पुरुषा उ तेऽपि शं सुखहेतवो भवन्तु । दिवि भवा दिव्याः पृथिव्यां भवाः पार्थिवा अपोऽन्तरिक्षं तत्र भवा अप्याः "ये देवा दिव्येकादश स्थ" इत्यत्र पठिता लोकत्रयवर्तिनो देवाः शं सुखहेतवो भवन्तु ॥

अप्र्याः । [9]ये स॑वि॒तुस्स॒त्यस॑वस्य॒ विश्वे॑ । मि॒त्र॑स्य॑ व्र॒ते वरु॑णस्य दे॒वाः । ते सौभ॑गं वी॒रव॒द्गोम॒दप्नः॑ । दधा॑तन॒ द्रवि॑णं चि॒त्रम॒स्मे । [10]अग्ने॑ या॒हि दू॒त्यं॑ वारि॑षेण्यः । दे॒वाꣳ अच्छा॑ ब्रह्म॒कृता॑ ग॒णेन॑ । सर॑स्वतीं म॒रुतो॑ अ॒श्विना॒पः । यक्षि॑ दे॒वान्र॑त्न॒धेया॑य॒ विश्वा॑न् ॥ ४३ ॥ [11]द्यौः पि॑तः पृथि॑वि॒ मा॑त॒रध्रु॑क् । अग्ने॑ भ्रातर्वसवो मृ॒डता॑ नः । विश्वे॑

[9]अथ पुरोडाशस्य पुरोनुवाक्यमाह—ये विश्वे देवाः सत्यसवस्य सत्यप्रेरणस्य सवितुः मित्रस्य वरुणस्य च संबन्धिनि व्रते कर्मणि समागतास्ते सर्वे यूयं सौभगं सौभाग्यं अप्नः कर्मविशेषं द्राविणं धनं च अस्मे दधातन, अस्मासु संपादयत । कीदृशं सौभगं? वीरवते बहुभिर्वीरैः पुत्रैर्युक्तम् । गोमत् बहुभिर्गोभिर्युक्तम् । कीदृशं द्रविणं? चित्रं मणिमुक्तादिभेदेन बहुविधम् ॥

[10] अथ पुरोडाशस्य याज्यामाह—हेऽग्ने देवानच्छा देवानभिलक्ष्य दूत्यं याहि दूतकर्म कुरु । वारिषेण्यः मा रीरिषः कार्यविघातेनास्मान्मा हिंसीः । कान्देवानभिलक्ष्येति तदुच्यते—ब्रह्म परिवृढमिदं कर्म करोतीति ब्रह्मकृत्तेन कर्मकारिणा वैश्वदेवगणेन सह सरस्वत्यादीन्देवानभिलक्ष्य दूत्यं कृत्वा रत्नधेयाय रत्नसंपादनाय विश्वान्देवान् यक्षि पूजय ॥

[11] अथ हविषः पुरोनुवाक्यामाह—येयं द्यौस्तद्रूप हे पितस्त्वं अध्रुक् द्रोहरहितः । हे पृथिवि मातः त्वमप्यध्रुक् । हेऽग्ने भ्रातः त्वमप्यध्रुक्

आदित्या आदिते सजोषाः । अस्मभ्यꣳ शर्म बहुलं वियन्त । [12]विश्वे देवाश्शृणुतेमꣳ हवं मे । ये अन्तरिक्षे य उप द्यवि ष्ठ । ये अग्निजिह्वा उत वा यजत्राः । आसद्यास्मिन्बर्हिषि मादयध्वम् । [13]आ वां मित्रावरुणा हव्यजुष्टिम् । नमसा देवाववसाऽऽववृत्याम् ॥ ४४ ॥ अस्माकं ब्रह्म पृत-

हे वसवो यूयमप्यद्रुहः । ते यूयमस्माकं द्रोहमनाचरन्तो नोऽस्मान्मृडत सुखयत । हे विश्वे देवा हे आदित्या हे अदिते यूयं सजोषाः समानप्रीतयोऽस्मभ्यं बहुलं शर्म सुखं वियन्त विशेषेण यच्छत ।

[12]अथ हविषो याज्यामाह—हे विश्वे देवाः मे हवं मदीयमाह्वानं शृणुत । ये यूयमन्तरिक्षे स्थ अन्तारिक्षलोके स्थिताः ये चोप समीपे पृथिव्यां स्थिताः ये च द्यवि दिवि लोके स्थ ये यूयमग्निजिह्वा अग्निद्वारेण हविषः स्वीकर्तारः उत वा अन्येऽपि वा यजत्राः यष्टव्याः ते सर्वेऽप्यस्मिन्बर्हिषि यागे आसद्य उपविश्य मादयध्वं हृप्ता भवत । अस्मानपि हर्षयत ॥

[13]अथ "मैत्रावरुणीं द्विरूपामालभेत" इत्यस्य पशोः सूक्ते पुरोनुवाक्यामाह—मित्रावरुणा हे मित्रावरुणौ देवौ अवसा अस्मद्रक्षणेन निमित्तभूतेन वां युवयोः हव्यजुष्टिं हविषः प्रीतिं नमसा नमस्कारेण सह आववृत्यां पुनः पुनरावर्तयामि । अतो भवत्प्रसादादस्माकं पृतनासु परकीयसेनासु प्राप्तासु ब्रह्म भवदुपदिष्टं मन्त्रजातं सह्याः

नासु सह्याः अस्माकम् । वृष्टिर्दिव्या सुपारा ।
[14]युवं वस्त्राणि पीवसा वसाथे । युवोरच्छिद्रा मन्तवो ह सर्गाः । अवातिरतमनृतानि विश्वा । ऋतेन मित्रावरुणा सचेथे । [15]तथ्सु वां मित्रावरुणा महित्वम् । ईर्मा तस्थुषीरहभिर्दुदुह्रे । वि-

सहतां परकीयसेना अभिभवतु । किं चास्माकं भवत्प्रसादात् दिवि भवा दिव्या वृष्टिः सुपारा सुष्ठु पारयित्री फलं प्रापयन्ती भवतु ॥

[14] अथ वपाया याज्यामाह—हे मित्रावरुणौ पीवसा अतिस्थूलौ युवं युवामुभौ वस्त्राणि बहुविधानि वसाथे आच्छादयतः । युवोः युवयोः मन्तवः मननरूपा अनुग्रहविशेषाः सर्गाः भवद्भिः सृष्टा अच्छिद्राः अच्छिन्नाः निरन्तरं भवदनुग्रहादस्मासु वर्तन्त इत्यर्थः । विश्वा सर्वाण्यनृतानि अस्मदीयापराधरूपाणि अवातिरतं युवां विनाशितवन्तौ । हे मित्रावरुणौ, ऋतेन सत्येन शास्त्रीयमार्गेण सचेथे अस्मान् संयोजयथः ॥

[15] अथ पुरोडाशस्य पुरोनुवाक्यामाह—हे मित्रावरुणौ वां युवयोः तत् महित्वं माहात्म्यं सु अत्यन्तं सुष्ठु वर्तते । किं तन्माहात्म्यमिति तदुच्यते—ईर्मा गमनशीले आदित्ये तस्थुषीः रश्मिद्वारेणावस्थिता अपः अहभिः सर्वेष्वहस्सु दुदुह्रे युवां दुग्धवन्तौ । आदित्यमण्डले रश्मिद्वारा यो जलसंग्रहः पुनरपि संगृहीतस्य यद्वर्षणं तदुभयमाश्चर्यरूपं भवदीयं माहात्म्यम् । स्वयं सरति सर्वदा गच्छतीति स्वसरः आदित्यः तस्य संबन्धिना वृष्टिजलेन धेना धातव्याः पो-

श्वाः पिन्वथ स्वसंरस्य धेनाः। अनु वामेकः पविरावंवर्ति ॥ ४५ ॥ [16] यद्बंहिष्ठं नातिविधे सुदानू। अच्छिद्रꣳ शर्म भुवनस्य गोपा। ततो नो मित्रावरुणाववीष्टम्। सिषासन्तो जीगिवाꣳसः स्याम। [17] आ नो मित्रावरुणा हव्यदातिम्। घृतैर्गव्यूतिमुक्षतमिडाभिः। प्रति वामत्र वरमा ज-

षणीयाः, विश्वाः सर्वाः प्रजाः पिन्वथ प्रीणयथः। अनु वृष्टिकालानन्तरमेव वां युवयोर्मध्य एको मित्र आदित्यः पविः स्वकीयेनातपेन पङ्कयुक्ताया भूमेः शोषकस्सन् आववर्ति पुनः पुनरावर्तते ॥

[16] अथ पुरोडाशस्य याज्यामाह—भुवनस्य लोकस्य गोपा रक्षकौ सुदानू शोभनस्य फलस्य दातारौ हे मित्रावरुणौ यद्यस्मात्कारणात् बंहिष्ठं अत्यन्तबहुलं अच्छिद्रं विनाशरहितं शर्म सुखं नातिविधे भवदनुग्रहं विना प्रकारान्तरेणास्माभिर्नात्यन्तं लभ्यं ततः कारणात् हे मित्रावरुणौ नोऽस्मान् अवीष्टं रक्षितवन्तौ। सिषासन्तः भवद्दत्तं फलं लब्धुमिच्छन्तः वयं जीगिवांसः जेतुं प्राप्तवन्तः स्याम ॥

[17] अथ हविषः पुरोनुवाक्यामाह—हे मित्रावरुणौ युवां हव्यदातिं हविर्दानहेतुं नो गव्यूतिं अस्मदीयं गोसमूहं इडाभिः तृणादिभक्ष्यविशेषैः सह तज्जनितेन घृतेन आज्येन आ समन्तात् उक्षतं सिञ्चतम्। बहुविधगोग्रासद्वारा घृतसंपूर्तिं कुरुतमित्यर्थः। हे मित्रावरुणौ वां युवां अत्र अस्मिन्देशे जनाय सर्वजनोपकारार्थं दिव्यस्य

नाय। पृणीतमुद्रो विव्यस्य चारोः । [18] प्र बाहवा सिसृतं जीवसे नः । आ नो गव्यूतिमुक्षतं घृतेन ॥ ४६ ॥ आ नो जने श्रवयतं युवाना । श्रुतं मे मित्रावरुणा हवेमा । [19] इमा रुद्राय स्थिरधन्वने गिरः । क्षिप्रेषवे देवाय स्वधाम्ने। अषाढाय सहमानाय मीढुषे। तिग्मायुधाय भरता शृणोतन।

दिवि भवस्य चारोरुद्रः समीचीनस्योदकस्य वरं श्रेष्ठं सारं प्रति पृणीतं प्रतिक्षेत्रं पूरयतम् ॥

[18] अथ हविषो याज्यामाह—हे मित्रावरुणौ नो जीवसे अस्माकं जीवनार्थं बाहवा भवदीयौ बाहू प्रसिसृतं प्रसारयतं बाहू प्रसार्यास्मानादाय रक्षतमित्यर्थः । नो गव्यूतिं अस्मदीयं गोसमूहं आ समन्तात् घृतेन उक्षतं सिञ्चतम् । युवाना नित्यतरुणौ परस्परमिश्रितौ वा, युवां नः अस्मान् जने जनमध्ये श्रवयतं प्रख्यापयतम् । हे मित्रावरुणौ मे मदीयं इमा हवा श्रुतमिदमाह्वानं शृणुतम् ॥

[19] अथ "रौद्रीꣳ रोहिणीमालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—हे ऋत्विजो हे पुत्रपौत्रा वा शृणोतन मदीयं वाक्यं शृणुत । किं वाक्यमिति तदुच्यते—रुद्राय इमा वेदोक्ता गिरः स्तुतिरूपा वाचो भरत संपादयत । कीदृशाय रुद्राय? स्थिरधन्वने दृढेन धनुषा युक्ताय । क्षिप्रेषवे शीघ्रगामिबाणयुक्ताय । देवाय द्योतमानाय स्वधाम्ने स्वकीयस्थानयुक्ताय स्वधाशब्दवाच्येनान्नेन युक्ताय वा । अषाढाय परैरभिभवितुमशक्याय । सहमानाय परानभिभवितुं समर्थाय । मीढुषे वृष्ट्यादिसेचनसमर्थाय । तिग्मायुधाय तीक्ष्णैरायुधैरुपेताय ॥

[20]त्वा दत्तेभी रुद्र शंतमेभिः । शतꣳ हिमा अशी-य भेषजेभिः । व्यस्मद्द्वेषो वितरं व्यꣳहः । व्य-मीवाꣳश्चातयस्वा विषूचीः ॥ ४७ ॥ [21]अर्हन्बिभ-र्षि मा नस्तोके । [22]आ ते पितर्मरुताꣳ सुम्नमेतु । मा नस्सूर्यस्य संदृशो युयोथाः । अभि नो वीरो

[20] अथ वपाया याज्यामाह—हे रुद्र त्वा दत्तेभिः त्वयाऽस्मभ्यं दत्तैः शंतमेभिः सुखतमैः भेषजेभिः ओषधैः शतं हिमाः शतसंख्याकान् संवत्सरान् अशीय प्राप्नुयाम् । द्वेषः द्वेषिणः शत्रून् अस्माद्विचातयस्व अस्मत्तो वियोजयस्व । नात्र वियोगमात्रं किंतु वितरं अतिशयेन वियोगं कुरु । अंहः पापं विचातयस्व । अमीवान् रोगान् विषूची-र्विविधगतियुक्तान्कृत्वा विचातयस्व ॥

[21] अथ पुरोडाशस्य याज्यानुवाक्ययोः प्रतीके दर्शयति—"अर्ह-न्बिभर्षि सायकानि धन्वा" इत्येषा पुरोनुवाक्या । सा च प्रव-र्ग्यमन्त्रकाण्डे व्याख्यास्यते । 'मा नस्तोके तनये' इति याज्या । सा च 'त्वमग्ने बृहद्वय' इत्यनुवाके व्याख्याता ॥

[22] अथ हविषः पुरोनुवाक्यामाह—हे मरुतां पितः पालक रुद्र ते सुम्नं त्वया संपादितत्वेन त्वदीयं सुखं आसमन्तात् एतु अस्मान्प्राप्नोतु । किंच त्वमस्मान् सूर्यस्य संदृशः सूर्यसंम्बन्धिनो दर्शनान्मा युयोथाः मा वियोजय । सूर्यानुगृहीतं चक्षुष्पाटवमस्माकं सर्वदाऽस्त्वित्यर्थः । नोऽस्माकं वीरः पुत्रः अर्वति अश्वस्य पृष्ठे अभिक्षमेत सर्वप्रकारेण समर्थोऽस्तु । हे रुद्र त्वत्प्रसादाद्वयं प्रजाभिः प्रजायेमहि बह्वीः प्रजा उत्पादयामः ॥

अवैति क्षमेत । प्रजायेमहि रुद्र प्रजाभिः । [23]एवा बभ्रो वृषभ चेकितान । यथा देव न हृणीषे न हꣳसि । हावनश्रूर्नो रुद्रेह बोधि । बृहद्वदेम विदथे सुवीराः । [24]परि णो रुद्रस्य हेतिस्स्तुहि

[23]अथ हविषो याज्यामाह—हे देव यथा न हृणीषे न कुप्यसि न हंसि च न मारयस्यपि एवैवमेव त्वामाह्वयामीति शेषः । रुद्रस्य विशेषणानि—बभ्रो पिङ्गलवर्ण वृषभ कामानां वर्षक चेकितान सर्वज्ञ हे रुद्र हावनश्रूः आह्वानस्य श्रोता सन्निह कर्मणि नोऽस्मान् बोधि बुध्यस्व अस्मदीयां हूतिं जानीहीत्यर्थः । वयं सुवीराः शोभनापत्ययुक्ताः सन्तो विदथे यज्ञे बृहद्वदेम प्रौढं स्तोत्रं पठामः ॥

[24]अस्मिन्नेव रौद्रे पशौ विकल्पिते सूक्ते षण्णामृचां प्रतीकानि दर्शयति—'परि णो रुद्रस्य हेतिर्वृणक्तु' इति वपायाः पुरोनुवाक्या । 'स्तुहि श्रुतं गर्तसदं युवानं' इति याज्या । 'मीढुष्टम शिवतम' इति पुरोडाशस्य पुरोनुवाक्या । एतद्द्वयं रुद्राध्याये व्याख्यातम् । 'अर्हन्बिभर्षि' इति पुरोडाशस्य याज्या । सा च प्रवर्ग्यमन्त्रेषु व्याख्यास्यते । 'त्वमग्ने रुद्रो असुरः' इति हविषः पुरोनुवाक्या । 'आवो राजानमध्वरस्य' इति याज्या । एतच्चोभयं 'त्वमग्ने रुद्र' इत्यनुवाके व्याख्यातम् ॥

अत्र विनियोगसंग्रहः-

आ देव इति सावित्रे उपध्वस्ते सनिप्रदे ।
आ नो विश्वे वैश्वदेवे बहुरूपेऽशनप्रदे ॥ १ ॥
आ वां मित्रा द्विरूपायां मैत्रावरुणनामनि ।

श्रुतम् । मीढुष्टमार्हन्विभर्षि । त्वमग्ने रुद्र आ वो राजानम् ॥ ४८ ॥

वसूनि ततानास्तु विश्वान्ववृत्यां ववर्ति घृतेन विषूचीश्रुतं द्वे च ॥ ६ ॥

[1]सूर्यो देवीमुषसꣳ रोचमाना मर्यः । न योषामभ्येति पश्चात् । यत्रा नरो देवयन्तो युगानि ।

---

इमा रुद्राय रोहिण्यां रौद्रां गवि समीरितम् ॥
परि णो रुद्र इत्येतत्तत्रैव हि विकल्पितम् ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
अष्टमप्रपाठके षष्ठोऽनुवाकः.

---

[1]षष्ठे सावित्र्यादिपशूनां सूक्तान्यभिहितानि । सप्तमे सौर्यादिपशूनां सूक्तान्यभिधीयन्ते । तत्र "यो ब्रह्मवर्चसकामः स्यात्तस्मा एताꣳ सौरीं श्वेतां वशामालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—योऽयं सूर्योऽस्ति सोऽयं रोचमाना दीप्यमानां उषसं उषोभिधां देवीमभिलक्ष्य पश्चादेति पृष्ठभागे गच्छति । तत्र दृष्टान्तः मर्यो न योषा यथा मर्त्यो योषामभिलक्ष्य पृष्ठतो गच्छति तद्वत् । उषा देवी प्रथमं प्रभातं करोति पश्चात्सूर्य उदेतीत्यर्थः । यत्र यस्यामुषसि प्रवृत्तायां नरः मनुष्या यजमानाः देवयन्तः देवानात्मार्थमिच्छन्तः युगानि दंपतिरूपाणि युग्मानि भूत्वा भद्राय

वितन्वते प्रति भद्राय भद्रम् । [2]भद्रा अश्वा हरितः सूर्यस्य । चित्रा एदग्वा अनुमाद्यासः । नमस्यन्तो दिव आ पृष्ठमस्थुः । परि द्यावापृथिवी यन्ति सद्यः । [3]तत्सूर्यस्य देवत्वं तन्महित्वम् । मध्याकर्तोर्विततꣳ संजभार ॥ ४१ ॥ यदेदयुक्त

कल्याणाय भद्रं वितन्वते कल्याणं कर्मानुतिष्ठन्ति । यस्यामुषसि कर्मानुष्ठानप्रवृत्तिस्तामुषसमभ्येतीति पूर्वत्रान्वयः ॥

[2]अथ वपाया याज्यामाह—एतच्छब्दपर्याय एदग्वशब्दः सूर्यस्याश्वमाचष्टे । अत एव मन्त्रान्तरमाम्नायते—"एदग्वेन त्वा सूर्यो देवतां गमयतु" इति । सूर्यस्य एदग्वा अश्वा दिवः पृष्ठं द्युलोकस्यो परि आस्थुः आश्रितवन्तः । कीदृशा एदग्वाः? भद्राः कल्याणरूपाः अश्वा आशुगामिनः हरितः नीलवर्णाः चित्राः विचित्रगतियुक्ता अनुमाद्यासः रथयोजनमनुहृष्यन्तः नमस्यन्तः नमस्कारमिच्छन्त इव प्रह्वीभूतास्तथाविधा अश्वाः सद्यः तस्मिन्नेव क्षणे द्यावापृथिवी परियन्ति लोकद्वयं परिभ्राम्य गच्छन्ति ॥

[3]अथ पुरोडाशस्य पुरोनुवाक्यामाह—विततं विस्तीर्णं रश्मिजालं कर्तोर्मध्या कृष्यादिक्रियाया मध्ये संजभार संहृतवानिति यदस्ति तदेव सूर्यस्य देवत्वं, प्रकाशकत्वं तदेव महित्वं माहात्म्यम् । अयमर्थः—सूर्यरश्मिसंचारे सति तदीयप्रकाशेनानुगृहीता मनुष्याः सर्वेषु देशेषु बहुविधानि कृष्यादिकर्माण्यारभन्ते तदा यामचतुष्टयमात्रेण सर्वं रश्मिजालं संहृत्यास्तमेति । यतो रश्मिजालस्य जगत्प्रकाशनाय क्षणमात्रेण प्रसारणं पुनः संहरणं च

हरितस्सधस्थात् । आद्रात्री वासस्तनुते सिमस्मै । [4]तन्मित्रस्य वरुणस्याभिचक्षे । सूर्यो रूपं कृणुते द्योरुपस्थे । अनन्तमन्यद्रुशदस्य पाजः । कृष्णमन्यद्धरितस्संभरन्ति । [5]अद्या देवा उदिता

नाल्पमहिम्नः संभवत्यतो महदेतन्माहात्म्यामिति । यदेत् यदैव सधस्थात् कर्मानुष्ठातॄणां सहावस्थानयोग्यादस्मोद्देशान्मेरुमतीत्य गन्तुं हरितः स्वकीयानश्वान् अयुक्त सूर्यः स्वरथे योजयति आत् अनन्तरमेव सिमस्मै सर्वस्मै प्राणिजाताय तदुपकारार्थं रात्री वासस्तनुते लोकप्रसिद्धरात्रिनिवासं करोति । अयमर्थः—मेरुं प्रदक्षिणीकुर्वन्नादित्यो यदैवास्मान्मेरुपार्श्वादपरपार्श्वं गन्तुमुद्युक्तस्तदानीमेव रात्रिर्भवतीति ॥

[4]अथ पुरोडाशस्य याज्यामाह—अयं सूर्यः द्योरुपस्थे द्युलोकस्योपरि रूपं कृणुते स्वकीयं रूपं करोति प्रादुर्भवतीति यदस्ति तदेतत्प्रादुर्भूतं रूपं मित्रस्य वरुणस्य तदुभयोरुपलक्षितस्य सर्वस्य जगतः अभिचक्षे अभितो दर्शनाय संपद्यते । अस्य सूर्यस्य अनन्तं पाज अत्यधिकं रश्मिजालरूपं बलं अन्यत् वक्ष्यमाणापेक्षया पृथगेव भूत्वा रुशत् दीप्यते । मध्याह्नकालेऽत्यधिकेन तेजसा प्रकाशते । अत एवान्यत्राम्नातम्—"बृहस्पतेर्मध्यंदिनः । तत्पुण्यं तेजसाऽह्नः । तस्मात्तर्हि तेक्ष्णिष्ठं तपति" इति । अन्यत् पूर्वोक्तान्मध्यंदिनात्पृथगेव रात्रौ कृष्णं रूपं हरितः सूर्यस्याश्वाः संभरन्ति संपादयन्ति । एतेऽश्वा यदा मेरोः पश्चिमभागे गच्छन्ति तदानीमत्र कृष्णं रूपं संपद्यते ॥

[5]अथ हविषः पुरोनुवाक्यामाह—हे देवा अद्या अस्मिन्दिने सूर्य-

सूर्यस्य। निरꣳहसः पिपृतान्निरवद्यात्। तन्नो मित्रो वरुणो मामहन्ताम्। अदितिस्सिन्धुः पृथिवी उत द्यौः ॥ ५० ॥ [6]दिवो रुक्म उरुचक्षा उदेति। दूरेअर्थस्तरणिर्भ्राजमानः। नूनं जनास्सूर्येण प्र-

स्य उदित उदितेनोदयेनास्मान् अंहसः पापान्निष्कृष्य पिपृतात् पालयत। तथा अवद्यात् लौकिकादपि द्वेषान्निष्कृष्य पिपृतात् पालयत। तत् युष्माभिः क्रियमाणमस्मत्पालनं मित्रादयः सर्वे देवा मामहन्तां अतिशयेन पूजयतु अनुमोदन्तामित्यर्थः। सिन्धुर्नदीविशेषः समुद्रो वा। उतशब्दः समुच्चयार्थः।

[6]अथ हविषो याज्यामाह—अयं तरणिः सूर्य उदेति। कीदृशः? दिवो रुक्मः स्वर्गस्य भासकः। उरुचक्षाः उरुषु विस्तीर्णेषु पृथिव्यादिलोकेषु प्रकाशकः। दूरेअर्थः दूरदेशविषयेऽर्थो गमनरूपं प्रयोजनं यस्यासौ दूरेअर्थः।

बहुदूरगमनं च पुराणे स्मर्यते—

योजनानां सहस्रे [1]द्वे द्वे शते द्वे च योजने।
एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते ॥ इति।

तादृशोऽयं भ्राजमानो दीप्यमानो वर्तते। नूनं वयं जनाः सर्वे सूर्येण प्रसूताः प्रेरिताः सन्तः अर्थानि अर्थ्यमानानि कृष्यादिफलानि आयन् प्राप्नुवन्ति। अपांसि वैदिकानि कर्माणि कृणवन् कुर्वन्ति।

1. द्वे द्विषः

सूताः । आयन्नर्थानि कृण्वन्नपांसि । [7]शं नो भव चक्षसा शं नो अह्ना । शं भानुना शꣳ हिमा शं घृणेन । यथा शमस्मै शमसद्दुरोणे । तत्सूर्य द्रविणं धेहि चित्रम् । [8]चित्रं देवानामुदगादनीकम् । चक्षुर्मित्रस्य वरुणस्याग्नेः ॥ ५१ ॥ आप्रा द्यावापृथिवी अन्तरिक्षम् । सूर्य आत्मा जगतस्त-

[7]अथ तस्मिन्नेव हविषि विकल्पितामन्यां पुरोनुवाक्यामाह— हे सूर्य त्वं नोऽस्माकं चक्षसा चक्षुरनुग्रहेण शं सुखहेतुर्भव । तथा नोऽस्माकं अह्ना दिननिष्पादनेन शं भव । भानुना रश्मिरूपप्रकाशनेन शं भव । हिमा हिमेन रश्मीनुपसंहृत्य शैत्यप्रदानेन शं भव । घृणेन घर्मप्रदानेन शं भव । वसन्तग्रीष्मयोः शैत्यप्रदानमृत्वन्तरेषु घर्मप्रदानमिति विवेकः । प्राणिनां हि वसन्तादौ शैत्यापेक्षा वर्षादिष्वौष्ण्यापेक्षा अतस्तदुभयं प्रार्थ्यते । अस्मै यजमानाय गृहाद्बहिः संचरते यथा शमसत् येन प्रकारेण सुखं भवति, दुरोणे गृहे च यथा शमसत् येन प्रकारेण सुखं भवति, हे सूर्य तद्धेहि तथा कुरु । किंच चित्रं मणिमुक्तादिरूपेण नानाविधं द्रविणं धेहि संपादय ।

[8]अथ हविषो विकल्पितामन्यां याज्यामाह— चित्रं ताम्रारुणबभ्रुत्वादिरूपेण विचित्रं सूर्यमण्डलं उदगात् उदयं प्राप्नोत् । तदेव वैचित्र्यमन्यत्राम्नातम्— "असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः" इति । कीदृशं मण्डलं ? देवानामनीकं दीप्यमानबहुरश्मिरूपाणां देवानां सैन्यसदृशम् । तथा मित्रावरुणाग्न्यादीनां सर्वेषां दृष्टच-

स्थुषश्च । [9] त्वष्टा दधच्छुष्ममिन्द्राय ... त्वष्टा दधत्तन्नस्तुरीपम् । त्वष्टा वीरं पिशङ्गरूपः । [10] दशेमं त्वष्टुर्जनयन्त गर्भम् । अतन्द्रासो युवतयो बिभर्त्रम् । तिग्मानीकꣳ स्वयशसं

नुग्राहकत्वेन चक्षुस्स्थानीयम् । जगतो जङ्गमस्य प्राणिजातस्य तस्थुषश्च स्थावरस्यापि आत्मा प्रत्यगात्मत्वेन हृदयेऽवस्थितः सूर्यो लोकत्रयं आप्राः सर्वतः स्वचैतन्येन स्वरश्मिना च पूरितवान् ॥

[9] अथ 'त्वाष्ट्रं वडवमालभेत' इत्यस्य पशोः सूक्ते वपायाः पुरोडाशस्य याज्यानुवाक्ययोश्चत्वारि प्रतीकानि दर्शयति—'त्वष्टा दधदिन्द्राय' इति वपायाः पुरोनुवाक्या । सा चेयं 'समिद्ध इन्द्र उषसाम्' इत्यत्र व्याख्याता । 'तन्नस्तुरीपमध पोषयित्नु' इति वपाया याज्या । सा च 'अग्निना रयिमश्नवत्' इत्यत्र व्याख्याता । 'स्वष्टा वीरं देवकामम्' इति पुरोडाशस्य पुरोनुवाक्या । सा च 'समिद्धो अञ्जन्' इत्यत्र व्याख्याता । 'पिशङ्गरूपः सुभरः' इति पुरोडाशस्य याज्या । सा च 'अग्निना रयिमश्नवत्' इत्यत्र व्याख्याता ॥

[10] अथ हविषः पुरोनुवाक्यामाह—प्राच्याद्या दश दिशः इममग्निं गर्भस्थानीयं त्वष्टुः सकाशात् जनयन्त उदपादयन् । पुरा कदाचित्सर्वत आन्ध्ये सति प्रकाशार्थं दशस्वपि दिक्षु त्वष्टा वह्निमुत्पादितवानित्याख्यायिका ब्राह्मणान्तरे द्रष्टव्या । कीदृश्यो दिशः ? अतन्द्रासः प्राणिधारणरूपे स्वव्यापारे कदाचिदप्यालस्यरहिताः । युवतयः नित्यतरुणास्वभावाः । कीदृशमग्निं ? बिभर्त्रं दाहपाकप्रकाशप्रदानेन सर्वस्य जगतः पोषकम् । तिग्मानीकं तीक्ष्णज्वालारू-

सं जनेषु। विरोचमानं परिषीं नयन्ति। [11]आविष्ट्यो वर्धते चारुरासु। जिह्मानांमूर्ध्वस्स्वयंशा उपस्थे ॥५२॥ उभे त्वष्टुर्बिभ्यतुर्जायमानात्। प्रतीची सिꣳहं प्रतिजोषयेते। [12]मित्रो जनान्प्रसमित्र। [13]अयं मित्रो नमस्यस्सुशेवः। राजा सुक्ष-

पेण सैन्योपेतम्। स्वयशसं स्वतःप्रसिद्धयशोयुक्तम्। जनेषु प्राणिषु विरोचमानं उदराग्निरूपेण बहिष्प्रकाशकत्वेन च विशेषेण दीप्यमानम्। तादृशमग्निं परिषीं परितोऽवस्थितासु तत्तद्गृहसीमासु सर्वे प्राणिनो नयन्ति ॥

[11]अथ हविषो याज्यामह—आविष्ट्यः आविर्भूतः चारुः शोभनः सूर्य आसु जिह्मानां आसां कुटिलानां तिर्यगवस्थितानां दिशां मध्ये उपस्थे उपरिभागे स्वयशाः स्वाधीनयशस्को वर्धते। योऽयमादित्य रूपेणोपरि वर्तते स एवाग्निरूपेण त्वष्टुः सकाशाज्जायते। जायमानात्तस्मादग्नेरुभे द्यावापृथिव्यौ बिभ्यतुः भीते आस्ताम्। अत्यन्तदहननिमित्तेयं भीतिः। ते च भीते सत्यौ प्रतीची प्रतीच्यामभिमुखे भूत्वा सिंहं सिंहसदृशं दुरासदमग्निं प्रतिपद्य जोषयेते प्रीणयतः। ततः प्रीतोऽग्निर्नात्यन्तं धक्ष्यतीति तयोरभिप्रायः ॥

[12]अथ 'मैत्रꣳ श्वेतमालभेत' इत्यस्य पशोः सूक्ते वपाया याज्यानुवाक्ययोः प्रतीके दर्शयति—'मित्रो जनान्यातयति' इति पुरोनुवाक्या। 'प्रसमित्र मर्तो अस्तु' इति याज्या। एतच्चोभयं 'त्वमग्नेः बृहद्वयः' इत्यत्र व्याख्यातम् ॥

[13]अथ पुरोडाशस्य पुरोनुवाक्यामाह—अयं पशुना पूज्यमानो मित्रः देवः नमस्यः सर्वैर्नमस्कार्यः। सुशेवः सुष्ठु सेवितुं शक्यः।

त्रो अंजनिष्ट वेधाः । तस्यं वयꣳ सुमतौ यज्ञियस्य । अपिं भद्रे सौमनसे स्याम । [14]अनमीवास इडया मदन्तः । मितज्ञवो वरिमन्ना पृथिव्याः । आदित्यस्यं व्रतमुपक्ष्यन्तः ॥५३॥ [15]वयं मित्रस्यं सुमतौ स्याम । मित्रं न ईꣳ शिम्या गोषु गव्यवंत् ।

राजा सर्वेषां स्वामी । सुक्षत्रः शोभनबलयुक्तः । वेधाः प्राणिनां विधाता भूत्वा अजनिष्ट प्रादुर्भूतः । यज्ञियस्य यज्ञयोग्यस्य तस्य मित्रस्य सुमतावनुग्रहरूपायां बुद्धौ वयं स्याम अवस्थिता भूयास्म । अपि च भद्रे कल्याणे सौमनसे चित्तस्वास्थ्ये स्याम अवस्थिता भूयास्म॥

[14] अथ पुरोडाशस्य याज्यामाह—वयं यजमानाः मित्रस्य देवस्य सुमतौ अनुग्रहबुद्धौ स्याम सर्वदाऽवस्थिता भूयास्म । कीदृशा वयं ? अनमीवासः रोगरहिताः । इडया मदन्तः अन्नसमृद्ध्या हृष्यन्तः । मितज्ञवः भूमाववस्थितजानुकाः । लोके हि स्वामिनः संनिधौ विज्ञापनां कुर्वन्तो भृत्यास्तथा वर्तन्ते । पृथिव्याः संबन्धिनि वरिमन् वरिष्ठे देवयजने आ समन्तात् आदित्यस्य मित्रनाम्न आदित्यविशेषस्य संबन्ध्येतत्पशुरूपं कर्म उपक्ष्यन्तः अनुतिष्ठन्तः ॥

[15] अथ हविषः पुरोनुवाक्यामाह—स्वाधियः स्वतन्त्रबुद्धयः ऋत्विजः नः अस्मदीये ईं विदथे अस्मिन्यज्ञे शिम्या अनुष्ठानेन जनयितव्यासु अप्सु निमित्तभूतासु सतीषु मित्रं देवं अजीजनन् उत्पादितवन्तः अस्मिन्कर्मण्याहुतवन्त इत्यर्थः । तत्र दृष्टान्तः—गोषु गव्यवत्, यथा गोषु गव्यं क्षीरादिकं जनयन्ति तथाऽस्मिन्कर्मणि मित्रं हविर्भोक्तृ-

स्वाधियो विदथे अप्स्वजीजनन्। अरेजयताꣳ रोदसी पाजसा गिरा। प्रति प्रियं यजतं जनुषामवः।
[16]महाꣳ आदित्यो नमसोपसद्यः। यातयज्जनो गृणते सुशेवः। तस्मा एतत्पन्यतमाय जुष्टम्। अग्नौ मित्राय हविराजुहोत। [17]आ वाꣳ रथो रोदसीबद्बधानः॥

त्वेनोत्पादितवन्तः। रोदसी द्यावापृथिव्यौ पाजसा मित्रस्य बलेन अरेजयतां अकम्पतां मित्रस्याज्ञया वर्तेते इत्यर्थः। यजतं यजनीयं प्रियं मित्रं प्रति जनुषां जन्मवतामस्माकं अवः रक्षणं गिरा वाचा प्रार्थयामह इति शेषः॥

[16]अथ हविषो याज्यामाह—य आदित्यः अदितेः पुत्रः मित्रः महान् आकारेण बहलः। नमसोपसद्यः नमस्कारेण सेवनीयः। यातयज्जनः एतदाराधनार्थं प्रयत्नं कारयद्भिर्जनैर्युक्तः। गृणते स्तुतिं कुर्वते यजमानाय सुशेवः सुखेन सेवितुं शक्यः। पन्यतमाय अतिशयेन स्तुत्याय तस्मै पूर्वोक्तगुणयुक्ताय मित्राय जुष्टं प्रियं एतत् हविः अग्नौ आहवनीये, हे ऋत्विज आजुहोत॥

[17]अथ "आश्विनं धूम्रमालभेत" इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—हेऽश्विनौ वां युवयोः रथोऽश्वैर्युक्त आयातु अस्मद्यज्ञं प्रत्यागच्छतु। कीदृशो रथः? रोदसी द्यावापृथिव्यौ बद्बधानः अतिशयेन बाधमानः। हिरण्ययः सुवर्णमयः। घृतवर्तनिः घृतं वर्तन्यां मार्गे यस्य रथस्य सोऽयं घृतवर्तनी रथमार्गः, सर्वोऽपि घृतसमानेन मलेन पूर्ण इत्यर्थः। पविभिः वज्रसमानैरायुधैः रुचानः

हि॒र॒ण्यय॒यो वृष॑भि॒र्या॒त्वश्वैः॑। घृ॒तव॑र्तनिः प॒विभी॑ रु॒चा॒नः। इ॒षां वो॒ढा नृ॒पति॑र्वा॒जिनी॑वान्। [18]स प॑प्र॒था॒नो अ॒भि पञ्च॒ भूम॑। त्रि॒व॒न्धु॒रो मन॒साऽऽया॑तु यु॒क्तः। वि॒शो येन॒ गच्छ॑थो देव॒यन्तीः॑। कु॒त्रा चि॒द्याम॑मश्विना॒ दधा॑ना। [19]स्वश्वा॑ य॒शसाऽऽया॑तम॒-

---

दीप्यमानः रथस्योपरि बहून्यायुधानि तिष्ठन्तीत्यर्थः। इषां भक्ते-भ्यो देयानामन्नानां वोढा। नृपतिः नृणां पालयिता। वाजिनीवान् वाजिनीभिरन्नहेतुभिर्युक्तः। कीदृशैरश्वैः? वृषभिः सेचनसमर्थैः॥

[18]अथ वपाया याज्यामाह—स रथो मनसा युक्त आयातु स्मरणमात्रेणास्मदीयं यज्ञमागच्छतु। कीदृशो रथः? पञ्चभूम अभिपप्रथानः भूमशब्दो भुवनवाची, पञ्चसंख्याकानि भुवनानि पृथिव्यन्तरिक्षद्युलोकपाताललोकजनलोकरूपाण्यभिलक्ष्य पप्रथानःअतिशयेन प्रथमानः। बन्धुरशब्देन सारथिस्थानमुच्यते। त्रीणि बन्धुराणि यस्यासौ त्रिबन्धुरः रथे बह्वश्वेषु योजितेषु कक्ष्यात्रये सारथय उपविश्य तान् सर्वानश्वान् प्रेरयन्ति। हे अश्विनौ युवां येन रथेन देवयन्तीः देवानात्मन इच्छन्तीः विशः प्रजा गच्छथः स रथः पूर्वोक्तगुणकः। हे अश्विनौ कुत्राचित् यत्र क्वापि यामं गमनं दधाना मनसि धारयन्तौ तेनैव रथेन गच्छथ इति शेषः॥

[19]अथ पुरोडाशस्य पुरोनुवाक्यामाह—हे दस्रौ अश्विनौ स्वश्वा शोभनैरश्वैर्युक्तौ तथा यशसा युक्तौ अर्वागायातं अस्मदभिमुखमागच्छतम्। आगत्य च मधुमन्तं माधुर्ययुक्तं निधिं निधिसमानं वपा-

र्वाक् । दस्रा निधिं मधुमन्तं पिबाथः । वि वाᳪ रथो वध्वा यादमानः ॥ ५५ ॥ अन्तान्दिवो बाधते वर्तनिभ्याम् । [20] युवोः श्रियं परि योषा वृणीत । सूरो दुहिता परितक्मियायाम् । यद्देवयन्तमवथश्शचीभिः । परिघ्रᳪस वां मना वां वयो गाम् । [21] यो ह स्य वाᳪ रथिरा वस्त उस्राः ।

---

दिकं पिबाथः भक्षयथः । वध्वा सहितयोः वां युवयोरयं रथो यादमान इतस्ततो भ्रमन् वर्तनिभ्यां चक्रधाराभ्यां चक्रमार्गाभ्यां वा दिवोऽन्तान् द्युलोकस्य पर्यन्तान् विशेषेण बाधते ॥

[20] अथ पुरोडाशस्य याज्यामाह—हेऽश्विनौ सूरो दुहिता सूर्यस्य कन्यका या योषाऽस्ति सा परितक्मियायां परितो गमनलक्षणायां क्रियायां युवोः श्रियं युवयोराश्रयभूतं रथं परिवृणीत परितो वृतवती । अयमर्थः—सूर्यस्य दुहितरं परिवरितुं सर्वे देवाः कांचिन्मर्यादां चक्रुः तस्यामश्विनौ जितवन्तौ । तदानीमियं दुहिता गमनार्थं तदीयं रथं वव्र इति । इदमुपाख्यानं शाखान्तरे द्रष्टव्यम् । यद्देवयन्तं यस्मात्कारणाद्देवान्कामयमानं यजमानं हे अश्विनौ शचीभिः स्वशक्तिभिः अवथः रक्षथः तस्मात्कारणात्परिघ्रंस घस्रो दिनमित्यर्थः तस्य परितः सायंप्रातःकालयोरित्यर्थः । तयोः कालयोर्वां युवां वयो हविर्लक्षणमन्नं गां गच्छतु । कीदृशं वयः ? वां मना युवयोर्मननीयम् ॥

[21] अथ हविषः पुरोनुवाक्यामाह—हे रथिरौ रथयुक्तावश्विनौ वां युवयोः सम्बन्धी यो ह यः खलु रथोऽस्ति स्यः स एष रथः उस्राः

रथो युजानः परियाति वर्तिः । तेन नश्शं योरु-
षसो व्युष्टौ । न्यश्विना वहतं यज्ञे अस्मिन् ।
[22] युवं भुज्युमवविद्ध५ समुद्रे ॥ ५६ ॥ उदूहथुर-
र्णसो अस्त्रिधानैः । पतत्रिभिरश्रमैरव्यथिभिः ।
द५सनाभिरश्विना पारयन्ता । [23] अग्नीषोमा यो
अद्य वाम् । इदं वचस्सपर्यति । तस्मै धत्त५ सुवी-

उस्त्रैः स्वनिष्ठमणिमुक्तादिरश्मिभिः वस्ते स्वात्मानमाच्छादयति मण्या-
दिभिरलंकृत इत्यर्थः । स च रथो युजानः अश्वैर्युक्तस्सन् वर्तिन्यां
मार्गे परियाति परितो गच्छति । तेन रथेन नः अस्माकं शं सुख-
प्राप्तिहेतुं योः दुःखवियोगहेतुं च उषसो व्युष्टौ व्युष्टायामुषसि प्रातः-
काले अस्मिन्यज्ञे हे अश्विनौ निवहतं तदुभयं नितरां प्रापयतम् ॥

[22] अथ हविषो याज्यामाह—हे अश्विनौ युवं युवामुभौ समुद्रे
अववि‌द्धं निमग्नं भुज्युं कंचिद्राजानं भुज्युनामकं अर्णस उदकात् दूह-
थुः ऊर्ध्वमानीतवन्तौ । केन साधनेनेति तदुच्यते—अस्त्रिधानैः
अमन्दवेगैः पतत्रिभिः पक्षिविशेषैः । अश्रमैः श्रमरहितैः । अव्य-
थिभिः भयरहितैः । कीदृशावश्विनौ ? दंसनाभिः व्यापारविशेषैः
पारयन्ता तीरं प्रापयन्तौ । भुज्युनाम्नो राज्ञोऽश्विभ्यां समुद्रादुद्धर-
णमन्यत्रापि 'तमूहथुर्नौभिरात्मन्वतीभिः' इति मन्त्रे स्पष्टमाम्नातम् ॥

[23] अथ तृतीयकाण्डोक्तस्य 'अग्नीषोमीयामालभेत' इत्यस्य
पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—हे अग्नीषोमौ योऽयं यज

यम् । गवां पोषꣳ स्वश्वियम् । [24]यो अग्नीषोमा हविषा सपर्यात् । देवद्रीचा मनसा यो घृतेन । तस्य व्रतꣳ रक्षतं पातमꣳहसः ॥ ५७ ॥ विशे जनाय महि शर्म यच्छतम् । [25]अग्नीषोमा य आहुतिम् । यो वां दाशाद्धविष्कृतिम् । स प्रजया

मानोऽस्मिन्कर्मणि वां युवां इदं वचः अनेन वचसा प्रयुज्यमानेन मन्त्रेण सपर्यति परिचरति, तस्मै यजमानाय सुवीर्यं शोभनसामर्थ्यं गवां पोषं गोसमृद्धिं स्वश्वियं शोभनाश्वसमूहं च धत्तं संपादयतम् ॥

[24]अथ वपाया याज्यामाह—हेऽग्नीषोमौ यः यजमानः हविषा पशुरूपेण सपर्यात् परिचरति, यश्च देवद्रीचा देवान्प्राप्नुवता मनसा मननीयेन घृतेन परिचरति तस्य यजमानस्य व्रतं इदं कर्म विघ्नेभ्यो रक्षतम् । तं च यजमानं अंहसः पापात् पातं रक्षतम् । विशे प्रजायुक्ताय यजमानाय जनाय मनुष्याय यजमानाय महि शर्म महत्सुखं यच्छतम् ॥

[25]अथ पुरोडाशस्य पुरोनुवाक्यामाह—हेऽग्नीषोमौ योऽयं यजमान आहुतिं दाशात् दद्यात् । तदेव पुनर्वाक्यान्तरेण स्पष्टीक्रियते—यः यजमानः वां युवाभ्यां हविष्कृतिं हविर्योग्येन संस्कारेण संस्कृतामाहुतिं दाशात् दद्यात्, मन्त्रेण क्रियया चाविकलं यथा भवति तथाऽनुतिष्ठेदित्यर्थः । स यजमानः प्रजया पुत्रपौत्रादिरूपया सह सुवीर्यं शोभनसामर्थ्ययुक्तं विश्वमायुः शतसंवत्सरपर्यन्तमायुः व्यश्नवत् विशेषेण प्राप्नोति ॥

सुवीर्यम्। विश्वमायुर्व्यश्नवत्। [26] अग्नीषोमा चेति तद्वीर्यं वाम्। यदमुष्णीतमवसं पणिं गोः। अवातिरतं प्रथयस्य शेषः। अविन्दतं ज्योतिरेकं बहुभ्यः। [27] अग्नीषोमाविमꣳ सुमेऽग्नीषोमा हविषः प्रस्थितस्य ॥ ५८ ॥

[26] अथ पुरोडाशस्य याज्यामाह—हेऽग्नीषोमौ पाणिं पणिनाम्नः कस्याचिदसुरस्य गोः यावंत्यो गावः सन्ति ताः सर्वाः अमुष्णीतं युवामपहृतवन्ताविति यदेतदस्ति तदेतत् वां वीर्यं युवयोः शौर्यं चेति चेतासि सर्वो जनो विजानाति। पणिनामकः कश्चिदसुरो देवेभ्यो भीतः स्वकीया गाः स्वीकृत्य क्वचित्पलायनमकरोत्। तदानींमेतावग्नीषोमौ ताः सर्वा गा बलादानीतवन्तौ। सेयमाख्यायिका शाखान्तरे द्रष्टव्या। हेऽग्नीषोमौ तथा युवां प्रथयस्य प्रथयनाम्नः कस्याचिदसुरस्य शेषः शेषमपत्यं वृत्रनामानमसुरं अवातिरतं इन्द्रद्वारा विनाशितवन्तौ। ततस्तमोरूपस्यासुरस्य वृत्रस्य नाशात् बहुभ्यः बहुयजमानोपकारार्थं ज्योतिरेकं संपूर्णचन्द्रमण्डलरूपं ज्योतिः प्रकाशं अविन्दतं लब्धवन्तौ। इदं च वृत्रवधाख्यानं 'त्वष्टा हतपुत्रः' इत्यनुवाके प्रपाश्चितम्। तत्र हि 'घ्नन्ति वा एनं पूर्णमासः' इति वाक्ये तमोरूपस्य वृत्रस्य वधे सति पौर्णमासदिने संपूर्णचन्द्रमण्डलरूपस्य प्रकाशस्याविर्भावः श्रुतः, तत्सर्वमत्र संगृह्योक्तम् ॥

[27] अथ हविषो याज्यानुवाक्ययोः प्रतीके दर्शयति—'अग्नीषोमाविमꣳ सुमे शृणुतम्' इति पुरोनुवाक्या। 'अग्नीषोमा हविषः

जभार द्यौर॒ग्नेरु॒पस्थं उप॒क्ष्यन्तौ बह्वधानो या-
दमानस्समुद्रेऽऽ ह॒सः प्रस्थितस्य ॥ ७ ॥

[1] अ॒हम॑स्मि प्रथम॒जा ऋ॒तस्य॑ । पूर्वं दे॒वेभ्यो

प्रस्थितस्य' इति याज्या । एतच्चोभयं 'सप्रत्नवं निकाव्य' इत्यत्र व्याख्यातम् ॥

अत्र विनियोगसंग्रहः—

सूर्यो देवी श्वेतसौर्ये ब्रह्मवर्चसकामिनः ।
शं नो भवेति मन्त्रौ द्वौ पूर्वत्रैव विकल्पितौ ॥ १ ॥
त्वष्टा दधदिति त्वाष्ट्रवडवे पशुकामिनः ।
मित्रो जनेति मैत्रे स्यात्सङ्ग्रामे समयार्थिनः ॥ २ ॥
आ वां रथ इति त्वेतदाश्विने धूम्रलाञ्छिते ।
अग्नीषोमा वशायां स्यादजायामन्नकामिनः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
अष्टमप्रपाठके सप्तमोऽनुवाकः.

---

[1] सप्तमे सौर्यादिपशूनां सूक्तान्यभिहितानि । अष्टमे वेहदादि-पशूनां सूक्तान्युच्यन्ते । ते च पशवः शाखान्तरे समाम्नाताः । तत्र सूत्रकारेणोदाहृतम्—'सान्नाय्ये वेहतमालभेत' इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—बह्वृचा आरण्यकाण्डे त्रिविधमन्नमामनन्ति—'त्रेधा विहितं वा इदमन्नमशनं पानं खादः'

अमृतस्य नाभिः । यो मा ददाति स इदेव माऽऽवाः । अहमन्नमन्नमदन्तमद्मि । [2] पूर्वमग्नेरपि दहत्यन्नम् । यत्तौ हाऽऽसाते अहमुत्तरेषु । व्या-

---

इति । तस्याशनादेस्त्रिविधस्यान्नस्याभिमानिनी या देवता तदीयानि वचनान्यस्मिन्सूक्ते प्रतिपाद्यन्ते । अहं अन्नस्वामी देवः ऋतस्य यज्ञस्य प्रथमजाः प्रथमं जनयिताऽस्मि । यज्ञस्य हविर्जन्यत्वाद्धविषोऽन्न रूपत्वात् । तादृशोऽहमन्नस्वामी पूर्वं पुरा देवेभ्यः देवार्थं अमृतस्य नाभिः बन्धकोऽस्मि । नह्यति बध्नात्यमृतमिति नाभिः । देवा ह्यमृ तमुपजीवन्ति । अमृतं चान्नविशेषः, तस्मादहमेवामृतस्य संपादकः । यः श्रद्धालुः पुमान् मा मामन्नरूपं ददाति ब्राह्मणादिभ्यः प्रयच्छति स इदेव स दाता स्वयमेव मा मामन्नदेवं आवाः आवृणोति स्वीकरोतीत्यर्थः । द्वौ हि लोके पुरुषौ दाता चादाता च । तत्राऽऽद्यः कालान्तरे भोक्तुं मां संगृह्णाति । यावदन्नमिदानीं दीयते तावदेव कालान्तरे शतधा सहस्रधा वर्धते । तस्माद्दातैव मां संगृह्णाति । यस्त्वन्तिमो मामदत्त्वा स्वयमेवात्ति अहमेवान्नमद्मीत्याभिमन्यते तमन्नमदत्ताभिमानिनमन्नदेवोऽहमाद्मि तं विनाशयामि । अदातुः कालान्तरेऽन्नाभावात् ॥

[2] अथ वपाया याज्यामाह—यदिदमन्नमग्नेरपि पूर्वमदातृभिर्भुज्यते तदिदमन्नं तं भोक्तारं दहति । अथ भुक्तमन्नमुदराग्निर्दिनमात्रेण दहति पाचयति । आदाता तु भोक्ता भुज्यमानेनान्नेन तदानीमेव दह्यते नरकहेतोः प्रत्यवायस्य तदैवोत्पन्नत्वात् । अत एवाहुः—"अदाता विषमश्नुते" इति । यत्तौ हा प्रयत्नवन्तावेव आसाते

तेमस्य पुशावस्सुजम्भम् । पश्यन्ति धीराः प्रच-रन्ति पाकाः । [3]जहाम्यन्यं न जहाम्यन्यम् । अहमन्नं वशमिच्चरामि ॥ ५९ ॥ समानमर्थं प-र्येमि भुञ्जत् । को मामन्नं मनुष्यो दयेत । [4]पराके अन्नं निहितं लोक एतत् । विश्वैर्देवैः पितृभिर्गुप्त-

दाता चादाता चेत्युभौ तिष्ठतः । दाता हि दानार्थं प्रयत्नं करोति, इतरस्तु भोजनार्थम् । तयोर्मध्ये ये पुरुषा दातुः पक्षे वर्तन्ते त एवोत्तराः श्रेष्ठाः । तेषूत्तरेषु दातृषु कालान्तरेष्वहमक्षीणो वसानि । ये पशवो मूढा अदातारः तान्प्रति अस्य अन्नदेवस्य मुखं व्यात्तं विवृत्तं सुजम्भं तीक्ष्णदन्तोपेतं वर्तते खादयाम्यदातॄनिति सर्वदोद्युक्त इत्यर्थः । एतमन्नदेवस्याभिप्रायं दातारो धीराः बुद्धिमन्तः पश्यन्ति जानन्ति । अत एवाददतः पाकाः बाला मूढाः प्रचरन्ति प्रकर्षेण भक्ष-यन्त्येव न तु किंचिदपि ददति ॥

[3] अथ पुरोडाशस्य पुरोनुवाक्यामाह—अन्नदेवोऽहमन्नमदातारं ज-हामि परित्यजामि । अन्यं तु दातारं न जहामि । अहमन्नं अन्नदेवरूपोऽहं वशमित् स्ववशमेव यथा भवति तथा चरामि । अदातुः परि-त्यागो दातृस्वीकारश्चेत्येतत्स्ववशत्वम् । यः पुमान्भोगदानयोः समानः सन् धनमर्थयते तं समानं अर्थयितारं भुञ्जन् पालयन्नहं पर्येमि परितः प्राप्नोमि । यस्तु भोगमात्रलम्पटस्तं न पालयामि नापि तं पर्येमीत्यभि-प्रायः । एवमदातृपरित्यागेन दातृपक्षपातेन च वर्तमानं मां को मनुष्यो दयेत रक्षेन्निवारयेत् । न कोपि मां निवारयितुं शक्त इत्यर्थः ॥

[4] अथ पुरोडाशस्य याज्यामाह—पूर्वस्मिन्मन्त्रे वशमिच्चरामि मां

मन्नम् । यदद्यते लुप्यते यत्परोप्यते । शततमी सा तनूर्मे बभूव । [5]महान्तौ चरू सकृद्दुग्धेन पप्रौ । दिवं च पृश्नि पृथिवीं च साकम् । तत्संपि-

को दयेतेति यत्स्वातन्त्र्यमुक्तं तदुपपादयितुं स्वमाहात्म्यमत्र वर्ण्यते । द्विविधो ह्यन्नस्य व्यवहारः पारलौकिक ऐहिकश्चेति । तत्र पराके परलोके दूरस्थे पित्रादिलोके एतदन्नं निहितम् । दाता हि देवलोके पितृलोके वा ममेदं भूयादित्यभिप्रेत्यैव ब्राह्मणेभ्यो ददाति । अतो दत्तमन्नं दूरस्थे लोके निहितं भवति । तच्चान्नं तत्तल्लोके विश्वैः सर्वैः देवैः पितृभिश्च स्वार्थं गुप्तं रक्षितं भवति । यदग्नौ हुतं यच्च ब्राह्मणेभ्यो दत्तं तदेवोपजीव्य देवाः पितरश्च वर्तन्ते । एवं पारलौकिकोऽन्नव्यवहार उक्तः । ऐहिकोऽपि व्यवहार उच्यते—यदन्नमद्यते प्राणिभिर्भक्ष्यते, यच्च विदग्धं सत् भाण्डे अपि भवति पर्युषितत्वेन वा पूतीभवति तादृशं लुप्यते नष्टं भवति । यच्च परोप्यते स्वकीयैश्वर्यप्रकटनाय बहिः परित्यज्यते सा सर्वाप्यैहिकामुष्मिकान्नरूपा मे अन्नस्वामिनो देवस्य शततमी शतसंख्यापूरणी तनूः । स च सर्वोऽपि लेश एवेत्यर्थः । ईदृशं मदीयं माहात्म्यम् ॥

[5]अथ हविषः पुरोनुवाक्यामाह—पुनरपि माहात्म्यमेव प्रपञ्चयते । तत्रायं दृष्टान्तः—यथा लोके बहुक्षीरप्रदाया गोः सकृद्दुग्धेन महान्तौ चरू प्रौढौ कुम्भौ पूरयति एवमत्रापि पृश्नि स्वल्पमपि दत्तमन्नं दिवं च पृथिवीं च साकं लोकद्वयमपि सह पूरयति । अग्नौ ब्राह्मणेषु वा दत्तमन्नं मन्त्रपूतं सत्सहस्रधा फलति । अत एवान्यत्राम्नायते—“यावदेका देवता कामयते यावदेका तावदाहुतिः

बन्तो न मिनान्ति वेधसः । नैतद्भूयो भवति नो कनीयः ॥ ६० ॥ [6]अन्नं प्राणमन्नमपानमाहुः । अन्नं मृत्युं तमु जीवातुमाहुः । अन्नं ब्रह्माणो जरसं वदन्ति । अन्नमाहुः प्रजननं प्रजानाम् ।

प्रथते" इति । तदन्नं संपिबन्तः सम्यग्भक्षयन्तः वेधसः बुद्धिमन्तः न मिनान्ति न हिंसन्ति स्वात्मानमन्नं वा न विनाशयन्ति । दानपूर्वकं भक्षणं सम्यग्भक्षणं तत्कुर्वन्तः पुरुषा अन्नं न हिंसन्ति, दत्तस्यान्नस्य च वर्धमानत्वात् । स्वात्मानमपि न हिंसन्ति, प्रवृद्धस्यान्नस्य च चिरभोक्तृत्वात् । अपि चैतद्भोजनार्थमन्नं न भूयो नापि कनीयः, भूयस्त्वे स्यादजीर्तिः कनीयस्त्वे नास्ति क्षुन्निवृत्तिः । एतदेवाभिप्रेत्य स्मर्यते— 'नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः' इति । एवं दानपुरस्सरं युक्तेन प्रमाणेन भुञ्जानान्पुरुषान् लोकद्वये पालयतीत्यर्थः ॥

[6]अथ हविषो याज्यामाह—सर्वव्यवहारकारणत्वादस्यान्नस्य माहात्म्यमविवादम् । तत्कथमिति तदुच्यते—योयं प्राणवायुरूर्ध्वं संचरति यश्चापानवायुरधः संचरति तावुभावन्नजन्यबलादेव संचरतः । अतस्तयोरन्नात्मकत्वमाहुः । रसवैषम्येण व्याधिद्वारा मारकत्वादन्नं मृत्युमाहुः । तमेवान्नदेवं जीवातुं जीवनौषधमाहुः । तच्च लोके प्रसिद्धम् । ब्रह्माणः आयुर्वेदशास्त्राभिज्ञा ब्राह्मणाः अन्नमेव जरसं वदन्ति जराहेतुमाहुः । केनचिदाहारविशेषेण सहसा अतिपलितत्वप्राप्तिरित्यायुर्वेदप्रसिद्धिः । अन्नमेवेन्द्रियवृद्धिद्वारा प्रजानां प्रजननं उत्पादकमाहुः ॥

[7]मोघमन्नं विन्दते अप्रचेताः । सत्यं ब्रवीमि वध इत्स तस्य । नार्यमणं पुष्यति नो सखायम् । केवलाघो भवति केवलादी । [8]अहं मेघस्स्तनयन्वर्षन्नस्मि । मामदन्त्यहमद्म्यन्यान् ॥ ६१ ॥ अह॑ᳺ सदमृतो भवामि । मदादित्या अधि सर्वे

---

[7]अथ हविष एव विकल्पितामन्यां पुरोनुवाक्यामाह—योऽयमदाता सोऽयं अप्रचेताः प्रकृष्टज्ञानरहितः मोघं व्यर्थमेव अन्नं विन्दते लभते । तदेतत्सत्यं ब्रवीमि न केवलं वैयर्थ्यं किंतु सः अयमदत्तोऽन्नपदार्थः तस्य दानरहितस्य पुरुषस्य वध इत् वध एव वधवद्बाधकमेवेत्यर्थः । तत्र वैयर्थ्यं तावत्स्पष्टीक्रियते—योऽयमदाता सोऽयमनेनार्यमादिकं देवं न पुष्यति, अग्नावाहुत्यभावात् । सखायं अतिथ्यादिरूपं मनुष्यं न पुष्यति दानाभावात् । अतः परलोके अनुपयोगेन वैयर्थ्यम् । वधहेतुत्वं स्पष्टीक्रियते—केवलादी केवलं भुङ्क्ते न तु ददाति सोऽयं केवलाघो भवति पापमेव संपादयति न तु किंचिदपि पुण्यम् सोऽयं वध एव, नरकहेतुत्वात् ॥

[8]अथ हविषो विकल्पितां याज्यामाह—योऽयं मेघः स्तनयन् गर्जन् वर्षंश्च वर्तते सोऽयं मेघोऽपि अहमन्नदेवः अस्मि । अग्नौ हुतस्यान्नस्य मेघरूपेण परिणतत्वात् । अत एव स्मर्यते—"अग्नौ प्रास्ताऽऽहुतिस्सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः" इति । दातारो ये सन्ति ते मामदन्ति सुखेन भक्षयन्ति । अन्यांस्तु दानरहितानहमेवाद्मि विनाशयामि । अहमेव दातॄणां पथ्यं सत् अमृतो भवामि

तपन्ति । [9]दे॒वीं वाच॑मजनयन्त॒ यद्वाग्वद॑न्ती ।
[10]अ॒न॒न्तामन्ता॒दधि॒निर्मि॑तां म॒हीम् । यस्यां दे॒वा
अ॑दधु॒र्भोज॑नानि । एका॑क्षरां द्वि॒पदा॒ꣳ षट्प॑दां च ।

---

अमरणहेतुर्भवामि देवत्वं प्रापयामीत्यर्थः । सर्वेऽप्यादित्या मद्-अन्ननिमित्तत्वादाधिक्येन तपन्ति । अन्नाभावे ते स्वयमेव न जीवेयुः कुतस्तपेयुरित्यर्थः ॥

[9]यदुक्तं सूत्रकारेण—'वाचे वेहतम्' इति, गर्भघातिनी गौर्वेहदित्युच्यते, तस्य पशोः सूक्ते प्रतीकद्वयं दर्शयति—'देवीं वाचमजनयन्त देवाः' इति वपायाः पुरोनुवाक्या । 'यद्वाग्वदन्ति' इति याज्या, तदुभयं 'उत नः प्रिया' इत्यत्र व्याख्यातम् ॥

[10] अथ पुरोडाशस्य पुरोनुवाक्यामाह—देवाः इन्द्रादयः यस्यां वाचि भोजनानि अदधुः संपादितवन्तः । इन्द्राय स्वाहेति मन्त्रेण हुतं भुङ्क्ते, अतो वाङ्निमित्तं तद्भोजनम् । तां वाचं स्वभोजनहेतुं विश्वे सर्वे देवाः उपजीवन्ति । सर्वेषामपि देवानां मन्त्रपुरस्सरं दत्तमेवान्नं जीवनहेतुः । कीदृशीं वाचं? अनन्तां न हि लौकिकवैदिकशब्दानामन्तः पारोऽस्ति । अत एव महाभाष्यकार उदाजहार—"बृहस्पतिश्च वक्ता, इन्द्रश्चाध्येता, दिव्यं च वर्षसहस्रमध्ययनकालः, शब्दपारायणस्यान्तं च न जगाम" इति । अन्तादधिनिर्मितां, पूर्वसृष्टेरन्तः परमेश्वरस्वरूपं, तस्मिन्हि जगल्लीयते तस्मादन्तात्परमेश्वरादाधिक्येन निर्मितां तामेकाक्षरां प्रणवरूपां द्विपदां संस्कृतापशब्दरूपां षट्पदां प्राकृतपैशाचिकादिभाषाभेदेन षड्विधां अत एव महीं महतीम् ॥

वाचं॑ दे॒वा उप॑जीवन्ति॒ विश्वे॑ । [11] वाचं॑ दे॒वा उप॑जीवन्ति॒ विश्वे॑ । वाचं॑ गन्ध॒र्वाः प॒शवो॑ मनु॒ष्याः॑ । वा॒चीमा विश्वा॒ भुव॑ना॒न्यर्पि॑ता ॥ ६२ ॥ सा नो॒ हवं॑ जुषता॒मिन्द्र॑पत्नी । [12] वाग॒क्षरं॑ प्रथम॒जा ऋ॒तस्य॑ । वेदा॑नां मा॒ताऽमृत॑स्य॒ नाभिः॑ । सा नो॑ जु॒षाणोप॑य॒ज्ञमागा॑त् । अव॑न्ती दे॒वी सु॒हवा॑ मे अस्तु ।

[11] अथ पुरोडाशस्य याज्यामाह—पूर्वमन्त्रोक्तरीत्या सर्वे देवा आहुतिकालीनमन्त्ररूपां वाचमेवोपजीवन्ति । गन्धर्वादयश्च वाचैव व्यवहरन्ति । पशूनामपि हम्भारवादिरूपया वाचैव व्यवहारो दृश्यते । तस्मात् इमा विश्वा भुवनानि सर्वलोकनिवासिन एते प्राणिनः वाच्यर्पिता वाचमेवाश्रित्य वर्तन्ते । येयमीदृशी वाक्सेयं इन्द्रपत्नी इन्द्रस्य पालयित्री सती नो हवं अस्मदीयमिदं हविः जुषताम् ॥

[12] अथ हविषः पुरोनुवाक्यामाह—येयं वाक्सैव अक्षरं अविनश्वरं परमात्मस्वरूपं, तत उत्पन्नत्वात् । सा च ऋतस्य यज्ञस्य प्रथमजा प्रथममुत्पादयित्री । मन्त्रैर्हि कर्माण्युत्पाद्यन्ते । अत एवाथर्वणिका आमनन्ति—'तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन्' इति । सा च ऋग्वेदादीनां माता, तेषां वाग्विशेषरूपत्वात् । अमृतस्य नाभिः अमृतत्वं हि देवत्वं । वाचि नह्यते बध्यते मन्त्रपूर्वकानुष्ठानेन तत्प्राप्तिः । सा वाग्देवी जुषाणा प्रीतियुक्ता सती नः अस्मदीयं यज्ञं उपागात् प्राप्नोतु । सा च देवी अवन्ती अस्मान्रक्षन्ती मे मम सुहवा सुखेनाह्वातुं शक्या अस्तु ॥

[13] यामृषयो मन्त्रकृतो मनीषिणः । अन्वैच्छन्देवास्तपसा श्रमेण । तां देवीं वाचꣳ हविषा यजामहे । सा नो दधातु सुकृतस्य लोके । [14] चत्वारि वाक्परिमिता पदानि ॥ ६३ ॥ तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति ।

[13] अथ हविषो याज्यामाह—मन्त्रकृतः संप्रदायप्रवर्तकरूपेण मन्त्राणां कर्मकर्तारः मनीषिणः बुद्धिमन्तः धारणशक्तियुक्ताः ऋषयः वसिष्ठाद्याः श्रमेण तपसा बहुप्रयाससाध्येन तपसा युक्ताः तथा देवाश्च यां वाचं अन्वैच्छन् अनुप्राप्तुमिच्छामकुर्वन् । अत एव स्मर्यते—

युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥

इति । तां तादृशीं वाचं देवीं अनेन हविषा यजामहे । सा च देवी सुकृतस्य कर्मणः फलभूते लोके नः अस्मान् दधातु स्थापयतु ॥

[14] अथ हविष एव विकल्पितां याज्यामाह—येयं वाक्सा परिमिता इयत्तया परिच्छिन्नानि चत्वारि पदानि चतुरोऽवयवान्प्राप्य वर्तते । परा पश्यन्ती मध्यमा वैखरीत्येते चत्वारः पादाः । तानि चत्वार्यपि पदानि ये ब्राह्मणा मनीषिणः शास्त्रज्ञाः ते विदुः न त्वितरे मूढाः । तत्र हेतुरुच्यते—त्रीणि परा पश्यन्ती मध्यमेत्येतानि पदानि गुहायां शरीरमध्ये निहितानि स्थापितानि वर्तन्ते । नेङ्गयन्ति न तु बहिः प्रसरन्ति । वाचस्तुरीयं वैखरीयाख्यं पदं मनुष्याः सर्वे वदन्ति उच्चारयन्ति ॥

तुरीयं वाचो मनुष्या वदन्ति। [15] श्रद्धयाऽग्निस्स-मिध्यते। श्रद्धया विन्दते हविः। श्रद्धां भगस्य

एतच्च शिक्षाकारेण स्पष्टीकृतम्—

आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्।
प्रातस्सवनयोगं तं छन्दो गायत्रमाश्रितम्॥
कण्ठे माध्यंदिनयुगं मध्यमं त्रैष्टुभानुगम्।
तारं तार्तीयसवनं शीर्षण्यं जगतानुगम्॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयते तेषां विभागः पञ्चधा स्मृतः॥
स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः।
इति वर्णविदः प्राहुर्निपुणं तं निबोधत॥

इति। तस्माच्छरीरमध्ये गूढं पादत्रयं मनीषिण एव जानन्ति। मूढास्तुरीयमेव वदन्ति।

[15] यदुक्तं सूत्रकारेण "श्रद्धायै वेहतम्" इति, तस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—शास्त्रार्थे विश्वासातिशयरूपा चित्त-वृत्तिः श्रद्धा। तदभिमानिनी देवताऽपि तन्नामिकैव। श्रद्धया विश्वासातिशयेनानन्यया भक्त्या अयमग्निः सामिध्यते सम्यक्प्रज्वाल्यते। हविश्च श्रद्धया लभ्यते। भगस्य सौभाग्यस्य मूर्धन्युपरि स्थितां श्रद्धां वचसा वाक्येनावेदयामसि। जनानामग्रे सौभाग्यहेतुः श्रद्धेति प्रख्यापयामः॥

मूर्धनि । वचसाऽऽवेदयामसि । [16]प्रियꣳ श्रद्धे ददतः । प्रियꣳ श्रद्धे दिदासतः । प्रियं भोजेषु यज्वसु ॥ ६४ ॥ इदं म उदितं कृधि । [17]यथा देवा असुरेषु । श्रद्धामुग्रेषु चक्रिरे । एवं भोजेषु यज्वसु । अस्माकमुदितं कृधि । [18]श्रद्धां देवा यजमानाः । वायुगोपा उपासते । श्रद्धाꣳ हृदय्ययाऽऽकूत्या । श्रद्धया हूयते हविः । [19]श्रद्धां प्रातर्हवा-

[16]अथ वपाया याज्यामाह—हे श्रद्धे इदानीं ददतो मे प्रियं भवतु अभीष्टं सिध्यतु । इतः परमपि दातुमिच्छतो मे प्रियं भवतु । भोजेषु भोगपरेषु जन्तुषु यज्वसु यजमानेषु च प्रियं भवतु । इदमनन्तरोक्तं यज्वसु मे प्रियमुदितं कृधि अत्यधिकं कुरु ॥

[17]अथ पुरोडाशस्य पुरोनुवाक्यामाह—यथा लोके देवा उग्रेष्वसुरेषु श्रद्धां चक्रिरे अवश्यमेते हन्तव्या इति दृढामिच्छां कृतवन्तः । एवमस्माकं फलभोगेषु तत्साधकेषु यज्वस्वपि प्रियमुदितं कुरु ॥

[18]अथ पुरोडाशस्य याज्यामाह—हे देवाः इन्द्रादय एते यजमानाः वायुगोपाः स्वकीयप्राणरक्षकास्सन्तः श्रद्धामुपासते सेवन्ते । उक्तार्थ एव स्पष्टीक्रियते—हृदय्यया हृदये भवया आकूत्या संकल्पक्रियया श्रद्धामुपासते अत्यादरेणोपासत इत्यर्थः । हविरपि श्रद्धयैव हूयते ॥

[19]अथ हविषः पुरोनुवाक्यामाह—श्रद्धां श्रद्धाख्यां देवीं प्रातर्हवामहे प्रातःकाले समाह्वयामः । तथा मध्यंदिनं परि मध्यंदिन-

महे ॥ ६५ ॥ श्रद्धां मध्यंदिनं परि । श्रद्धाꣳ सूर्यस्य निम्रुचि । श्रद्धे श्रद्धापयेह मा । [20]श्रद्धा देवानधिवस्ते । श्रद्धा विश्वमिदं जगत् । श्रद्धा कामस्य मातरम् । हविषा वर्धयामसि । [21]ब्रह्म जज्ञानं प्रथमं पुरस्तात् । वि सीमतस्सुरुचो वेन आवः । स बुध्निया उपमा अस्य विष्ठाः ॥ ६६ ॥

समीपमपि श्रद्धामाह्वयामः । सूर्यस्य निम्रुचि अस्तमयवेलायामपि श्रद्धामाह्वयामः । हे श्रद्धे देवि इह कर्मणि मां श्रद्धापय विश्वासयुक्तं कुरु ॥

[20]अथ हविषो याज्यामाह—इयं श्रद्धा देवी देवानधिवस्ते देवेष्वधिवसति । विश्वं सर्वमिदं जगत् श्रद्धामयं, इच्छाविश्वासव्यतिरेकेण कस्यापि व्यवहारस्याभावात् । कामस्य मातरं काम्यमानफलस्योत्पादिकां श्रद्धां देवीं अनेन हविषा वर्धयामसि अभिवृद्धां संतुष्टां कुर्मः ॥

[21]यदुक्तं सूत्रकारेण "ब्रह्मण ऋषभम्" इति तस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह—यदेतज्जगत्कारणं ब्रह्म 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतिप्रसिद्धं तदेतत् प्रथमं सृष्टयादौ जज्ञानं जगदाकारेणोत्पद्यमानं सत् पुरस्तात् पूर्वस्यां दिशि वेनः कमनीय आदित्यो भूत्वा सुरुचः सुष्ठु दीप्यमानः सीमतः पूर्वदक्षिणपश्चिमोदग्दिग्विशेषसीम्नो विभज्य आवः आवृणोत्। स वेनः आदित्यो बुध्नियाः बुध्नं मूलं तत्र भवाः आकाशवाय्वग्निजलपृथिव्यः विष्ठाः विभज्यावस्थिता अकरोदिति शेषः । तथा सतश्च विद्यमानस्य गिरिनदीसमुद्रादेः अस-

सुतश्च योनिमसंतश्च विवः । [22]पिता विराजामृषभो रयीणाम् । अन्तरिक्षं विश्वरूप आविवेश । तमर्कैरभ्यर्चन्ति वत्सम् । ब्रह्म सन्तं ब्रह्मणा वर्धयन्तः । [23]ब्रह्म देवानजनयत् । ब्रह्म विश्वमिदं जगत् । ब्रह्मणः क्षत्रं निर्मितम् । ब्रह्म ब्राह्मण आत्मना । [24]अन्तरस्मिन्निमे लोकाः ॥ ६७ ॥

तश्च अविद्यमानस्य योनिं कारणं प्रमाणं भ्रान्तिरूपं विवः विवृतवान् सर्वजगद्व्यवस्थां निर्मितवानित्यर्थः ॥

[22]अथ वपाया याज्यामाह—योऽयं वेन आदित्यः पूर्वमुक्तः सोऽयं विराजां विशेषेण राजमानानां रयीणां धनानां पिता पालयिता, ऋषभः श्रेष्ठः, विश्वरूपः पूर्वाह्णादिषु वसन्तादिषु कालविशेषेषु च बहुरूपः तादृशोऽयमिदमन्तरिक्षमाविवेश प्रतिदिनं प्रविशति । ब्रह्म सन्तं परब्रह्मस्वरूप एव भूत्वाऽवस्थितं ततं आदित्यं ब्रह्मणा मन्त्रेण वर्धयन्तो ब्राह्मणा अर्कैः अर्चनीयैः अभ्यर्चन्ति अभितः पूजयन्ति । तत्र दृष्टन्तः—वत्सं यथा दोग्धुकामाः पुरुषा वत्समुपलालयन्ति एवं फलकामा आदित्यमभ्यर्चन्ति ॥

[23]अथ पुरोडाशस्य पुरोनुवाक्यामाह—यज्जगत्कारणं ब्रह्म तदेव देवान् इन्द्रादीन् जनयत् । तथैव तद्ब्रह्माभ्यदपि विश्वं सर्वमिदं जगत् अजनयत् । ब्रह्मणः सकाशात् क्षत्रं निर्मितं क्षत्रियजातिर्निर्मिता । यत्परं ब्रह्म तत् आत्मना स्वस्वरूपेणैव ब्राह्मणः अभवत् । अस्ति हि ब्राह्मणशरीरे परब्रह्मण आविर्भावविशेषः । अत एवाध्यापनादावधिक्रियते ॥

[24]अथ पुरोडाशस्य याज्यामाह—अस्मिन् ब्रह्मणि अन्तः मध्ये इमे

अन्तर्विश्वमिदं जगत् । ब्रह्मैव भूतानां ज्येष्ठम् । तेन कोऽर्हति स्पर्धितुम् । [25] ब्रह्मन्देवास्त्रयस्त्रि॑ꣳ- शत् । ब्रह्मन्निन्द्रप्रजापती । ब्रह्मन्ह विश्वा भूतानि । नावीवान्तस्समाहिता । [26] चतस्र आशाः प्रचर-

भूरादयो लोकाः अवस्थिताः । तथैव अन्तः मध्ये विश्वं सर्वमिदं जगत्स्थावरजङ्गमरूपमवस्थितम् । तस्मात्कारणाद्ब्रह्मैव भूतानामाकाशादिपञ्चमहाभूतानां प्राणिनां च मध्ये ज्येष्ठं अतिशयेन श्रेष्ठं प्रशस्तं च । तेन तादृशेन ब्रह्मणा को नामान्यः पुरुषः स्पर्धितुमर्हति, तत्समानस्य स्पर्धा युक्ता, न चास्ति कश्चित्समानः । अत एव श्वेताश्वतरशाखायामभिधीयते "न तत्समश्चाभ्यधिकश्च दृश्यते" इति ॥

[25] अथ हविषः पुरोनुवाक्यामाह—हे ब्रह्मन्यथोक्ते ब्रह्मणि त्रयस्त्रिंशद्देवाः "ये देवा दिव्येकादश स्थ" इति मन्त्रोक्ताः समाहिताः । तथा ब्रह्मन् परब्रह्मण्येव देवस्वामिनाविन्द्रप्रजापती समाहितौ । तथा ब्रह्मण्येव विश्वा भूतानि सर्वाणि स्थावरजङ्गमान्यन्तः समाहितानि सम्यगवस्थितानि । तत्र दृष्टान्तो नावीवेति । यथा समुद्रनद्यादितरणवेलायां चेतनाचेतनानि वस्तूनि नौमध्येऽवस्थाप्यन्ते तद्वत् ॥

[26] अथ हविषो याज्यामाह—यथोक्ते ब्रह्मणि चतस्र आशाः चतुर्विधाः प्राच्यादिदिशः प्रति अग्नय आहवनीयाद्याः प्रचरन्तु प्रकर्षेण वर्तन्ताम् । पूर्वस्यां दिश्याहवनीयः दक्षिणस्यां दिश्यन्वाहार्यपचनः पश्चिमायां दिशि गार्हपत्यः उदीच्यां दिश्याग्नीध्रीयः ।

न्त्वग्नयः। इमं नो यज्ञं नयतु प्रजानन्। घृतं पिन्वन्नजरꣳ सुवीरम् ॥ ६८ ॥ ब्रह्म समिद्भवत्याहुतीनाम्। [27]आ गावो अग्मन्नुत भद्रमक्रन्। सीदन्तु गोष्ठे रणयन्त्वस्मे। प्रजावतीः पुरुरूपा इह स्युः। इन्द्राय पूर्वीरुषसो दुहानाः। [28]इन्द्रो यज्वने पृणते च शिक्षति। उपेद्दाति न स्वं मुषायति।

तथाविधः सर्वाधारपरमात्मा नः अस्मदीयं इमं यज्ञं प्रजानन् प्रकर्षेणानुसंदधानो नयतु समाप्तिं प्रापयतु। किं कुर्वन्? अजरमविनश्वरं सुवीरं शोभनापत्यहेतुभूतमिदं घृतमाहुतिरूपं पिन्वन् पिबन्। किं बहुना, आहुतीनामस्माभिरनुष्ठीयमानानां ब्रह्म समिद्भवति परब्रह्मैव सम्यक्प्रकाशकं भवति।

[27]यदुक्तं सूत्रकारेण—"आ गावो अग्मन्नित्युपहोमाः" इति। तत्राष्टानामृचां मध्ये प्रथमामाह। या एता गावः सन्ति ता आग्मन् इहागच्छन्तु। उत अपिच भद्रं कल्याणं अक्रन् कुर्वन्तु। अस्मदीये गोष्ठे सीदन्तु तिष्ठन्तु। अस्मे अस्मान् रणयन्तु रमयन्तु। इह अस्मद्गृहे प्रजावतीः बहुवत्सोपेताः पुरुरूपाः श्वेतकृष्णादिरूपेण बहुरूपाः स्युः भवेयुः। उषसः उषःकालात् पूर्वीः पूर्वासु रात्रिष्विन्द्राय इन्द्रार्थं सान्नाय्यमाशिरं च दुहानास्तिष्ठन्तु।

[28]अथ द्वितीयामाह—योऽयं यज्वा यागानुष्ठायी, यश्च पृणन् यागकाले हविः पूरयन्वर्तते, अथवा गां ददाति तयोरुभयोरर्थे इन्द्रः शिक्षति फलं ददाति। उपेत् पुनरपि ददाति। स्वं

भूयो॑ भूयो र॒यिमि॒दस्य॑ व॒र्धय॑न्न्। अभि॑न्ने खि॒ल्ले नि॑दधाति देव॒युम्। [29] न ता॑नशन्ति॒ न ता अर्वा॑ ॥ ६ १ ॥
[30] गावो॒ भगो॒ गाव॒ इन्द्रो॑ मे अच्छात्। गाव॒स्सो॑मस्य प्र॒थमस्य॑ भ॒क्षः। इ॒मा या गाव॒स्स जंनास॒

आत्मानं न मुषायति न मुष्णाति। यजमानं प्रति भूयो भूयो ददानोऽपि कदाचिदपि न तिरोभवतीत्यर्थः। अस्य यजमानस्य भूयो भूयः पौनःपुन्येन रयिमित् धनमेव वर्धयन् देवयुं देवानात्मन इच्छन्तं यजमानं अभिन्ने स्वनिवासस्थाने भेदरहिते खिल्ले-खिलीभूते यागरहितैरगम्ये निदधाति स्थापयति। स्वकीयलोक एव तं गमयतीत्यर्थः।

[29] अथ तृतीयाचतुर्थ्यो: प्रतीके दर्शयाति—"न ता नशन्ति न दभाति तस्करः" इति तृतीया। "न ता अर्वा रेणुककाटोः" इति चतुर्थी। एतच्चोभयम् "उत नः प्रिया" इत्यत्र व्याख्यातम्।

[30] अथ पञ्चमीमाह—या गावस्ता भगः सौभाग्यम्। सतीषु हि गोषु क्षीरादिसंपत्तिलक्षणसौभाग्यं भवति। अच्छात् अच्छा निर्मला गाव एव मे मम इन्द्रः स्वामी, यथा स्वामी पालयति तथा निर्मला गावो मां पालयन्तीत्यर्थः। तथा गाव एव प्रथमस्य मुख्यस्य सोमस्याभिषुतस्य भक्षो भजनीयः। सोमो हि दध्यादिश्रपणार्थं गोभजनं करोति। या इमा गावः सन्ति, हे जनासः मनुष्याः ता गाव एव स इन्द्रः। इन्द्रो हि गाः पालयति। तस्मादभेदोपचारः। हृदा हृत्कमलनिष्ठेन मनसा चिन्मनसैव गोरक्षार्थमिन्द्रमिच्छामि ॥

इन्द्रः । इच्छामीद्धृदा मनसा चिदिन्द्रम् । [31] यूयं गावो मेदयथा कृशं चित् । अश्लीलं चित्कृणुथा सुप्रतीकम् । भद्रं गृहं कृणुथ भद्रवाचः । बृहद्वो वय उच्यते सभासु । [32] प्रजावतीस्सूयवसꣳ रिशन्तीः । शुद्धा अपस्सुप्रपाणे पिबन्तीः । मा वस्तेन ईशत माऽघशꣳसः । परि वो हेती रुद्रस्य

---

[31] अथ षष्ठीमाह—हे गावः यूयं कृशं चित् कृशमपि पुरुषं वत्सं वा मेदयथा मेदस्विनं पुष्टं कुरुत । अश्लीलं चित् अश्लीलं कुरूपमपि पुरुषं सुप्रतीकं कृणुथ घृतादिना पोषयित्वा शोभनावयवं कुरुत । भद्रवाचः कल्याणवाचो गावो गृहं भद्रं कृणुथ हम्भारवयुक्ताभिर्गोभिर्वत्सैश्च संपूर्णं गृहं रमणीयं भासते । हे गावः वः युष्मदीयं वयः अन्नं क्षीरघृतादिकं सभासु यज्ञशालासु बृहदुच्यते महत्त्वेन प्रस्तूयते ॥

[32] अथ सप्तमीमाह—एता गावः प्रजावतीः वत्सोपेताः सूयवसं शोभनं तृणादिकं रिशन्तीः भक्षयन्त्य इत्यर्थः । सुप्रपाणे सुष्ठु प्रकर्षेण पातुं शक्ये तटाकादौ शुद्धा, अपः पिबन्तीः विमलं जलं पिबन्त्यो वर्तन्तामिति शेषः । हे गावः स्तेनः चोरो वो मेशत युष्मानपहर्तुमीश्वरो मा भूत् । अघशꣳसः अघं पापं शंसति मारय ताडयेत्यादिभिर्भर्त्सनं करोतीत्यघशंसः सोऽपि वो मेशत । तथा रुद्रस्य क्रूरस्य देवस्य हेतिरायुधं वः परिवृज्यात् युष्माकं परितो वर्जनं करोतु ॥

वृजयात् । [33]उपेदमुपपर्चनम् । आसु गोषूपपृच्यताम् । उपर्षभस्य रेतसि । उपेन्द्र तव वीर्ये ॥७०॥

चरामि कनीयोऽन्यानर्पिता पदानि यज्वसु ह्वामहे विष्ठा लोकास्सुवीरमर्वा पिबन्तीष्षट् च ॥ ८ ॥

[1]ता सूर्याचन्द्रमसा विश्वभृत्तमा महत् । तेजो

[33] अथाष्टममाह—इदं च वक्ष्यमाणं सर्वं उपपृच्यतां समीपे युज्यताम् । किं किमिति तदुच्यते—उपपर्चनं समीपे संपर्कयोग्यतृणादिकं आसु गोषूपपृच्यतां समीपे युज्यताम् । ऋषभस्य रेतसि उपपृच्यतां गर्भ इति शेषः । हे इन्द्र तव वीर्ये त्वदीये रक्षणसामर्थ्ये उपपृच्यतां गाव इति शेषः ।

अत्र विनियोगसंग्रहः—

अहमद्यावन्यशाखाकथितामार्थवेहति ।
देवीं वाचे वेहति स्याच्छ्रद्धे श्रद्धार्थवेहति ॥
ब्रह्म ब्रह्मार्थ ऋषभ आ गाव उपहोमकाः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयाष्टके
अष्टमप्रपाठके अष्टमोऽनुवाकः.

---

[1] अष्टमेऽन्नार्थपश्वादीनां सूक्तान्यभिहितानि । नवमे शुक्लकृष्णपश्वादीनां सूक्तान्युच्यन्ते । यदुक्तं सूत्रकारेण—" सूर्याचन्द्र-

वसुमद्राजतो दिवि । सामात्माना चरतस्साम-चारिणा । ययोर्व्रतं न ममे जातु देवयोः । [2]उभा-वन्तौ परियात अम्यौं । दिवो न रश्मीᳪस्तनुतो व्यर्णवे । उभा भुवन्ती भुवना कविक्रतू । सूर्या

मोम्यां यमौ श्वेतं च कृष्णं चैकयूपे" इति । यमौ एकस्मिन्गर्भे सहोत्पन्नौ । तयोः पश्वोस्सूक्ते वपयोः पुरोनुवाक्यामाह । ययोः सूर्याचन्द्रमसोर्देवयोः संबन्धि व्रतं कर्म जातु कदाचिदपि न ममे कश्चिदपि मातुं न शक्तः । एतदीयं कर्मैतावता फलेन युक्तमिति न कोऽपि परिच्छेत्तुं शक्नोति । तौ तथाविधौ सूर्याचन्द्रमसौ दिवि राजतः द्युलोके दीप्येते । कीदृशौ? विश्वभृत्तमा आतिशयेन विश्वस्य भर्तारौ पोषकौ अत एव महत् महान्तौ तेजः तेजस्विनौ वसुमत् धनवन्तौ । सामशब्देन सामभेदाद्युपायेषु चतुर्षु प्रथमोपायोऽभिधीयते । तदात्मकौ प्रजापालने सामोपायप्रधानावित्यर्थः । अत एव सामचारिणौ साम्नोपायेन सर्वजगदनुग्राहकप्रकाशरूपेण चरणशीलौ चरतः परिभ्रमतः ॥

[2]अथ वपयोर्याज्यामाह—उभावन्तौ पृथिव्याः पूर्वः पश्चिमश्चेत्येताववसानभागौ अम्यों गत्या परियातः परिक्रमणं कुरुतः दिवो न दिवीव अर्णवे समुद्रसमानेऽन्तरिक्षे रश्मीन् वितनुतः प्रसारयतः भुवना भुवन्ती लोकान्भावयन्तावुत्पादयन्तौ कविक्रतू कविर्मेधावी, क्रतुः कर्ता, कवी च तौ क्रतू च कविक्रतू हतामती हता विनाशिता प्राणिनाममतिरन्धकारनिमित्तमज्ञानं याभ्यां तौ हतामती सूर्या न चन्द्रा सूर्यश्चन्द्रश्चेत्येतावुभौ चरतः संचारं कुरुतः ॥

न चन्द्रा चरतो हतामती । [3]पती द्युमद्विश्वविदा उभा दिवः । सूर्या उभा चन्द्रमसा विचक्षणा ॥ विश्ववारा वरिवोभा वरेण्या । ता नोऽवतं मतिमन्ता महिव्रता । [4]विश्ववपरी प्रतरणा तरन्ता । सुवर्विदा दृशये भूरिरश्मी । सूर्या हि चन्द्रा वसु त्वेषदर्शता । मनस्विनोभाऽनुचरतो नु सं दिवम् । [5]अस्य श्रवो नद्यस्सप्त बिभ्रति । द्यावा क्षामा पृ-

---

[3]अथ पुरोडाशस्य पुरोनुवाक्यामाह—द्युमत् द्युमन्तौ दीप्तिमन्तावुभौ देवौ विश्वविदा सर्वज्ञौ दिवः पती द्युलोकस्य पालकौ वर्तेते । सूर्याचन्द्रमसा सूर्याचन्द्रमसेत्येतावुभौ विचक्षणा कुशलौ । विश्ववारा विश्वेषां शत्रूणां निवारयितारौ । वरिवा वरिवस्यमानौ सर्वैः परिचर्यमाणावुभौ देवौ वरेण्या वरणीयौ मतिमन्तौ अत्यन्तबुद्धियुक्तौ महिव्रता महता व्रतेन कर्मणा युक्तौ । ईदृशौ तावुभौ नोऽस्मानवतं रक्षतम् ॥

[4]अथ पुरोडशस्य याज्यामाह—विश्ववपरी विश्वस्मिञ्जगति रश्मीनावप्तारौ विस्तारयितारौ प्रतरणा आपदां प्रकर्षेण तारयितारौ तरन्ता आकाशसमुद्रं तरन्तौ सुवर्विदा स्वर्गस्य लम्भयितारौ दृशये सर्वलोकस्य दर्शनाय भूरिरश्मी प्रभूतदीप्ती सूर्या हि चन्द्रा सूर्यश्चन्द्रश्चेत्येवं प्रसिद्धौ वसु वासयितारौ त्वेषदर्शता दीप्त्या दर्शनीयौ मनस्विना दृढेन मनसा युक्तौ उभा देवावुभौ नु क्षिप्रं दिवं द्युलोकमनुसंचरतः ॥

[5]अथ हविषः पुरोनुवाक्यामाह—हे इन्द्र त्वं अस्मे अस्मदर्थं

थिवी दर्शतं वपुः । अस्मे सूर्याचन्द्रमसाऽभिचक्षे । श्रद्धे कमिन्द्र चरतो विचर्तुरम् ॥ ७२ ॥ [6]पूर्वापरं चरतो माययैतौ । शिशू क्रीडन्तौ परियातो अध्वरम् । विश्वान्यन्यो भुवनाऽभिचष्टे । ऋतून्

सूर्याचन्द्रमसा एतौ सूर्याचन्द्रमसावभिचक्षेऽभितः कथयामि । श्रद्धे श्रद्धार्थं कं सुखार्थं च विचर्तुरं विशेषेण त्वरा यथा भवति तथा चरतः एतावुभौ संचरतः । अस्य तवेन्द्रस्य श्रवः श्रवणीयं दर्शतं दर्शनीयं च वपुः शरीरं सप्त नद्यः गङ्गायमुनाद्याः सप्तसंख्याकास्सरितः द्यावा क्षामा पृथिवी क्षामशब्दोऽन्तरिक्षमभिधत्ते, त्रयो लोकाश्च बिभ्रति धारयन्ति । अयमर्थः—यदेतद्वृष्टिनिमित्तं जलं तदेतदिन्द्रेणोत्पादितत्वादिन्द्रस्य शरीरं, तच्च सर्वेषां प्राणिनां प्रियत्वाच्छ्रवणीयं दर्शनीयं च । तदिदं जलरूपं शरीरं सप्तनद्युपलक्षिताः सर्वा नद्यः समुद्रास्त्रयो लोकाश्च धारयन्ति । न हि जलमन्तरेण लोकत्रयव्यवहारः सिध्यतीति ॥

[6]अथ हविषो याज्यामाह—एतौ सूर्याचन्द्रमसौ मायया परमेश्वरस्य शक्त्याऽनुगृहीतौ पूर्वापरं भूमेः प्रकपश्चिमभागौ प्रति चरतः परिभ्रमणं कुरुतः । शिशू बालकाविव क्रीडन्तौ अध्वरं कस्यापि हिंसा यथा न भवति तथा परियातः । अथवा अध्वरमस्माभिरनुष्ठीयमानं यज्ञं प्राप्नुतः । उभयोर्मध्येऽन्य एक आदित्यो विश्वानि भुवनानि-अभिचष्टे सर्वतः प्रकाशयति । अन्यश्चन्द्रः प्रतिपदादितिथिशुक्लकृष्णपक्षचैत्रादिमासद्वारा ऋतून्विदधत्पुनः पुनर्जायत उदयं गच्छतीत्यर्थः ॥

न्यो विदधज्जायते पुनः । [7]हिरण्यवर्णाश्शुचयः पावका यासाꣳ राजा । यासां देवाश्शिवेन मा चक्षुषा पश्यत । आपो भद्रा आदित्पश्यामि । [8]नासदासीन्नो सदासीत्तदानीम् । नासीद्रजो नो

[7]यदुक्तं सूत्रकारेण—"अदूभ्यो वैहतम्" इति । तस्य पशोः सूक्ते षण्णामृचां प्रतीकानि दर्शयति—'हिरण्यवर्णाः शुचयः पावकाः' इति वपायाः पुरोनुवाक्या । 'यासां राजा वरुणः' इति याज्या । 'यासां देवा दिवि कृण्वन्ति भक्षम्' इति पुरोडाशस्य पुरोनुवाक्या । 'शिवेन मा चक्षुषा पश्यत' इति याज्या । 'आपो भद्रा घृतमिदाप आसुः' इति हविषः पुरोनुवाक्या । 'आदित्पश्याम्युत वा शृणोमि' इति याज्या । एतत्सर्वं 'हिरण्यवर्णाः शुचयः पावकाः' इत्यनुवाके व्याख्यातम् ॥

[8]यदुक्तं सूत्रकारेण—"तत्र सलिलमुपजुहुयात्" इति । तत्र पूर्वोक्ते कर्मणि नासदासीयसूक्तगतैर्मन्त्रैर्जलद्रवेणोपहोमाः कर्तव्या इत्यर्थः । तस्मिन्सूक्ते प्रथमामृचमाह । यदा पूर्वसृष्टिः प्रलीनोत्तरसृष्टिश्च नोत्पन्ना तदानीं सदसती द्वे अपि नाभूताम् । नामरूपविशिष्टत्वेन स्पष्टं प्रतीयमानं जगत्सच्छब्देनोच्यते । नरविषाणादिसमानं शून्यमसदित्युच्यते । तदुभयं नासीत् । किंतु काचिदव्यक्तावस्थाऽऽसीत् । सा च विस्पष्टत्वाभावान्न सती, जगदुत्पादकत्वेन सद्भावान्नाप्यसती । नो सदासीदिति यत्संग्रहेणोक्तं तदेव प्रपञ्चयते—नासीद्रजः रजश्शब्देन सत्त्वरजस्तमोगुणत्रयमुपलक्ष्यते, तन्नयं नासीत् । नो व्योम, आकाशवाय्विना व्योमशब्देन भूत-

व्यो॑मा प॒रो यत् । किमाव॑रीवः॒ कुह॒ कस्य॒ शर्म॒न्न् ॥ अम्भः॒ किमा॑सी॒द्गह॑नं ग॒भीरम् । [9]न मृ॒त्युर॒मृतं॒ तर्हि॒ न । रात्र्या॒ अह्न॑ आसीत्प्र॒के॒तः । आनी॑द-

पञ्चकमुपलक्ष्यते, तदपि नासीत् । यथोक्तगुणत्रयपञ्चभूतापेक्षयाऽपरः पदार्थोऽन्यो गिरिनदीसमुद्रादिको यत् यः दृश्यते सोऽपि नासीत् । यथा भूतानि नासंस्तद्वद्भौतिकमपि नासीदित्यर्थः । अनेन भूतभौतिकगुणत्रयनिषेधेन ब्रह्माण्डस्य निषेधः संपन्नः । अण्डाद्बहिर्महत्तत्त्वाद्यावरणानि पौराणिका वदन्ति । तदेतदावरणजातमाक्षेपवाचिना किंशब्दत्रयेण निषिध्यते । आवरणस्य दृष्टिविषयभूतं किंचिदाव्रियमाणमपेक्षितम् । तत्राण्डाभावात् किमावरीवः किं नाम वस्तु तैरावरणैराव्रियेत । अतः सावरणकस्यासंभवादावरणमपि न संभवतीत्यर्थः । कुहेति देशाक्षेपः । कस्य शर्मन्निति निमित्ताक्षेपः । कुत्र देशे कस्य भोक्तुः सुखनिमित्तमिदमावरणं स्यात्, न त्वस्ति तदा कश्चिद्देशो नापि सुखस्य भोक्ता कश्चिद्विद्यते । अत्र कश्चिन्मन्दोऽवान्तरप्रलयविषयां "आपो वा इदमग्रे सलिलमासीत्" इति श्रुतिं श्रुत्वा महाप्रलयेऽपि तथाविधं जलमस्तीति भ्राम्यति तद्भ्रमव्युदासाय जलं निषिध्यते । गहनं प्रवेष्टुमशक्यं गभीरं अगाधत्वेनावस्थातुमप्यशक्यं यदम्भस्तत् किमासीत् तदपि नासीदित्यर्थः ॥

[9]अथ द्वितीयामृचमाह । तर्हि तस्मिन्महाप्रलयकाले प्राणिनां मृत्युः नासीत्, तेषामेवाभावात् । अत एव अमृतं जीवनमपि नासीत् । रात्रियाः प्रकेतश्चिह्नं चन्द्रनक्षत्रादि, अह्नः प्रकेतः सूर्यः

**वातꣳ स्वधया तदेकम् । तस्माद्धान्यं न परः किंच नास । [10]तम आसीत्तमसा गूढमग्रे प्रकेतम् । स-**

---

तदुभयमपि नासीत् । किंतु तत् सर्वोपनिषत्प्रसिद्धमेकं ब्रह्म वस्तु स्वधया स्वस्मिन्नाश्रितया सर्वजगत्कारणरूपया मायया सहितं आनीत् चेष्टितवत् । नात्र चलनं चेष्टा, किंतु सद्भावमात्रमित्य भिप्रेत्यावातमिति विशेष्यते । वायुरहितं निश्चलमित्यर्थः । तस्मादे-कस्माद्ब्रह्मणः अन्यत् किंच किमपि परमुत्कृष्टं नास नैवासीत् । जगतो निषिद्धत्वान्निकृष्टं पूर्वमेव निराकृतम् । तस्मादुत्कृष्टं निकृष्टं च किमपि ब्रह्मव्यतिरिक्तं नासीत् ॥

[10] अथ तृतीयामाह । तमश्शब्देनाविद्यामायाशक्त्यादिशब्दवाच्यं जगद्विकारोपादानं मूलाज्ञानमुच्यते । यथा तमः पदार्थानावृणोत्ये-वमिदमपि ब्रह्मतत्त्वमावृणोतीति तमश्शब्देन व्यवहारः । तादृशं जगद्विकारनिष्पादनक्षमं ब्रह्मण्याश्रितं किंचित्तम आसीत् । तेन तमसा सर्वं जगद्गूढं, यथा मृत्पिण्डे घटो गूढः यथा वा बीजे वृक्षो गूढस्तद्वत् । अत एव प्रकेतं प्रकर्षेण ज्ञातुमशक्यम् । तथा च मनुना स्मर्यते—

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ इति ॥

तत्र दृष्टान्तः सलिलमिति । यथा वर्षे पतिता वर्षोपलाः सलिल-मात्रत्वेनावशिष्यन्ते तथा सर्वं जगदिदं तम आसीत् तमोमात्ररूपे-णावशिष्टमित्यर्थः । अत्र हि काणादादयोऽसत्कार्यवादिनः कारणे पूर्व-मविद्यमानमेव कार्यमुत्पद्यत इत्याहुः । सत्कार्यवादिनस्तु सांख्या-

लिलऽऽ सर्वमा इदम् । तुच्छेनाभ्वपिहितं यदासीत् । तमसस्तन्महिना जायतैकम् । [11]कामस्तदग्रे समवर्तताधि ॥ ७४ ॥ मनसो रेतः प्रथमं

दयः पूर्वं विद्यमानमेव कार्यमव्यक्तं सत्कारणव्यापारेण व्यक्तीभवतीत्याचक्षते । तत्र सत्कार्यवादिनां मतमेव तमसा गूढमिति श्रुत्याऽङ्गीकृतम् । आ समन्ताद्भवत्युत्पद्यत इत्याभूज्जगत् तदेतत्तुच्छेनापिहितम् । तत्त्वज्ञानमात्रेण निवर्त्यत्वात्तत्कारणं मूलाज्ञानं तुच्छं तेनापिहितं प्रलयकाल आच्छादितम् । तादृशं यज्जगदासीत्तज्जगदव्यक्तं सत्पूर्वोक्तादज्ञानरूपात्तमसः सकाशान्महिना महत्त्वेनाभिव्यक्तजगद्रूपेण अजायत उत्पन्नम् । तदिदमज्ञानदृष्ट्या जगदाकारेण भासमानमपि परमार्थत एकं ब्रह्मैव ॥

[11]अथ चतुर्थीमाह । परब्रह्मसंबन्धिनो मनसः प्रथमं रेत आद्यं कार्यं यदासीत्तत्कार्यमग्रे सृष्ट्यादौ कामो भूत्वाऽधिसमवर्तत आधिक्येनाविरभूत् । अयमर्थः—यदेतदेकमेवाद्वितीयं 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्येवंरूपं वस्तु सृष्टेः पूर्वं तमसाऽऽवृतमासीत् तस्य तमोविशिष्टस्य ब्रह्मणः सिसृक्षारूपं यन्मन आदावुत्पन्नं तस्य मनसः काम एव प्रथमकार्यभूतः पदार्थः । स च काम उपनिषदि स्पष्टमाम्नातः—"सोऽकामयत बहु स्यां प्रजायेय" इति । एकोऽद्वितीयरूपोऽहमेव बहुविधो भवेयम् । तत्रायमुपायः पूर्वमवस्थितमद्वितीयरूपमनुपमृद्य प्रकर्षेण मायाकल्पितजगद्रूपेणोत्पद्येयेति तस्य वाक्यस्यार्थः । स च कामः सतः बन्धुरिदानीं सत्त्वेन प्रतीयमानस्य भूतभौतिकरूपस्य जगतोऽसच्छब्दाभिधेये

यदासीत् । सतो बन्धुमसति निरविन्दन् । हृदि प्रतीष्या कवयो मनीषा । [12]तिरश्चीनो विततो रश्मिरेषाम् । अधस्स्विदासी३दुपरिस्विदासी३त् ।

तमस्यव्यक्ते बन्धनहेतुः । कामो ह्यज्ञाने सर्वं व्यवहारं बध्नाति। यथा निद्राणे पुरुषे समुत्पन्ना चित्तवृत्तिर्नानाविधं स्वप्नव्यवहारं बध्नाति, यथा वा जागरणेऽप्यत्यन्तमलभ्ये विषये समुत्पन्ना तृष्णा सुखदुःखपर्यन्तं मनोराज्यरूपं व्यवहारं बध्नाति, एवमयं परमेश्वरस्य कामः देवतिर्यङ्मनुष्यादिसर्वव्यवहारं बध्नाति । कवयो विद्वांसो वेदान्तपारं गता हृदि हृदयकमले मनीषा स्वबुद्ध्या प्रतीष्य विचार्य असति अव्यक्ते तमसि कामं सत उत्पत्स्यमानस्य जगतो बन्धुं बन्धनहेतुं निरविन्दन् निश्चितवन्तः । कामस्य सर्वव्यवहारहेतुत्वं वाजसनेयिनः समामनन्ति—"अथो खल्वाहुः काममय एवायं पुरुषः" इति । व्यासोऽपि स्मरति—

"कामबन्धनमेवेदं नान्यदस्तीह बन्धनम्" इति ।

अस्मदनुभवोऽपि तथा दृश्यते । सर्वो हि पुरुषः प्रथमं किंचित्कामयित्वा तदर्थं प्रयतमानः सुखं दुःखं वा लभते । तस्माच्छ्रुतिस्मृत्यनुभवासिद्धत्वात्काम एव सर्वव्यवहारहेतुरिति विदुषां निश्चयः ॥

[12] अथ पञ्चमीमाह । रश्मिः सूर्यरश्मिसमानः कश्चित्स्वयंप्रकाशश्चैतन्यपदार्थः । एषां भूतभौतिकरूपाणां जगद्वस्तूनां मध्ये तिरश्चीनः तिर्यग्वर्तमानो विततो व्याप्तः स चैतन्यरूपः परमात्माऽमीषां पदार्थानामधोभागेऽवस्थितः किं वोपरिभागेऽवस्थितः । स्विच्छब्दौ विकल्पितपक्षद्वयसूचनार्थौ । प्लुतिर्विचारद्वयद्योतनार्था । अथ-

**रे॒तो॒धा आ॑स॒न्म॑हि॒मान॑ आसन् । स्व॒धा अ॒वस्ता॒त्प्रय॑तिः प॒रस्ता॑त् । [13]को अ॒द्धा वे॑द॒ क इ॒ह प्र वो॑चत् । कुत॒ आजा॑ता॒ कुत॑ इ॒यं विसृ॑ष्टिः । अ॒र्वा-**

मभिप्रायः—सोऽयं प्रकाशः कश्चिच्चैतन्यपदार्थः सर्वेषां वस्तूनां मध्ये पर्यालोच्यमानो दीर्घतन्तुवत्तिर्यग्भूतो व्याप्यावभासते । अधः पर्यालोच्यमानस्तत्राप्यवभासते । उपरि पर्यालोच्यमानस्तत्राप्यवभासते । तस्मादध ऊर्ध्वं मध्ये च भासमानत्वादेकत्रैवावस्थित इति वक्तुमशक्यः । यथा घटस्योपादानभूतो मृत्पिण्डो घटस्याधऊर्ध्वमध्यभागेषु सर्वेष्वनुवर्तते, एवं तत्तत्पदार्थोपादानानि तत्तत्कार्येषु व्याप्यैव वर्तन्ते । एवमयं परमात्माऽपि स्वकार्येषु व्याप्य वर्तमानस्सन्नध आसीदित्येव वोपर्यासीदित्येव वा निश्चेतुमशक्य इति । सर्व एते पदार्थाः भूतभौतिकरूपाः पूर्वोक्तस्य विततरश्मिरूपस्य स्वप्रकाशचैतन्यस्य रेतोधाः साररूपधारिण आसन् । तत्र चिदेकरसस्य हि वस्तुनः सद्रूपं सारं तच्च सर्वे पदार्था धारयान्ति, अस्तीत्येवं स्वरूपेण सर्वेषामवभासमानत्वात् । ते च सद्रूपधारिणः सर्वे महिमानः गिरिनद्यादिरूपेण महान्त आसन् । एवं स्वधाशब्दवाच्यमायाविद्यादिशब्देनाभिधीयमाना पारमेश्वरी शक्तिरवस्तात् अधमं कारणम् । प्रयतिः, सा शक्तिः प्रयतते यस्मिन्परमात्मनि सोऽयं शक्तिप्रयत्नाधारः परमात्मा प्रयतिः । स च परस्तात्परममुत्तमं कारणम् । तावेतौ शक्तिपरमात्मानावेव जगत्कारणभूतौ प्रकृतिपुरुषाविति शास्त्रेषु व्यपदिश्येते ॥

[13] अथ षष्ठीमाह । अत्र केचिदागममुपेक्ष्य स्वस्वबुद्धिबलादन्यथाऽन्यथोत्प्रेक्षन्ते । तथाहि परमाणवो मूलकारणमिति का-

ग्देवा अस्य विसर्जनाय ॥ ७५ ॥ अथा को वेद यत आ बभूव । [14]इयं विसृष्टिर्यत आ बभूव ।

णादगौतमादयो मन्यन्ते । स्वतन्त्रमचेतनं प्रधानं जगतो मूलकारणमिति कपिलप्रभृतयः । शून्यादितो जगदुत्पत्तिरिति माध्यमिकाः । जगतः कारणमेव नास्ति स्वभावत एवावतिष्ठत इति लोकायतिकाः । ते सर्वेऽपि भ्रान्ता एव । कोऽद्धा वेद जगत्कारणं को नाम पुरुषः साक्षादवगच्छति । अनवगत्य च क इह प्रवोचत् स्वयमदृष्ट्वा को नाम जगत्कारणमीदृगिति वक्तुं शक्नोति । कोऽयमत्र वक्तव्यांश इति चेदुच्यते—इयं विविधा सृष्टिः कुत आजाता कस्मादुपादानकारणात्सर्वत उत्पन्ना, पुनरपि कुतो निमित्तादुत्पन्नेति तदिदमुपादाननिमित्तं च वक्तव्यम् । तच्च वक्तुमशक्यम् । कुतोऽशक्तिरिति चेदुच्यते—किं देवा एतद्ब्रूयुः, उतान्यः कश्चिन्मनुष्यः । न तावद्देवा वक्तुं शक्ताः ते ह्यस्य जगतो विसर्जनाय विविधसृष्टेरर्वागेव विद्यन्ते । न तु सृष्टेः पूर्वं ते सन्ति । यदा देवानामपीदृशी गतिस्तदानीं यतो जगदाबभूव तत्कारणं वक्तुमन्यः को वा वेद । देवाश्च मनुष्याश्च सृष्टेः प्रागवस्थां न तावत्प्रत्यक्षेण पश्यन्ति तदानीं स्वयमेवाभावात् । नाप्यनुमातुं शक्ताः तद्योग्ययोर्हेतुदृष्टान्तयोरभावात् । तस्मादतिगम्भीरमिदं परमार्थतत्त्वं वेदैकसमधिगम्यमित्यभिप्रायः ॥

[14]अथ सप्तमीमाह । इयं दृश्यमाना भूतभौतिकरूपा विविधा सृष्टिर्यत उपादानकारणादाबभूव सर्वत उत्पन्ना तदुपादानकारणं यदि वा किंचित्स्वरूपं धृत्वाऽवतिष्ठते यदि वा तस्य स्वरूप-

यदि वा दुधे यदि वा न । यो अस्याध्यक्षः परमे व्योमन् । सो अङ्ग वेद यदि वा न वेद । [15]किंस्विद्वनं क उ स वृक्ष आसीत् । यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदु तत् । यदध्यतिष्ठद्भुवनानि धारयन् । [16]ब्रह्म वनं ब्रह्म स वृक्ष आसीत् ॥ ७६ ॥ यतो द्यावापृथिवी नि-

मेव नास्ति तमिमं निर्णयं यः परमेश्वरोऽस्य जगतोऽध्यक्षः स्वामी सो अङ्ग वेद स एव वेद यदि वा सोऽपि न वेद । ईशित्रीशितव्यादिलौकिकव्यवहारदृष्ट्या सो अङ्ग वेदेत्युक्तम् । "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादिसर्वव्यवहारातीतपरमार्थदृष्ट्या यदि वा न वेदेत्युक्तम् । अतो मनुष्यादिषु तद्वेदनशङ्काऽपि दूरापेता ॥

[15] अथाष्टमीमाह । लोके हि गृहं चिकीर्षुः पुमान् वनं गत्वा तत्र कंचिद्वृक्षं छित्वा तदीयैः काष्ठैर्गृहं निर्मिमीते । तद्दृष्टान्तेनात्रापि यतः यस्माद्वनजन्याद्वृक्षात् द्यावापृथिवी द्युलोकभूलोकौ निष्टतक्षुः तक्षणेन निर्मितारो निर्मितवन्तः । तादृशं वनं किंस्विद्भवेत् । कश्च तादृशः स वृक्ष आसीत् । हे मनीषिणो बुद्धिमन्तः मनसा स्वकीयेन विचार्य तदिदमर्थद्वयमाचार्यसमीपे पृच्छत । किंच यत्कारणभूतं वस्तु भुवनानि सर्वांल्लोकान् स्वात्मनि धारयन्नध्यतिष्ठत् नियमनमकरोत् तदिदु तदपि वस्तु पृच्छत ॥

[16] अथ नवमीमाह । यदुक्तं मनीषिणां प्रश्नत्रयं तस्याचार्य उत्तरं ब्रूते । यस्माद्वनजन्याद्वृक्षात् द्यावापृथिव्यौ निर्मिते तद्वनस्था-

ष्टतक्षुः। मनीषिणो मनसा विब्रवीमि वः। ब्रह्मा-ध्यतिष्ठद्भुवनानि धारयन्। [17]प्रातरग्निं प्रातरिन्द्रꣳ हवामहे। प्रातर्मित्रावरुणा प्रातरश्विना। प्रातर्भगं पूषणं ब्रह्मणस्पतिम्। प्रातस्सोममुत रुद्रꣳ हुवेम।
[18]प्रातर्जितं भगमुग्रꣳ हुवेम। वयं पुत्रमदितेर्यो विधर्ता। आध्रश्चिद्यं मन्यमानस्तुरश्चित् ॥ ७७ ॥

नीयं तद्वृक्षस्थानीयं ब्रह्मैव, तस्य सर्वशक्तित्वात्। यस्योत्पाद्यस्य या सामग्र्यपेक्षिता सा सर्वा तस्मिन्विद्यते। तदेव ब्रह्म सर्वाणि भुवनानि स्वस्मिन् धारयति नियमयति च। हे मनीषिणः आचार्योऽहं मनसा निश्चित्य वः युष्मभ्यं विब्रवीमि विविधमुत्तरं ब्रवीमि ॥

[17] यदुक्तं सूत्रकारेण—"भगाय वाशिताम्" इति। गर्भधारणयोग्या वाशिता। तस्य पशोः सूक्तस्य वपायाः पुरोनुवाक्यामाह। प्रातःकालेऽग्न्यादीन्देवानाह्वयामः। प्रतिदेवं वाक्यभेदेन प्राधान्यद्योतनाय प्रातश्शब्दावृत्तिः। यत्रावृत्तिर्नास्ति तत्राप्यावृत्तिरुन्नेया ॥

[18] अथ वपाया याज्यामाह। प्रातःकाले जितं जययुक्तमुग्रं वैरिषु तीव्रं भगं देवं हुवेम आह्वयामः। कीदृशम्? अदितेः पुत्रमादित्यं, य आदित्यो विशेषेण जगतो धारयिता तमिति पूर्वत्रान्वयः। आध्राश्चित् दरिद्रोऽपि यं देवमभिमतप्रदं मन्यमानः भगं देवं भक्षीत्याह भजनं करोमीति ब्रूते, तथा तुरश्चित् कार्येषु त्वरमाणोऽपि यं भगं कार्यसाधकं मन्यमानो भजेयेति ब्रूते, तथा राजाचित् रजाऽपि यं भगं राज्यसाधकं मन्यमानो भजेयेति ब्रूते तं भगमाह्वयाम इति पूर्वत्रान्वयः ॥

राजाचिद्यं भगं भक्षीत्याह । [19]भग प्रणेतर्भग सत्य-राधः । भगेमां धियमुदवा ददन्नः । भग प्र णो जनय गोभिरश्वैः । भग प्र नृभिर्नृवन्तस्स्याम । [20]उतेदानीं भगवन्तस्स्याम । उत प्रपित्व उत मध्ये अह्नाम् । उतोदिता मघवन्त्सूर्यस्य । वयं देवाना॑ सुमतौ स्याम । [21]भग एव भगवा॑ अस्तु देवाः ॥ ७८ ॥ तेन वयं भगवन्तस्स्याम । तं त्वा भग सर्व इज्जो-

[19]अथ पुरोडाशस्य पुरोनुवाक्यामाह । हे प्रणेतः प्रकर्षेण नेतुं कुशल हे भगदेव अस्मान् कर्मणि प्रणयेति शेषः । हे सत्यराधः सत्यधन भगदेव अस्मभ्यं धनं देहीति शेषः । हे भग नोऽस्मभ्यमिमां धियं ददत् कर्मानुष्ठानबुद्धिं प्रयच्छन् उदव उत्कर्षेण रक्ष । हे भगदेव नः अस्मान् गोभिरश्वैः प्रजनय तद्युक्तान् कुर्वित्यर्थः । हे भग त्वत्प्रसादाद्वयं नृभिः पुत्रपौत्रादिभिः पुरुषैः नृवन्तः पुरुषवन्तः स्याम ॥

[20]अथ पुरोडाशस्य याज्यामाह । उतेदानीमस्मिन्कालेऽपि भगवन्तः अनेन भगेन देवेन युक्ताः स्याम । उत प्रपित्वे सायंकालेऽपि, उत अह्नां मध्ये मध्याह्नकालेऽपि, उतोदिता उदयकालेऽपि भगेन देवेन युक्ताः स्याम । हे मघवन् देव वयं सूर्यस्य तव सुमतौ स्याम अनुग्रहबुद्धौ तिष्ठेम ॥

[21]अथ हविषः पुरोनुवाक्यामाह । हे देवाः भगाख्यो देव एव भगवानस्तु तेन देवेन भगवन्तः सौभाग्यवन्तः स्याम । हे भगाख्य देव तं तादृशं त्वां सर्वइत् सर्व एव लोकः जोहवीमि आह्वयतीत्यर्थः । हे भगदेव स त्वमिह अस्मिन् कर्मणि नोऽस्माकं पुर एता पुरतो गन्ता भव ॥

हवीमि । स नो भग पुर एता भवेह । [22] समध्व-रायोषसो नमन्त । दधिक्रावेव शुचये पदाय । अर्वाचीनं वसुविदं भगं नः । रथमिवाश्वा वाजिन आवहन्तु । [23] अश्वावतीर्गोमतीर्न उषासः । वीरवतीस्सदमुच्छन्तु भद्राः । घृतं दुहाना विश्वतः प्रपीनाः । यूयं पात स्वस्तिभिस्सदा नः ॥ ७१ ॥

[22] अथ हविषो याज्यामाह—अस्य भगदेवस्य प्रसादादुषसः उषःकालदेवताः अध्वराय यज्ञनिष्पत्त्यर्थं संनमन्त समनमन्त । तत्र दृष्टान्तः—दधिक्रावेत्यश्वस्य नाम । अश्वो यथाऽऽधानकाले शुचयेऽग्निनिष्पत्तये पदाय आहवनीयायतने संभाराणामुत्तरतः पादेनाक्रमणाय संप्राप्नोति तथैवोषःकालदेवता अपि प्राप्नुवन्तु । अन्योऽपि दृष्टान्त उच्यते—वाजिनो वेगवन्तोऽश्वा यथा रथमावहन्ति, तथा नोऽर्वाचीनमस्माकमभिमुखं वसुविदं धनस्य लब्धारं भगदेवमावहन्तु इह कर्मण्यानयन्तु ॥

[23] अथ हविष एव विकल्पितां याज्यामाह । अश्वावतीः बहुभिर्गोभिर्युक्ताः वीरवतीः पुत्रपौत्रादिभिर्वीरैर्युक्ताः भद्राः कल्याणरूपाः घृतं दुहानाः घृतक्षीरादिद्रव्याणि संपादयन्त्यः विश्वतः प्रपीनाः सर्वमपि जगत्प्रकर्षेणाप्याययन्त्यः उषासः यथोक्तगुणविशिष्टा उषःकालदेवता भगस्य प्रसादात् सदं सदनं कर्मानुष्ठानस्थानं प्रत्युच्छन्तु प्रभातं कुर्वन्तु । हे उषासः यूयं स्वस्तिभिः क्षेमरूपैः फलप्रदानैः नः अस्मान् पात रक्षत ॥ अत्र विनियोगसंग्रहः—

विचक्षणा विचर्तुर९ शर्मन्नधिविसर्जनाय ब्रह्म वनं ब्रह्म स वृक्ष आसीत्तुरश्विद्देवाः प्रपीना एकं च॥

पीवोऽन्नान्ते शुक्रासस्सोमो धेनुमिन्द्रस्तरस्वाञ्छुचिमा देवो यातु सूर्यो देवीमुहमस्मि ता सूर्याचन्द्रमसा नव ॥ ९ ॥

पीवोऽन्नामग्ने त्वं पारयानाधृष्यश्शुचि नु स्तोमं विश्रयमाणो दिवो रुक्मोऽन्नं प्राणं ता सूर्याचन्द्रमसा नवसप्ततिः ॥ ७९ ॥

हरिः ओम्.

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके अष्टमप्रपाठके नवमोऽनुवाकः. अष्टमप्रपाठकस्समाप्तः.

द्वितीयाष्टकं च समाप्तम्.

ओं तत्सत्.

---

ता सूर्येति पशुद्वंद्वे चन्द्रसूर्याख्यदेवते ।
हिरण्याद्भ्यो वेहति स्यात्रासस्तत्रोपहोमकः ॥ १ ॥
प्रातरग्निमिति प्रोक्तं पशौ स्याद्भगदेवके ।
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ २ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरभूपालसाम्राज्यधुरंधरसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये अष्टमप्रपाठके नवमोऽनुवाकः

द्वितीयाष्टकं समाप्तम्.

ॐ तत्सत्.